...तोऽमलगिरिं नाम नगरीं प्रतिपद्य च । नन्दिकेश्वरमारुह्य सोमनाथोऽस्ति यत्र तु ॥
...र्शा चतुर्भुजं देवं वरदानोद्यतं शिवम् । सोमनाथं नृणां मुक्तिर्भवत्येव न संशयः ॥
...तुङ्गभद्रानदीतीरे दृष्ट्वा हरिहरं ततः । युगे युगे भुजा यस्य पतन्त्यवनिमण्डले ॥ ४७॥
...विलोक्य नराःसर्वे रम्यं हरिहरस्वपुः । भुक्त्वा भोगान्यथाकामंमुच्यन्तेवन्धनान्नराः

स्वर्गे कल्पशतं स्थित्वा मुक्तसंसारबन्धनाः ।
ततः स्वामिनमालोक्य लोकानां स्वामिनं विभुम् ॥ ४६ ॥

...मालोक्य न पश्यन्तिनिरयंजातुचिन्नराः । स्वर्गे कल्पशतंस्थित्वामुक्तसंसारवासनाः
...क्तिं च प्रतिपद्यन्ते नाऽत्रकार्याविचारणा । ततः श्रीशैलमासाद्यसिद्धगन्धर्वसेवितम्
...गिरिजावल्लभो यत्रमल्लिनाथोऽभिधानतः । उद्धर्तुमखिलाँल्लोकान्संसाराम्भोधिमध्यतः

स्वर्गे कल्पशतं स्थित्वा मुक्तसंसारबन्धनाः ।
मुक्तिं च प्रतिपद्यन्ते नाऽत्रकार्या विचारणा ॥ ५३ ॥

...तः श्रीशैलमासाद्य सिद्धगन्धर्वसेवितम् । गिरिजावल्लभो यत्र मल्लिनाथोऽभिधानतः
...उद्धर्तुमखिलाँल्लोकान्संसाराम्बुधिमध्यतः । काले काले परं ज्योतिर्यःसन्दर्शयतेस्वयम्
...विलोकयतां नृणां यमनुस्मरतामपि । दूरे तिष्ठन्ति सन्त्रस्ता दूरं निरययातनाः ॥५६॥
...र्गे लोके सुखंभुक्त्वा मुक्तसंसारबन्धनाः । मुक्तिं च प्रतिपद्यन्ते मानवानाऽत्रसंशयः

रामोऽस्ति सानुजः सार्धं जानक्याऽपि ततो गतः ।
तत्र स्नात्वा च पीत्वा च मुच्यते नरकाद्ध्रुवम् ॥ ५८ ॥

...कल्पकोटिशतं भुक्त्वा स्वर्गलोकसुखंनराः । मुक्तसंसारवर्त्मानो मुक्तियान्तिनसंशयः
...तो निवृत्य आयातः पश्यन्भीमरथीतटे । द्विभुजं विट्ठलं देवं भुक्तिमुक्तिप्रदायकम् ॥
...त्र गोदावरीजन्मस्थानं ब्रह्मगिरिर्महान् । गौतमालयमासाद्य यत्राऽऽस्तेत्र्यम्बकोहरः
...वरुणाविरुणयोर्मध्ये यत्र गोदावरीनदी । तत्र स्नात्वा च पीत्वा च ब्रह्महत्याविलीयते
...सङ्ख्यतीर्थसम्पन्नं दृष्ट्वा ब्रह्मगिरिं नराः । मुक्तिमेव प्रपद्यन्ते मुक्ताः संसारदुःखतः ॥
...गौतम्युभयतीरस्थतीर्थान्वेषणकौतुकी । ततो जगाम सूतस्तु मथुरां पापनाशिनीम् ॥
...त्र स्वायम्भुवं देवं भजन्ति सुरमानवाः । आद्यं भगवतःस्थानं महन्मुक्तिप्रदायकम् ॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्रैलोक्येशजनिस्थानं विख्यातं वेदशास्त्रयोः । नानादेवगणैर्जुष्टं द्विजर्षिगणसे
कालिन्दीकूलसंशोभि ह्यर्धं चन्द्रप्रभाकृति । सर्वतीर्थनिवासैकपूर्णमानन्दसुन्दर
गोवर्धनगिरिप्रख्यं पुण्यद्रुमलतावृतम् । द्विषड्वनं महापुण्यं विश्रान्तिश्रुतिसार
ततः काश्मीरनगरमपश्यत्प्रत्यगुत्तरम् । दृष्ट्वा धर्मधुरं क्षेत्रं कुरुक्षेत्रं समन्ततः ॥
यत्राभ्रंलिहगेहाभां पङ्क्तयः शङ्खपाण्डुराः । ता जाता धूर्जटेः स्पष्टअट्टहासदृशा
भक्तिप्रसादमालानां सुवर्णकलशैर्वृतम् । स्वः सिन्धुपतितानीव हेमपद्मानि मा
यत्र प्रासादशिखरे नीलपट्टपताकिकाः । शैवालवलया भान्ति स्वसिन्धोर्लतिका
यत्र काश्मीरमाश्रित्य नित्यं वसति भारती । नो चेद्युगपदेवेदं कथं लिखति वा

विश्रामन्त्याः सरस्वत्याश्चिरं यत्र मदालसाः ।
मृणालचञ्चवो हंसा वाहनानि चरन्त्यमी ॥ ७८ ॥

कलाविशेषं प्रहिता यत्र बोद्धुं विरिञ्चिना । ताराइव विराजन्ते हंसा याताः स
स्थलपद्मानि दृश्यन्ते करस्पर्शसुखानि च । शयनाय नितम्बिन्या यस्मिन्दानव
उपन्यासैर्द्विजातीनां यत्र न श्रूयते स्फुटम् । मूकोऽपि निर्जरो वाचा पदकल्लोल
यस्मिन्नध्वरधूमेन व्याप्तं गगनमण्डलम् । अपि च क्षालितं मेघैः कालिमानं न

गलितायाः सुधायास्तु यत्राऽध्वरमहार्चिषा ।
लाञ्छितं छद्मना स्थानं दृश्यते तुहिनत्विषि ॥ ७९ ॥
जन्माभ्यासवशादेव पठन्ति बटवः स्वयम् ।
यत्रोपाध्यायसान्निध्यमाश्रित्य सकलाः कलाः ॥ ८० ॥

यत्र ब्राह्मणपत्नीनां कङ्कणध्वनिहुङ्कृतिः । लुम्पत्यनुदिनं भ्राम्यद्भ्रमराणां च ग
यत्र ब्राह्मणपत्नीनां कपोलफलकं मुहुः । स्पृशन्समीरणो मन्दं वाति शापभया
माणिक्येश्वरनामाऽसौ यत्र शीतांशुशेखरः । वसन्त्यनुदिनं देवो वरदानाय दे
अर्चितोभूपतीञ्जित्वामणिकेशेनचाऽऽदृतः । माणिक्येश्वरइत्याख्यांतदाप्रभृतियो

राज्ञा काश्मीरदेवेशदिग्जयोत्सवकारिणा ।
असौ सुपूजितो यस्मान्माणिक्यैर्भूरिभूतिभिः ॥ ८५ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

संसेवमानं तद्वारिच्छायां शकटिकोपरि । कण्डूयमानमङ्गानि यन्ता रैक्यमपश्यत ॥
ज्ञाऽपि कथितैस्तैस्तैश्चिह्नैः परिचितं जवात् । प्रणतः सारथी रैक्यं प्रणम्यतमभाषत

सारथिरुवाच ।

कस्मिन्ब्रह्मन्किन्नामाऽसि स्वच्छन्दोऽसि निरन्तरम् ।
किमर्थमत्र विश्रान्तः किञ्च कर्तुं चिकीर्षसि ॥ ८८ ॥

श्रीशिव उवाच ।

इत्याकर्ण्य च तद्वाक्यं परमानन्दनिर्भरः । स्मृत्वा सारथिमित्यूचे वयं पूर्णमनोरथाः
रंकेनाऽपि बहुना परिचर्याविधायिना । भवितव्यं मनोवृत्तिं जानताऽस्माकमेव हि
हृदयस्थितमादाय रैक्याभिप्रायमादरात् । शनैर्निरगमद्यन्ता यत्राऽऽस्ते वसुधाधिपः
ततः प्रणम्य भूपालं यथावृत्तं न्यवेदयत् ।बद्धाञ्जलिपुटोहृष्टः सारथिः स्वामिदर्शनात्॥
ततो निशम्य तद्वाक्यं विस्मयस्मेरलोचनः । श्रद्धालुरभवद्भूपो रैक्यसम्भावनाविधौ
आदायाश्वतरीयुग्मयुक्तां शकटिकामगात् । मुक्ताहारदुकूलानि सहस्रं च गवां नृपः

गतोऽसौ तत्र यत्राऽऽस्ते योगी काश्मीरमण्डले ।
तन्निवेद्य पुरो राजा दण्डवत्पतितो भुवि ॥ ९५ ॥

मानस्य परया भक्त्या रैक्यो राज्ञे चुकोप ह । रे शूद्र! मामकं वृत्तंन जानासि दुरीश्वर!

गृहाण शकटीमेतामुत्थाप्याऽश्वतरीयुताम् ।
वस्त्राणि मुक्ताहारांश्च गाश्च दोग्ध्रीरपि स्वयम् ॥ ९७ ॥

इत्थमाज्ञप्तवान्भूपो रैक्यस्य भयमादधे । ततः शापभयाद्राजा तत्पदाम्भोरुहद्वयम् ॥

गृह्णन्भक्त्या प्रसीदेति ब्रह्मन्नित्यूचिवान्स्वयम् ॥ ९९ ॥

राजोवाच ।

भगवंस्तवमाहात्म्यमेतदत्यद्भुतं कुतः । प्रसन्नीभूय भगवन्नाख्याहि मम तत्त्वतः ॥१००

रैक्य उवाच ।

गीतानांषष्ठमध्यायं जपामि प्रत्यहं नृप! । तेनैव तेजोराशिर्मे सुराणामपि दुःसहः ॥

श्रीशिव उवाच ।

गीतानां षष्ठमध्यायं रैक्यादभ्यस्य यत्नतः । ज्ञानश्रुतिर्महीपालो मुक्तिमाप ततः सुधीः



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

रैक्योऽपि सुखमालेभे माणिक्येश्वरसन्निधौ । गीतानां षष्ठमध्यायं जपन्मोक्षम
मरालवेषमास्थाय वरदानार्थमागताः । दिवौकसोऽपि निर्जग्मुः स्वैरं विस्मयका
इममध्यायमप्येकं यो जपेत्सततं नरः । सोऽपि तत्पदवीमेति विष्णोरेव न संश
इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे गीताषष्ठा
माहात्म्ये अशीत्यधिकशततमोऽध्यायः ॥ १८० ॥

---

## एकाशीत्यधिकशततमोऽध्यायः

### शङ्कुकर्णब्राह्मणाख्यानमुखेनगीतासप्तमाध्यायमाहात्म्यवर्णनम्

श्रीभगवानुवाच ।

अथ ते वर्णयिष्यामि सप्तमाध्यायगौरवम् । यदाकर्ण्यसुधापूरपूर्तिर्भवति कर्ण
अस्तिपाटलिपुत्राख्यं दुर्गमुत्तुङ्गगोपुरम् । तत्राऽभूद्ब्राह्मणो नाम शङ्कुकर्णो
वैश्यवृत्तिं समासाद्य धनमर्जितवान्बहु । पितॄन्न तर्पयामास पूजयामास नो सु
पार्थिवान्पूजयाञ्चक्रे धनार्जनपरायणः । तुरीयपाणिग्रहणमङ्गलार्थं गृहान्तरं
तनुजैर्बन्धुभिः सार्धं सम्प्रतस्थे कदाचन । रजन्यां धर्मकल्पायां निद्रालोस्तस्य
दशतिस्म समागत्य दन्दशूकः कुतश्चन । स दष्टमात्रोऽसाध्यात्मा मणिमन्त्रौषध
क्षणैः कतिपयैरेव गतासुरभवत्ततः । पिचुमन्ददलैर्नालैरवकुण्ठितविग्रहम्
तमारोप्य तरुस्कन्धे सूनवो गृहमाययुः । ततः कालेन बहुना ततो जातः सर्प
तद्वासनानिबद्धात्मा जन्मपूर्वमनुस्मरन् । वञ्चयित्वा सुतानेतान्पूरयामि गृहा

आत्मनः कोटिसङ्ख्याकं यत्राऽऽस्ते स्थापितं वसु ।
ततो नारायणबलिं श्रद्धया परयाऽन्विताः ॥ १० ॥

कृतवन्तः परे तस्य सूनवो हि द्विजन्मनः । एकदा स्वप्नमागत्य पीडितः सर्पज

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

माषयन्मनोवृत्तं पुत्राणामग्रतः पिता। ततस्ते प्रातरुत्थाय परं विस्मयमोहिताः ॥
परेतरमाख्याय पश्यन्तस्ते निरङ्कुशाः। एकस्तत्र पितृस्नेहादुद्धर्तुमपि वाञ्छति ॥
न्यो द्रविणलोभेन निहन्तुं सर्पमीहते। इतरस्तु पितृस्नेहरसमोहितमानसः ॥ १४ ॥

किम्वा अहिमयो न स्याच्छोचन्नोदिति केवलम्।
मध्यमस्तु ततः पुत्रो वञ्चयित्वा सहोदरौ ॥ १५ ॥
केनाऽपि च्छद्मनोत्थाय जगाम निजमालयम्।
ततः शनैः समाहूय गृहिणीं गुणशालिनीम् ॥ १६ ॥

द्दालहस्तो निरगाद्यत्राऽऽस्ते पन्नगः पिता। तेनाऽविदितवित्तेन चिह्नैर्निश्चित्यतत्त्वतः
स्थानमागत्य तं हन्तुं वल्मीकं लोभबुद्धितः। भार्ययोत्सार्यते मृत्स्ना स्वयं तेन च खन्यते
खन्यमानादत्युग्रो वल्मीकादहिरुत्थितः। ततो गरलगण्डूषैर्निर्गतैरतिदुःसहैः ॥१६

गिरः स कथयाञ्चक्रे फणी फुत्कारमारुतैः ॥ २० ॥

अहिरुवाच।

कस्त्वं किमर्थमायातः कथं वा खन्यते विलम्।
केन वा प्रहितो मूढ ! तदाख्याहि ममाऽग्रतः ॥ २१ ॥

पुत्र उवाच।

पुत्रस्तेऽहं शिवोनाम हेमग्रहणकौतुकी। आगतो रात्रिलब्धस्यस्वप्नस्य तु सुविस्मितः

शिव उवाच।

इत्थमाकर्ण्य पुत्रस्य गिरं लोकविगर्हिताम्। वक्तुमारभत स्पष्टं हसन्नुच्चैःफणी तदा

सर्प उवाच।

यदिपुत्रोऽसि मे तूर्णं मामुन्मोच्य बन्धनात्। निक्षेपार्थाय संजातं पन्नगं पूर्वजन्मनः

पुत्र उवाच।

पितः ! कथं ते मुक्तिः स्यादित्याचक्ष्व ममाऽग्रतः।
परित्यज्याऽखिलं लोकमागतोऽस्मि यथा निशि ॥ २५ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पितोवाच ।

न तीर्थानि न दानानि न तपांसि न चाऽध्वराः । मामुन्मोचयितुं पुत्र प्रभवन्ति च
गीतानां सप्तमाध्यायमन्तरेण सुधामयम् । जन्तोर्जरामृत्युदुःखनिराकरणका
सप्तमाध्यायिनं विप्रं मदीये श्राद्धवासरे । भोजय श्रद्धया पुत्र ! तेन मुक्तिर्न
अन्यानपि द्विजान्वत्स! वेदविद्याविशारदान् । सम्भोजय यथाशक्ति परमश्रद्धया
इत्याकर्ण्य पितुर्वाक्यमुरगत्वमुपेयुषः । ते सर्वे सूनवोऽकुर्वन्यथादिष्टं ततः
शङ्कुकर्णस्ततः श्रीमानुत्सृज्य तनुमौरगीम् । कृत्वा विभागं पुत्राणां दिव्यं देहं
विभज्य दत्तं पित्राय द्रव्यं तत्कोटिसङ्ख्यया । तेन ते सूनवः सर्वे मुमुदुः सा
वापीकूपसरोयज्ञदेवप्रासादहेतवे । अन्नशालां ततोऽकुर्वन्पुत्रास्ते धर्मवुद्धयः हि
सप्तमाध्यायजपतो मुक्तिभाजोऽभवंस्ततः । षष्ठमिष्टतमं ज्ञात्वा निर्वाणार्पि
इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे गीतासप्तमाध्
माहात्म्यंनामैकाशीत्यधिकशततमोऽध्यायः ॥ १८१ ॥

---

## द्व्यशीत्यधिकशततमोऽध्यायः

### विप्रभावशर्मणस्तालीवृक्षरूपिणोऽष्टमाध्यायपाठादुद्धारवर्णन-मष्टमाध्यायमाहात्म्यञ्च

शिव उवाच ।

अष्टमाध्यायमाहात्म्यं शृणुवक्ष्यामि पार्वति ! । यस्यै श्रवणमात्रेण परां मुदम
आमर्दकं पुरं नाम्ना विश्रुतं दक्षिणापथि । द्विजन्मा भावशर्मेतितत्राऽऽसीद्
खादन्मांसं पिबन्मद्यं चोरयन्साधुसंपदः । रममाणः परस्त्रीभिराखेटककुतू
अत्यवाहयदत्युग्रो गरीयांसं मनोरथम् । सुहृदां विटगोष्ठ्यां च तालीफल

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पीय कण्ठपर्यन्तमजीर्णेनाऽतिपीडितः । मृतः कालेन पापात्मा जातस्तालीतरुर्महान्
तस्य च्छायामुपाश्रित्य निबिडामतिशीतलाम् ।
अभूतां दम्पती कौचिद्ब्रह्मराक्षसतां गतौ ॥ ६ ॥
देव्युवाच ।
जातीयौ किमात्मानौ किंवृत्तावित्युदीरय । कर्मणा केन वा देव ब्रह्मराक्षसता तयोः
शिव उवाच ।
वेदाङ्गतत्त्वज्ञः सर्वशास्त्रार्थकोविदः । सदाचारोऽभवत्कश्चिद्द्विजो नाम कुशीवलः
याया च तस्य कुमतिनामधेया दुराशया । स सभार्यो महादानान्याददानोऽतिलोभवान्
हिषीं कालपुरुषं हयादीननुवासरम् । अप्रयच्छन्द्विजातिभ्यो दानलब्धां वराटिकाम्
कालेन दम्पती प्रेतौ ब्रह्मराक्षसरूपिणौ । पर्यटन्तौ महीमेतां क्षुत्तृषाकुलविग्रहौ ॥११॥
शश्रमतुरागत्य मूलं तालीतरोस्ततः । कथमेतन्महादुःखमावयोरपगच्छति ॥१२॥
थं वा जायते मुक्तिर्ब्रह्मराक्षसयोनितः । इति पृष्टो गृहिण्याऽसौ ब्राह्मणः समभाषत
ब्रह्मविद्योपदेशेन विनाऽऽध्यात्मविचारणात् ।
विना कर्मविधिज्ञानात्कथं मुच्येत सङ्कटात् ॥ १४ ॥
भार्योवाच ।
कं तद्ब्रह्म किमध्यात्मं किंकर्म पुरुषोत्तम ।। एतावदुक्ते तत्पत्न्या यदाश्चर्यमभूच्छृणु ॥
ष्टमाध्यायश्लोकार्धश्रवणात्सतरुस्तदा । विहाय तालीरूपं तद्बभूव द्विजसत्तमः ॥
सद्यो ज्ञानविधूतात्मा विमुक्तः पापकञ्चुकात् ।
तन्माहात्म्याद्विनिर्मुक्तो दम्पती तौ बभूवतुः ॥ १७ ॥
तावदेवमुक्तं च दैवान्निर्गत्य तन्मुखात् । ततोऽन्तरिक्षादायातं क्वणत्किङ्किणिकं शुभम्
देवि दिव्याङ्गनावक्त्रचन्द्रमण्डलमण्डितम् । अप्सरोवदनाम्भोजभ्राम्यद्भ्रमरसङ्कुलम्
निर्मथ्यमानदुग्धाब्धिवेलाडिण्डिरपाण्डुरैः । गङ्गातरङ्गसुभगैश्चामरैरुपशोभितम् ॥
गायद्गन्धर्वसुभगं नृत्यत्सुरवधूशतम् । दिव्यं विमानमारूढौ दम्पती जग्मतुर्दिवम् ॥
त्रत्यं वृत्तममखिलमेतद्विस्मयकारकम् । ततो लिलेख मेधावी श्लोकार्धमिदमादरात्

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ययौ वाराणसीं नाम नगरीं मुक्तिदायिनीम् । आराधयितुमन्विच्छन्देवदेवं जना
स तत्र कर्तुमारेभे तपः परमुदारधीः । अत्राऽन्तरे जगन्नाथो देवदेवो जनार्दनः।

पृष्टो दुग्धाब्धिसुतया संयोज्य करसम्पुटम् ।
निद्रापथं विहायैव स्थीयते कथ्यतामिति ॥ २५ ॥

श्रीभगवानुवाच ।

काश्यां भागीरथीतीरे तपस्यतितरां द्विजः । भावशर्माऽतिमेधावी मद्भक्तिरसपूर्ण
जपन्गीताष्टमाध्यायश्लोकार्धं नियतेन्द्रियः । सन्तुष्टवानहं देवि! तदीयतपसा भृशा
चिरं विचारयन्नेव तत्तपःसदृशं फलम् । दातुमुत्कण्ठितमना वर्तेयं साम्प्रतं प्रि

पार्वत्युवाच ।

हरिः प्रसन्नभूतोऽपि चिन्तां प्राप यदि प्रभो! ।
भावशर्मा हरेर्भक्तः प्राप्तः किन्तत्फलं पुनः ॥ २६ ॥

श्रीमहादेव उवाच ।

ततः प्रसादमासाद्य प्रसन्नस्य मुरद्विषः । सुखमात्यन्तिकं प्राप भावशर्मा द्विज
लेभिरे पदवीं सर्वे तदीया अपि वंशजाः । तत्कर्मवशतो ये वै सम्प्राप्ता यातनां
एतदेवाऽष्टमाध्यायमाहात्म्यं किञ्चिदेव ते । कथितं मृगशावाक्षि! द्रष्टव्यं तु स
इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे गीताष्टमा
माहात्म्यं नाम द्व्यशीत्यधिकशततमोऽध्यायः ॥१८२ ॥

———

## त्र्यशीत्यधिकशततमोऽध्यायः

### माधवब्राह्मणकथापुरस्सरंनवमाध्यायमाहात्म्यवर्णनम्

श्रीमहादेव उवाच ।

अतः परं प्रवक्ष्यामि नवमाध्यायमादरात् । संशृणुष्व स्थिरीभूय तुहिनाचलक

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अस्ति माहिष्मतीनाम नगरी नर्मदातटे ।
तत्राऽऽसीन्माधवो नाम द्विजन्मा सं शिवो द्विजः ॥ २ ॥

...दवेदाङ्गतत्त्वज्ञः कालेकालेऽतिथिप्रियः । अर्जयित्वा बहुधनं विद्ययैव विशुद्धधीः ॥
...हान्तमध्वरं कर्तुं समारेभे कदाचन । आलम्भनार्थमानीतश्छागः पूजितविग्रहः ॥ ४॥
...ाचमूचेह सम्भुच्चैर्जगद्विस्मयकारकः । किमेतैर्बहुभिर्यागैर्विधिवद्विहितैरपि ॥ ५ ॥
...विनश्वरफलैर्जन्मजरामरणहेतुभिः । एतावत्यपि मे विप्र ! दशेयं दृश्यतामिति ॥ ६ ॥
...छागस्यैवं वचोऽतीव कुतूहलपरं जनाः । निशम्य विस्मयं याताः कृतमण्डपवासिनः ॥
...तो बद्धाञ्जलिपुटो द्विजातिस्स्तिमितेक्षणः । प्रणम्य श्रद्दधानस्तमपृच्छच्छागमादरात्

द्विज उवाच ।

किंजातीयः किमात्मा त्वं किंवृत्तमिति मे वद ।
केन वा कर्मणाऽवाप्तं छागत्वमिति कारणम् ॥ ९ ॥

छाग उवाच ।

आसम्पुरा द्विजातीनामन्वये चाऽतिनिर्मले । आहर्ता क्रतुसङ्घानां वेदविद्याविशारदः
एकदा मम गेहिन्या पुत्ररोगप्रशान्तये । छागः प्रयाचितो मत्तश्चण्डिकाभक्तिनम्रया ॥
ततो निहन्यमानस्य चण्डिकामण्डपस्थले । छागस्य जननी मां तु शशाप ब्रह्मवादिनी
अशास्त्रीयाध्वना पाप मत्सुतं यज्जिघांससि। द्विजात्यधम तेन त्वमजायोनिमवाप्स्यसि
ततोऽहं प्रेत्यकालेन छागोऽभूवं द्विजोत्तम! । निस्तीर्य चानेकविधा योनिसंतापयातनाः
जातिस्मरत्वमप्यस्ति पशुयोनिमुपेयुषः ॥ १४ ॥

विप्र उवाच ।

त्वदीयजन्मशुश्रूषाकुतूहलरसोन्मुखम् । मनःसर्वान्द्विजानेतानपि तत्कथयाऽखिलम् ॥

छाग उवाच ।

कदाचिन्मर्कटोऽभूवमाहितुण्डिकशिक्षया ॥ १६ ॥
क्रीडद्भिर्वीक्षितो डिम्भैर्नृत्यन्प्रतिगृहाङ्गणे । उदारानात्मनो दारान्विलोकयतनयानपि ॥
क्रियापराङ्मुखो जातस्त्यक्तनर्तनसम्भ्रमः । ततोवर्तुलदण्डैश्च दुःसहैराहितुण्डिकः ॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मामुच्चैस्ताडयाञ्चक्रे रुषा लोहितलोचनः । ततोऽहं मूर्च्छितोऽभूवं क्षरत्क्षतज
आजिघ्रन्नन्नमुदकमगमं कालधर्मताम् । ततोऽहमासीच्छुनकः परिभ्राम्यन्गृहे गृ
कुक्षिम्भरिरहं मार्गे त्यक्तोच्छिष्टान्नभक्षकः । कदाचिदविशंश्चास्तन्नातमवेश्ममहा
बुभुक्षितो भक्षयितुं स्थालीस्थापितमोदनम् । जिघ्रन्भूमितलंपश्यन्दिशो दशशनै
शंकमानोजनरवात्पार्श्वे च विलिहन्निव । ततः कदाचिदागत्य वीक्षितस्तनुजै
जायया च जरत्याऽहं ताडितो लगुडादिभिः । ततो भग्नकटिर्यातो बहुशोणित

निर्जगाम बहिर्गेहात्कथंचिन्मूर्च्छयाऽऽकुलः ।
अङ्गेषु पूतिगन्धेषु क्रिमिगर्भेषु कालतः ॥ २५ ॥

ततः कदश्वतां प्राप्तः शौण्डिकस्य च वेश्मनि । अश्वोऽभवमहं विद्वन्मृतःकालक्र
कदाचिच्चत्वरे तेन समानीतो जनाकुले । विक्रयाय जरालीढपतयालुरदावलिः
जायया द्वारकायात्रां कर्तुमुद्यतया सकृत् । मौल्येनाऽल्पीयसा क्रेतुं तुरङ्गं चेप्स

जगृहेऽयं तया दाम्ना ह्यल्पेन वसुना जरन् ।
गन्तुं चारभ्य तद्वित्रैः पुत्रैरारुह्य मां समम् ॥ २६ ॥

...शनैः सरस्तीरे मग्नोऽहं गाढकर्दमे । तत्राऽहं कुटिलग्रीवश्चापातं कर्दमान्तरे
ताड्यमानो मुहुः पुत्रैर्लगुडोपलपाणिभिः । उत्थाप्यमानोबहुधा प्राणान्मोचितवा

ततो निश्चित्य मां तत्र मृतं भग्नोद्यमाः सुताः ।
आक्रुश्य मातरं दीनां प्रावृत्य निर्ययुर्गृहम् ॥ ३२ ॥

ततः संप्रेत्य बहुना कालेन च्छागतां गतः । निस्तीर्णानेकहीनोच्चयोनिसन्तापया

द्विज उवाच ।

किमनेन महाछाग ! दुःखजातेन नित्यशः । यथावदञ्जसा मह्यं सुखमात्यन्तिकं

छाग उवाच ।

आश्चर्यं कथयिष्यामि पुनरन्यदपिद्विज !। स्वस्थमापृच्छमानस्यतवाऽस्तियदिकौ
अस्ति नाम्ना कुरुक्षेत्रं नगरं मोक्षदायकम् । सूर्यवंशोऽभवत्तत्र चन्द्रशर्मा महीप
सूर्योपरागसमये श्रद्धया परयाऽन्वितः । दानं सकालपुरुषं दातुं समुपचक्रमे ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ाहूय द्विजन्मानं वेदवेदाङ्गपारगम् । स्नातुं पुण्योदकैः पुण्यैर्ययौ सार्द्धं पुरोधसा॥
अथोच्चैः कालपुरुषो वाचमूचे हसन्निव ॥ ३८ ॥

कालपुरुष उवाच ।

नैव प्रगृह्णन्ति क्षेत्रे चाऽण्वपि किञ्चन । सूर्योपरागसमये कुरुक्षेत्राभिधे स्थले ॥
च कालपुरुषं जिघृक्षसि कथं द्विज !। ज्ञात्वाऽपि निश्चितं सर्वमेतत्पीतककारकम्
प्रवर्तसे कथं कर्तुं धनलोभान्धया धिया ॥ ४१ ॥

छाग उवाच ।

माकर्ण्य तद्वाक्यं जगद्विस्मयकारकम् । किमनेन महादानभयेनेत्यवदद्‌द्विजः ॥४२
विधमहादानपातकागाधवारिधिम् । जानामि तरितुं सम्यगुपायमहमेव हि ॥४३॥
: स्नात्वा महीपालः परिधाय च वाससी । शुचिः प्रसन्नहृदयः सितमाल्यानुलेपनः
लम्ब्य कराम्भोजं पार्श्ववर्तिपुरोधसः । समाययौ सेव्यमानः स तत्कालोचितैर्जनैः
ागत्य च भूपालः स प्रादात्कालपूरुषम् । यथोचितेनविधिना तस्मैभक्त्याद्विजन्मने
भेद्य कालपुरुषहृदयं निर्दयोदयः । पापात्मा निर्ययौ कश्चिच्चाण्डालो रक्तलोचनः॥
किञ्च प्रापितकालस्य परनिन्दारसोत्सवे ।
निन्दा चाण्डालिका देहपार्श्वमागाद्‌द्विजन्मनः ॥ ४८ ॥
चाण्डालयुगलं निर्गत्यारुणलोचनम् । ततः सञ्चरितुं चक्रे प्रसह्याऽङ्के द्विजन्मनः॥
ानां नवमाध्यायं जपन्नेव हृदि स्थितः । कम्पमानं द्विजं किञ्चित्तूर्णींपश्यतिभूपतौ
अन्तर्निद्राणगोविन्दं कम्पमानमिवाऽम्बुधिम् ।
मरुद्धान्दोलनैर्विद्वान्द्विजन्मा पापसंश्रयम् ॥ ५१ ॥
ो गीताक्षरोद्भूतैर्वैष्णवैः परिपीडितम् । पलायमानंचाण्डालयुगलं निष्फलोद्यमम्
निश्चक्राम वेगेन द्विजातेः पार्श्ववर्ति यत् । शरीरे वर्त्तमानं च परनिन्दारसोत्सवे॥
यं कलितवृत्तान्तः प्रत्यक्षं क्षितिवल्लभः । पर्यपृच्छद्‌द्विजन्मानं विस्मयस्मेरलोचनः॥

राजोवाच ।

मापदियं घोरा निस्तीर्णा महतीत्वया । कं मंत्रं जपताविप्र कस्वा संस्मरतासुरम्



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कः पुमान्का च सा योषित्कथमेतावुपस्थितौ । कथंवशान्तिमापन्नावित्युदीर

द्विज उवाच ।

चाण्डालमूर्तिमासाद्य मूर्तकिल्बिषमुल्बणम् । योषिन्मूर्त्तिमयी निन्दाद्वयमेतद्वै

गीताया नवमाध्यायमन्त्रमाला मया स्मृता । तन्माहात्म्यमिदंसर्वं त्वमेवहि

छाग उवाच ।

गीताया नवमाध्यायं जपामि प्रत्यहं नृप !। निस्तीर्णाश्चापदस्तेन कुप्रतिग्रहस

अभ्यस्य नवमाध्यायं राजा तस्माद्द्विजन्मनः । तावुभावपिलेभातेपरांनिर्वृतिमु

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे गीता ध्यायमाहात्म्ये त्र्यशीत्यधिकशततमोऽध्यायः ॥ १८३ ॥

---

# चतुरशीत्यधिकशततमोऽध्यायः

## गीतादशमाध्यायमाहात्म्यवर्णनम्

देव्युवाच ।

सर्वज्ञ! सर्वचैतन्य सर्वेश्वर गिरां गुरो !। धन्याऽस्मि शिवमान्येनदृश्यमानेन

निरूपितमिदं पुण्यं नवमाध्यायवैभवम् । अनेकविस्मयस्वादुकथानकमयं मधु

शृण्वन्त्या मम देवेश न तृप्तिर्जातु जायते । अकुण्ठाश्रवणोत्कण्ठा वर्द्धते वृ

असीमामहिमाम्भोधेर्गीतानां श्रुतिजीवितम् ।

तत्राऽपि दशमाध्यायं प्रधानं मुनयो जगुः ॥

तमुद्दिश्य महाध्यायमभिधेहि कथानकम् ॥ ४ ॥

शिव उवाच ।

शृणु सुश्रोणि निश्रेणीस्वर्गदुर्गस्यदुर्ल्लभाम् । सीमामिवप्रभावाणांपावनींपरमां

आसीत्काशीपुरे विप्रः पुण्यकीर्त्तिपरायणः ॥ ६ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

[श]ान्तचेता निर्मुक्तहिंसाकार्कश्यसाहसः। निवृत्तिनिरतो नित्यं जितेन्द्रियतया तथा
धीरधीरितिविख्यातो नन्दीव मयि भक्तिमान्।
निस्तीर्णनिगमाम्भोधिः सर्वशास्त्रार्थकोविदः॥ ८॥
[अ]थ ध्यानपराधीनचेतसः प्रतिगच्छतः। अन्तरात्मनि निर्मग्नमनसस्तत्त्वचक्षुषः॥९॥
[हस्त]ावलम्बनं तस्य धावन्प्रीत्या ददाम्यहम्। कदाचन चमत्कारकारकं विमना मुनिः
[स्व]चान्तःकिञ्चिन्नासाग्रेपरमानन्दमेदुराम्। दृशमासाद्यनिद्राणकरणोऽयमिवाऽऽस्थितः
[आ]धाय विशालाक्षि विशालां द्वारदेहलीम्। अशेतनिशिनिःशङ्कं तावल्लम्बेक्षणः क्षणम्
[मा]मपृच्छद्भृङ्गिरिटिः प्रणम्य पादपङ्कजम्। अनेन विधिना केन विहितं तव दर्शनम्
[क]स्तप्तं हुतं जप्तं किमनेन महात्मना। दत्ते प्रतिपदं देवो यस्य हस्तावलम्बनम्॥१४
अयं न लभते गन्तुं कस्मादस्मात्पुराद्बहिः।
यदृच्छया यदा काशीसीमामुल्लङ्घ्य गच्छति॥ १५॥
न पश्यति तदा सर्वान्पार्श्वस्थानपि देहिनः।
अत्र हेतुमहं ज्ञातुमिच्छामि स्वामिभाषितम्॥ १६॥
[अ]नुग्राह्योऽस्मि चेद्वक्तुं युक्तं चेत्तदुदीरय। इमं भृङ्गिरिटेः प्रश्नं समाकर्ण्याहमूचिवान्
[क]दाचिदासं कैलासे पार्श्वे पुन्नागकानने। रणत्खेचरसुश्रोणिपूर्णस्तवककानने॥
[क]लकण्ठकुलालापकल्लोलितदिगन्तरे। गरुत्मदादिदात्यूहसमूहस्वरसंकुले॥ १९ ॥
[स]मद्दारुघटीयन्त्रप्रोल्लसद्बिदुदन्तुरे। प्रबुद्धसारणिप्रान्तकदलीकन्दलालये॥ २०॥
[क]स्तूरीहरिणोपेतकिन्नरस्वरमोहिते। रोमन्थमन्थरापाङ्गैर्मृगैः क्वाऽपि निषेविते॥२१॥
[ह]सैः कीरेषु पाण्डित्यकुर्वाणैः संकुले शुकैः। निर्ह्रादिकणिनीरन्ध्रसमीरणविलोडिते
[म]ाधवीपुष्पनिर्यासशीधुक्षीबमधुव्रते। उन्मीलत्त्रिवलीपुष्पगुच्छसौरभनिर्भरे॥ २३॥
[प्र]ोत्फुल्लबकुलामोदमदमन्थरषट्पदे। सोमादुद्भूतपीयूषक्षालितक्षितिमण्डले॥ २४॥
[अ]ध्यास्य वेदिकामेकामहं क्षणमवस्थितः। उद्दण्डशाखिसङ्घट्टस्फुटन्मन्थामुखोत्करैः
[प्र]कम्पिताचलच्छायो ववौ चण्डसमीरणः। पश्चादभून्महाघोषो निर्घोषितदरीतटः॥
[अ]वातरत्ततः कश्चित्पक्षी गगनगह्वरात्। शारदानीरदच्छायः कज्जलानामिवोच्चयः॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तमसामिव सङ्घातः पक्षच्छेदीव पर्वतः । अवष्टभ्य क्षितिं पद्भ्यां पक्षी मां प्रणन

आनीय पद्ममम्लानमसौ मत्पादयोर्व्यधात् ।
अथाऽसौ स्पष्टया वाचा पक्षी स्तोत्रमुदीरयत् ॥ २९ ॥

पक्ष्युवाच ।

जय देव चिदानन्द सुधासिन्धो जगत्पते ! । सदा सद्भावनासङ्गकल्लोलानन्तविक्रा
अद्वैतवासनामत्या मलत्रयविवर्जित । जितेन्द्रियपराधीनसमाधिप्राप्यविग्रह ।
निरुपाधेर्विनिर्मुक्तनिराकारनिरामय ! । निःसीम निरहंकार निरावरणनिर्गुण !
शरणागतसन्त्राणप्रवीणचरणाम्बुज ! । भीममालमहाव्यालज्वालादग्धमनोभ
कुठारभिन्नदैत्येन्द्रगण्डूषितमहाविभो ! । त्रिपुरप्रमदाभालसिन्दूरोद्धूलिमार्जन
कात्यायनीकुचाम्भोजवरकुङ्कुमचर्चित ! । नमः प्रमाणदूराय नमः प्रमतिरूपिणे
नमश्चैतन्यनाथाय नमस्त्रैलोक्यरूपिणे । वन्दे तव पदाम्भोजं योगिप्रवरचुम्बितन
अपारभवपाथोधिपारावतरणाद्भुतम् । वाचस्पतिरपि स्तोत्रे भवतो न प्रगल्भते
सहस्रवदनस्याऽपि फणीन्द्रस्य न चातुरी । त्वद्वर्णने महादेव कोऽहमल्पमतिः

श्रीशिव उवाच ।

स्तोत्रमेतत्समाकर्ण्य कृतं तेन पतत्त्रिणा । तमवोचमहं कोऽसि कुतस्त्योऽसि कि

हंसेन सदृशः कायो वर्णः काकेन सन्निभः ।
प्रयोजनं कमुद्दिश्य प्राप्तोऽसीह तदुच्यताम् ॥ ४० ॥

इति पक्षी मया पृष्टः प्रश्रयानतकन्धरः । जगाद श्लक्ष्णया वाचा पक्षी वाक्यवि
देवेश धूर्जटे विद्धि मां मरालं स्वयम्भुवः । कर्मणा येन मे कार्ष्ण्यं जातमाधुनिकं
तदाकर्णय सर्वज्ञ पृष्टं यदि तदुच्यते । मानसात्सरसः पृथ्वीं यातः प्राप्तोऽस्मि
सौराष्ट्रनगरादारात्सरसिस्फुटदम्बुजे । बालेन्दुःखण्डधवलान्मृणालकवलानहम्
आदाय बलमाश्रित्य निरगां गगनं द्रुतम् । विहायसस्ततस्तस्मादकस्मादपतम्
अथ मोहपरीतात्मा सर्वथा विकलेन्द्रियः । वेपमानवपुर्मोहात्स्पृष्टः शीतैः समीर
प्रबुद्धः पतने हेतुमपश्यन्नात्मनस्तदा । अहो किमेतदापन्नमद्य पातः कथं मम

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कालिमा येन कायेऽस्मिन्पक्ककर्पूरपाण्डुरे ।
इत्यहं विस्मयाविष्टो यावत्कुर्वे विचारणम् ॥ ४८ ॥

ावदम्बुरुहाद्वाणीमश्रौषमहमीदृशीम् । उत्तिष्ठ हंस वक्ष्यामि कारणं पातकार्ष्ण्ययोः॥
थोत्थाय समागत्य मया मध्ये सरोवरे । दृष्टा राजीविनी रम्या राजीवैः पञ्चभिर्युता
त्कारणं प्रष्टुमारेभे कार्ष्ण्यस्य पतनस्य च । अथ तत्र घनश्यामान्स्वर्णवर्णाम्बरावृतान्
तुर्भुजान्गदाशङ्खचक्रपङ्केरुहायुधान् । किरीटहारकेयूरकुण्डलद्युतिचित्रितान् ॥५२॥
द्राक्षमन्तरिक्षस्थान्पुरुषानयुतानि षट् । नत्वा प्रदक्षिणीकृत्य पञ्चपद्मां सरोजिनीम्

आत्मीयं पातमारभ्य पृष्टं तदखिलं मया ।

पद्मिन्युवाच ।

कलहंस ! गतोऽसि त्वं मां विलङ्घ्य विहायसा ॥ ५४ ॥

न पातकयोगेन पतितोऽसि महीतले । तेनैव कालिमा काये पक्षिसत्तम ! लक्ष्यते॥
भवन्तं पतितं वीक्ष्य कृपापूर्णेन चेतसा । मध्यमेनाऽमुनाऽब्जेन वदता जातसौरभम्
आघ्राय षट्पदाः षष्टिसहस्राणि दिवं ययुः । एते ये भवता दृष्टा नीलोत्पलसमत्विषः
सर्वे ते सप्तमेऽतीते जन्मन्यासन्मुनेः सुताः । अस्यैवसरसस्तीरे तेपुस्ते परमं तपः॥
कदाचित्कामिनी काचिच्चम्पकस्तवकस्तनी । चलापाङ्गकलाकान्ततरङ्गितरसालिनी ॥

नासामुक्ताफलज्योत्स्नाचुम्बितस्मितदीधितिः ।
वीणां विन्यस्य कुचयोर्वनेऽस्मिन्मधुरं जगौ ॥ ६० ॥

गायन्त्याःस्वरमाकर्ण्य ब्राह्मणा हरिणा इव । तां समागत्य ते सर्वे सममेव व्यलोकयन्
मया दृष्टा ममैवेयमित्यूचुस्ते परस्परम् । मुष्टामुष्टि ततस्तेषां भ्रातॄणामभवद्रणः ॥६२

अन्योन्यमुष्टिनिष्पिष्टवक्षसस्त्यक्तजीविताः ।
ते भुक्त्वा निरयान्घोरान्बभूवुः सारसा भुवि ॥ ६३ ॥

तदा ते श्वापदाश्चक्रुर्दग्धा वन्येन वह्निना । ततो मातङ्गतामेत्य पथिपान्थानघातयन् ॥
वने विषोदकं पीत्वा ते ययुर्यममन्दिरम् । खरोष्ट्रकपिमार्जारजन्मान्यासाद्य च क्रमात्
ततो मधुव्रता जाता वर्द्धन्तेऽत्र सरोवरे । अद्य मे गन्धमाघ्राय प्रापुस्ते वैष्णवं पदम्



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

श्रृणु पक्षीन्द्र वक्ष्यामि येनमय्यस्ति वैभवम् । एतस्माज्जन्मनः पूर्वंतृतीयेजन्मनि
सरोजवदना नाम द्विजातेः कन्यकाऽभवम् । पातिव्रत्यैकनिरता गुरुशुश्रूषणे
कदाचित्सारिकामेकां पाठयन्त्यविलम्बितम् ।
सारिका भव पापे त्वं पत्या शप्ताऽस्मि कुप्यता ॥ ६९ ॥
प्रेत्य सारित्वमासाद्य पातिव्रत्यप्रसादतः । मुनीनामेव सदने कन्या काचित्पु
गीतानां दशमाध्यायं विभूतिरितिविश्रुतम् । प्रातः पठति विप्रोऽसावश्रौषं तम
कालेन सारिकादेहमहं हित्वा विहङ्गम ! । दशमाध्यायमाहात्म्यादप्सराश्चाभव
पद्मावतीति विख्याता पद्माया दयिता सखी । कदाचनमया यान्त्याविमानेनवि
एतत्सरोवरं रम्यं विलोक्य विमलाम्बुजम् । अवतीर्य जलक्रीडा यावदारभ्यते
दुर्वासास्तावदायातो विवस्त्रा तेन वीक्षिता । तद्भयात्पद्मिनीरूपं धृतमेतन्मया
पद्भ्यां पद्मद्वयं चैव द्वयं हस्तद्वयेन च । मुखेन पञ्चमाम्भोजमिति पञ्चाम्बुजा
दृष्टा तेन मुनीन्द्रेण कोपज्वलितचक्षुषा । अनेनैव स्वरूपेण तिष्ठ पाप शतं समा
इतिशापं समुत्सृज्य सचैवाऽन्तर्दधेक्षणात् । विभूत्यध्यायमाहात्म्याद्वाणीमेनवि
च्छिलङ्घनमात्रेण पतितोऽसि महीतले । अद्य शापनिवृत्तिर्मे तिष्ठतस्ते खगोत्त
निशामय मया गीयमानमध्यायमुत्तमम् । यस्याऽऽकर्णनमात्रेण त्वमद्यैव वि

पक्ष्युवाच ।

इत्यसौ दशमाध्यायं पपाठ श्लक्ष्णया गिरा ।
तमाकर्ण्य तया दत्तमादाय च सरोरुहम् ॥ ८१ ॥
मया समर्पितं तुभ्यं पद्मिन्या पद्ममुत्तमम् । इत्युक्त्वा स जहौ देहं तदद्भुतमिव

भृङ्गिरिटिरुवाच ।

पुरातने भवे कोऽयं ब्रह्महंसोऽभवत्कथम् । तवाऽग्रतः कुतो हेतोरुत्ससर्ज

श्रीशिव उवाच ।

इतिभृङ्गिरिटेर्वाक्यमाकर्ण्याऽहं तदाऽब्रवम् । द्विजवेश्मनि पूर्वस्मिञ्जन्मन्ययमजा
सुतपाइतिविख्यातो ब्रह्मचारी जितेन्द्रियः । वसन्गुरुकुले कुर्वन्वेदाध्ययनम

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

हशुश्रूषणं सम्यग्विदधाति च भक्तितः। शयानस्यगुरोःशय्यांनिद्रितःसपदाऽस्पृशत्
न पापेन तिर्यक्त्वमयं स्वर्गेऽपि लब्धवान्। पद्मयोनिमरालानां मध्ये जातस्ततो द्विजः
स्मिञ्जन्मन्यमुष्येह पुराऽस्मल्लोकनावधि। गीतानांदशमाध्यायं नलिन्याकथितन्ततः
ाकर्ण्य विहगो लेभे ब्रह्मज्ञानमनुत्तमम्। सोऽयं विप्रकुले जातो दशमाध्यायवैभवात्
न्माभ्यासवशादस्य शिशोरपि मुखाम्बुजात्। गीतानांदशमाध्यायः समुल्लसतिसर्वदा
दर्थपरिणामेन सर्वभूतेष्ववस्थितम्। शङ्खचक्रधरं देवमयं पश्यति सर्वदा ॥ ९१ ॥

यस्मिन्यस्मिन्यदैवाऽस्य दृष्टिः स्निग्धा शरीरिणी।
स स मुक्तो भवेत्सर्वः सुरापो ब्रह्महाऽपि वा ॥ ९२ ॥

द्विज्ञाय मया विप्रः परमात्मस्वरूपिणा। इदं नगरमानीतो मुक्तिक्षेत्रं स्वभावतः ॥

अत्रत्यानां मनुष्याणां मुक्तिः करतले स्थिता।
तेनाऽस्य दृष्टिपातेन विशेषोऽन्यो न जायते ॥ ९४ ॥

ददामि वहिर्गन्तुमहमस्य पुरा कृतम्। दशमाध्यायमाहात्म्यात्तत्त्वज्ञानं सुदुर्लभम् ॥
ब्धमेतेन मुनिना जीवन्मुक्तिरियन्तथा। तेनाऽस्य चलतो हस्तं ददामि पथि गच्छतः
शमाध्यायमहिमा भृङ्गिरिटे महानयम्। इति भृङ्गिरिटेरग्रे कथितं यत्कथानकम् ॥

तवेदमत्र कथितं सर्वपापप्रणाशनम्।
नरो वाऽप्यथवा नारी योऽपि कोऽपि च वा पुनः ॥ ९८ ॥
अस्य श्रवणमात्रेण सर्वाश्रमफलं लभेत् ॥ ९९ ॥

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे गीतादशमाध्याय-
माहात्म्ये चतुरशीत्यधिकशततमोऽध्यायः ॥ १८४ ॥

---

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# पञ्चाशीत्यधिकशततमोऽध्यायः

## विश्वरूपाभिधैकादशाध्यायमाहात्म्यवर्णनम्

देव्युवाच ।

इतिहासोऽयमीशाने श्रेयसां साधनं परम् । आकर्ण्य करुणापूर्ण मम काङ्क्षा
एकादशस्य माहात्म्यमध्यायस्य कथाश्रयम् । व्यावर्णय विरूपाक्ष वक्तृणां प्रथ

ईश्वर उवाच ।

आकर्णय कथां कान्ते ! गीतावर्णनसंश्रयाम् ।
विश्वरूपाभिधानस्य माहात्म्यमपि पावनम् ॥ ३ ॥
अध्यायस्य विशालाक्षि ! वक्तुं तावन्न शक्यते ।
सहस्राणि कथाः सन्ति तत्रैका कथ्यते मया ॥ ४ ॥

प्रणीतायास्तटे नद्या मेघङ्करमिति श्रुतम् । नगरं गरिमाधारं तुङ्गप्राकारगोपु

विशालाश्रमशालासु स्वर्णस्तम्भविभूषितम् ।
श्रीमद्भिः सुखिभिः शान्तैः सदाचारोर्जितेन्द्रियैः ॥ ६ ॥

अधिष्ठितं जवैश्चारुशृङ्गाटकमनोहरम् । मणिस्तम्भस्फुरत्स्वर्णापर्णचत्वरशो
पताकाकिङ्किणीक्वाणकदम्बककलस्वरम् । वेदाध्ययननिर्घोषवाचालितदिग
तूर्यसङ्घोषणाकीर्णं विशालव्योममण्डलम् । पताकापल्लवोद्भूतवातनिर्जितक
राजमार्गवरद्वारनारीमञ्जीरशिञ्जितैः । वल्लकीवेणुकैर्गीतैर्भाति वाजीन्द्रहेषितैः

प्रेक्षमाणमिवाभीक्ष्णं दिक्पालानां पुरैः समम् ।
आस्ते जगत्पतिर्यत्र शार्ङ्गपाणिर्विराजितः ॥ ११ ॥

मूर्तिमत्परमं ब्रह्म जगल्लोचनजीवितम् । लक्ष्मीनयनराजीव पूजिताकारगौरव
त्रिविक्रमवपुर्मेघश्यामलः कोमलद्युतिः । श्रीवत्सवक्षाराजीववनमालाविभूषितः
अनेकभूषणोपेतः सरत्नइव वारिधिः । चलत्सौदामिनीदामसान्द्रमेघसमद्युतिः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तस्याऽऽस्ते मुकुटे साक्षाच्छार्ङ्गपाणिः परः पुमान्।
तं दृष्ट्वा मुच्यते जन्तुर्जन्मसंसारबन्धनात् ॥ १५ ॥

[त]स्मिन्पुरे महातीर्थं विद्यते मेखलाभिधम्। यत्र स्नात्वा नरैर्नित्यं प्राप्यते वैष्णवम्पदम्
[त]त्र वीक्ष्य जगन्नाथं नरसिंहं कृपार्णवम्। सप्तजन्मार्जिताद्घोरान्मुच्यते दुष्कृतान्नरः
[मे]खलायां गणाध्यीशं विलोकयति यो नरः। स निस्तरति विघ्नानि दुस्तराण्यपि सर्वदा

ब्रह्मचर्यपरो दान्तो निर्ममो निरहङ्कृतिः ॥ १८ ॥

[त]स्मिन्मेघङ्करे कश्चिदभूद्‌ब्राह्मणसत्तमः। सुनन्दइतिविख्यातो वेदशास्त्रविशारदः॥१६
[व]शीकृतेन्द्रियग्रामो वासुदेवपरायणः। देवस्य शार्ङ्गिणः पार्श्वे गीताध्यायमिमं प्रिये!
[ए]कादशं पठत्येष विश्वरूपप्रदर्शनम्। अध्यायस्य प्रभावेण ब्रह्मज्ञानमवाप सः ॥२१॥
[पर]मानन्दसन्दोहश्लाघ्यसम्वित्समाधिना। प्रत्यङ्मुखेन्द्रियतया निश्चलांस्थितिमीयुषा
[स]ततं स्थीयते तेन जीवन्मुक्तेन योगिना। एकदा स महायोगी सिंहाराशिस्थिते गुरौ
[गो]दावरीतीर्थयात्रां विधातुमुपचक्रमे। प्रथमेऽह्नि समागत्य विरजं तीर्थमुत्तमम् ॥२४

नाभिमारभ्य तीर्थेषु स समभ्यर्च्य देवताम्।
मज्जन्मज्जज्जगद्धात्रीं कमलां स व्यलोकयत् ॥ २५ ॥

[तां] सम्पूज्य महामायां सर्वकामफलप्रदाम्। तारातीर्थे ततःस्नात्वा कपिलासङ्गमेततः
[अ]ष्टतीर्थमसौ चक्रे विधाय पितृतर्पणम्। कुमारीशं शिवं नत्वा कपिलाद्वारमाययौ॥
[त]त्र निर्मज्ज्य निर्धूतप्राग्जन्मान्तरदुष्कृतः। सम्पूज्य नत्वा श्रुत्वा च देवं वै मधुसूदनम्
[उ]षित्वा तत्र तां रात्रिं प्रागात्प्रातः सह द्विजैः। नरसिंहवने तत्र तीर्थे रामस्य दीर्घिका

प्रह्लादपूजितः साक्षादास्ते यत्र नृकेसरी ॥ २६ ॥

[तं] दृष्ट्वा देवदेवेशं पूजयित्वा तु भक्तितः। तत्र तं दिवसं नीत्वा स ययावम्बिकापुरम्॥
[अ]नुग्रहेण भक्तानामम्बिका तत्र तिष्ठति। पूरयन्ती मनुष्याणां वाञ्छितान्यखिलान्यपि
[पू]जयित्वाऽम्बिकां भक्त्या पुष्पगन्धानुलेपनैः। उपहारैश्च विविधैः स्तोत्रैः प्रणमनैरपि

विप्रस्तस्मात्पुरा प्राप्तः कण्ठस्थानाभिधं पुरम्।
यत्राऽऽस्ते परमाशक्तिर्महालक्ष्मीर्महाद्युतिः ॥ ३३ ॥

३८—

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तामवेक्ष्य सुधाभानुभास्करद्युतिमण्डलाम् । संसारतापविच्छेदपद्मपीयूषवा
योगिराजहृदम्भोजराजहंसनिषेविताम् । अनाहतमहानादमयीमद्वयरूपिणीम् ।
महालक्ष्मीं भगवतीं वाञ्छितार्थप्रदायिनीम् । आराध्य भक्तिभावेनचेतसास
विवाहमण्डपं प्राप पुरं विप्रैः समन्वितः । पुरे तत्र प्रतिगृहं वासस्थानमया
न लेभे वसतिं स्थातुं गेहे कस्मिन्नपि द्विजः । दर्शितं ग्रामपालेनविशालंवास
प्रविश्य वसतिं चक्रे ब्राह्मणः सङ्गिभिःसह । ततः प्रभाते विमले सुनन्दोऽसौ
वहिरालोकयाञ्चक्रे वासगेहान्निजंवपुः । अध्वन्यानखिलान्यत्र जातान्काऽपि
गम्यमानः समायान्तं ग्रामपालो ददर्श सः । तं बभाषे ग्रामपाल आयुष्मान्

भागधेयवतां पुंसां पुण्यः पुण्यवतामसि ।
प्रभावो विद्यते वत्स कोऽपि लोकोत्तरस्त्वयि ॥ ४२ ॥

क्व प्रयाताः सहायास्ते कथं तत्सदनाद्बहिः । तत्पश्य मुनिशार्दूल कथयामि

किन्तु नाऽन्यं त्वया तुल्यं पश्यामीह तपस्विनम् ।
किं जानासि महामन्त्रं कां विद्यामवलम्बसे ॥ ४४ ॥
कस्य देवस्य कारुण्याच्छक्तिर्लोकोत्तरा त्वयि ।
तत्कारुण्यवशात्तिष्ठ ग्रामेऽस्मिन्ब्राह्मणोत्तम ! ॥ ४५ ॥

शुश्रूषामखिलामेव भगवंस्ते करोम्यहम् । इति सम्वासयामास तस्मिन्ग्रामे मु
परिचर्यां च तस्याऽसौ भक्त्याचक्रे दिवानिशम् । दिवसेषुप्रयातेषु सप्ताष्टसु स
प्रातरागत्य तस्याग्रे रुरोद भृशदुःखितः । अद्य मे भाग्यहीनस्य गुणवान्भक्ति
जाज्वल्यमानदंष्ट्रेण भक्षितो निशि रक्षसा । इत्येवं रक्षकेणोक्तं तं पप्रच्छ स

काऽऽस्ते स राक्षसः पुत्रो भक्षितस्ते कथं वद ॥ ४६ ॥

ग्रामपाल उवाच ।

वर्तते नगरे घोरः पुरुषादो निशाचरः ॥ ५० ॥

स खादति नरानेत्य नित्यं नगरगोचरान् । स सर्वैर्नागरैस्त्र प्रार्थितः पुरुषै

रक्ष राक्षस नः सर्वान्ग्रासं ते कल्पयामहे ॥ ५१ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पथिका निशि निद्रन्ति ये च तान्भुङ्क्ष्व राक्षस ! ।
एतस्मिन्सदने पान्थान्ग्रामपालप्रवेशितान् ॥ ५२ ॥

[...]हारं कल्पयाञ्चक्रुरात्मीयप्राणगुप्तये । भवान्सुप्तो गृहेऽमुष्मिन्न धन्यैःसंयुतः परैः ॥
[...]ग्रस्ताः किल चानेन त्वं मुक्तोऽसिद्विजोत्तम !। प्रभावंभवतोवेत्तिभवानेवद्विजोत्तम
[...]ीयतनयस्याऽद्य मित्रमेकमुपागतम् । अजानता मया सोऽपि तनयस्य प्रियः सखा
अन्यैः पान्थजनैः सार्द्धं तस्मिन्गेहे प्रवेशितः ।
श्रुत्वा तत्र प्रविष्टं तं निशीथे तनयो मम ॥ ५६ ॥

[...]ानेतुं गतः सोऽपि भक्षितस्तेन रक्षसा । दुःखितेन मया प्रोक्तः प्रातःसपिशिताशनः
[...]ाऽपि पुत्रो दुष्टात्मन्भवता निशि भक्षितः । भवज्जठरनिर्मग्नः सुतोऽसौ येन जीवति
अस्ति चैवमुपायस्ते ब्रूहि मे त्वं निशाचर ! ॥ ५९ ॥

राक्षस उवाच ।

[...]न्तःप्रविष्टं त्वत्पुत्रमज्ञात्वाऽहमभक्षयम् । अजानन्भक्षितःपान्थैःसहितोऽसौसुतस्तव
[...]थाजीवति मे कुक्षौ यथा भवति रक्षितः । तथा विहितंमप्यस्ति दैवेन परमेष्ठिना ॥
[...]ेतैकादशमाध्यायं यः पठत्यनिशं द्विजः । तत्प्रभावेण मे मुक्तिर्मृतानां पुनरुद्भवः ॥

ग्रामपाल उवाच ।

[...]थमेकादशाध्यायसामर्थ्यमिदमद्भुतम् । इति पृष्टो मया विप्र स बभाषे निशाचरः ॥

राक्षस उवाच ।

[...]रागृध्रेणकेनाऽपिनभोमार्गेणगच्छता । अस्थिखण्डंस्वतुण्डाग्रात्पातितंकाऽपिवारिणि
[...] जलाशयमागत्य कोऽपि ज्ञानीश्वरस्तदा । महातीर्थमिति ज्ञात्वा विदधे पितृतर्पणम्
तमूचिरे जनाः सर्वे तीर्थमेतत्कथं वद ॥ ६६ ॥

मुनिरुवाच ।

[...]पत्येकादशाध्यायंत्रिसन्ध्यंनियतेन्द्रियः । कृतमौनस्तुविप्रोऽसौचौरैर्व्यापादितःपथि
तस्याऽस्थिशकलं गृध्रवदनात्पतितं जले ॥ ६७ ॥
तेन तीर्थमिदं दिव्यं जातं पातकनाशनम् ॥ ६८ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

राक्षस उवाच।

ततस्ते मानवाः सर्वे सस्नुस्तत्र जलाशये। निष्कल्मषतया चैवं प्रापुस्ते प
एकादशस्य सामर्थ्यादध्यायस्य भविष्यति। ममाऽपि मुक्तिःपान्थानांपुनरत्र
यो मया कश्चिदुद्गीर्णो ब्राह्मणोऽत्रैवतिष्ठति। स च एकादशाध्यायंजपतिस्मा
स तेनाध्यायमन्त्रेण सप्तवाराभिमन्त्रितम्। विधाय वारि विप्रेन्द्रः क्षिपेद्यदि

ततो मे शापनिर्मुक्तिर्भविष्यति न संशयः॥ ७३॥

ग्रामपाल उवाच।

इति तेनाऽस्मि सन्दिष्टः समायातस्त्वदन्तिकम्॥ ७४॥

विप्र उवाच।

राक्षसः केन पापेन जातोऽसौ वद रक्षक!। यत्क्षपायां गृहेतस्मिन्नरान्खादति

ग्रामपाल उवाच।

अस्मिन्ग्रामे पुरा कश्चिदासीद्विप्रः कृषीबलः। एकदा शालिकेदाररक्षणे व्याकु
नातिदूरे महागृध्रः पान्थमेकमभक्षयत्। तं विमोचयितुं दूराद्याश्चक्रेऽपि त
भुक्त्वा पान्थं खगस्तावन्निरगादम्बराध्वना। ततः स तापसःकोपात्तम्बभाषे

तापस उवाच।

धिक्त्वां हालिकदुर्बुद्धे कठोरमतिनिर्घृण!। कुक्षिम्भरं परत्राणविमुखं हतजी
चोरैश्चदंष्ट्रिभिः सर्पैररिवह्निविषाम्बुभिः। गृध्रराक्षसभूतैश्च वेतालादिभिर
जनानुपेक्षते शक्तः स तद्वधफलं लभेत्। न मोचयति यो विप्रं प्रभुश्चोरादिभिर्गृही
स याति नरकं घोरं स पुनर्जायते वृकः। निहन्यमानं विपिने गृध्रव्याघ्रेण
मुञ्चमुञ्चेति यो वक्ति स यातिपरमांगतिम्। गवामर्थेहताव्याघ्रैर्व्याघ्रैर्दुष्टै

तेऽपि यान्ति पदं विष्णोर्दुष्प्राप्यं योगिनामपि।
अश्वमेधसहस्राणि वाजपेयशतानि च॥ ८४॥

शरणागतसन्त्राणकलां नार्हन्ति षोडशीम्। दीनस्योपेक्षणंकृत्वा भीतस्यवश
पुण्यवानपि कालेन कुम्भीपाके स पच्यते। पश्यन्नपि भवान्पान्थं दुष्टगृध्रेण

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ारणसमर्थोऽपिनचक्रे यन्निवारणम् । निष्कृपोऽसियतस्तस्माद्भविष्यसिनिशाचरः

ग्रामपाल उवाच ।

शापं मुनेः श्रुत्वा कम्पमानकलेवरः । प्रणम्य हालिकोविप्रं बभाषे करुणस्वचः ॥

हालिक उवाच ।

ाऽहं क्षेत्ररक्षायां चिरं क्षिप्तेन चक्षुषा । न वेद्मि निकटं गृध्रहन्यमानंमिमं नरम् ॥

तेन मेऽनुग्रहं कर्तु कृपणस्य त्वमर्हसि ॥ ९० ॥

विप्र उवाच ।

वेत्त्येकादशाध्यायं जपत्यनुदिनं च यः । तेनाभिमन्त्रितं वारि यदाशिरसि तावके

पतिष्यति तदा शापात्तव मुक्तिर्भविष्यति ॥ ९२ ॥

ग्रामपाल उवाच ।

इत्युक्त्वा तापसो यातो हालिको राक्षसोऽभवत् ।

इति तद्राक्षसवचो निशम्याऽऽशु प्रधावतः ॥ ९३ ॥

भयं कार्यमेवाऽद्य संसिद्धं कुरु तापस !। तदागच्छ द्विजश्रेष्ठ तेनाध्यायेन मन्त्रय ॥

तीर्थोदकं स्वहस्तेन तस्य मूर्द्धनि निक्षिप ॥ ९४ ॥

महादेव उवाच ।

तितत्प्रार्थितं तस्य श्रुत्वा च करुणाप्लुतः । तथेति सह पालेन मुनीरक्षान्तिकं ययौ

कादशेन तेनाम्बु विश्वरूपेणमन्त्रितम् । निक्षिप्तं तस्य शिरसि तेन विप्रेण योगिना

ीताध्यायप्रभावेण शापमोक्षमवाप सः । विहाय राक्षसं देहं चतुर्बाहुस्ततोऽभवत् ॥

निगीर्णा ये जनास्तेन पान्थाआसन्सहस्रशः । चतुर्भुजा बभूवुस्ते शङ्खचक्रगदाधराः॥

ते विमानान्यारुरुहुस्तावदूचे स राक्षसम् ।

ग्रामपाल उवाच ।

मदीयस्तनयः कस्तं दर्शयस्व निशाचर ! ॥ ९९ ॥

महादेव उवाच ।

इत्युक्ते ग्रामपालेन दिव्यधीराह राक्षसः ॥ १०० ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

राक्षस उवाच ।

एवं चतुर्भुजं विद्धि तमालश्यामलद्युतिम् ॥ १ ॥

माणिक्यमुकुटं दिव्यमणिकुण्डलमण्डितम् । हारहारिमहास्कन्धं स्वर्णकेयूर
राजीवलोचनं स्निग्धं हस्तेकृतसरोरुहम् । दिव्यं विमानमारूढं देवत्वंप्राप्तमा

महादेव उवाच ।

इति तस्य वचः श्रुत्वा सुतं दृष्ट्वा च तादृशम् । स्वगेहं नेतुमारेभे तं जहास सुत

सुत उवाच ।

कति वाराणि जातोऽसि त्वं पुत्रो मम रक्षक ! ।
पूर्वं पुत्रस्त्वदीयोऽस्मि ह्यधुना विबुधोऽस्म्यहम् ॥ १०५ ॥

यास्यामि वैष्णवं धाम ब्राह्मणस्यप्रसादतः । निशाचरोऽपि प्राप्तोऽयंपश्यदेहंच
एकादशस्य माहात्म्याद्यातिस्वर्गंसमंजनैः । विप्रादस्मात्तमध्यायमधीष्वत्वंजपा
भविष्यति न सन्देहस्तवाऽपि गतिरीदृशी । तात! तस्मात्सतां सङ्गोदुर्लभःसर्व

सोऽप्यद्य ते समुत्पन्नो ह्यात्मनः साधयेप्सितम् ।
किं धनैर्भोगदानैर्वा किं यज्ञैस्तपसा नु किम् ॥ १०६ ॥

किं पूर्तैर्वापरंश्रेयो विश्वरूपस्य पाठतः । तद्विष्णोः परमं रूपं तत्त्वंध्यायस्व वि
यत्पूर्णानन्दसन्दोहकृष्णब्रह्मास्यनिर्गतम् । कुरुक्षेत्रेऽर्जुने मित्रे तत्कैवल्यरसा
नृणां च भवभीतानामाधिव्याधिभयापहम् । अनेकजन्मदुःखघ्नंनान्यत्पश्यामि

शिव उवाच ।

इत्युक्त्वा सह तैःसर्वैर्ययौ विष्णोः परम्पदम् । तमध्यायंततो विप्राद्ग्रामपालःप
तावुभौ तस्यमाहात्म्याज्जग्मतुर्वैष्णवंपदम् । इत्येकादशमाहात्म्यकथातुभ्यंनि

यस्याः श्रवणमात्रेण महापातकसंक्षयः ॥ ११५ ॥

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे गीतैका
ध्यायमाहात्म्ये सतीश्वरसम्वादे पञ्चाशीत्यधिकशततमोऽध्यायः ॥ १८५

---

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# षडशीत्यधिकशततमोऽध्यायः

## राजपुत्रकथानकंपुरस्सरं गीताद्वादशाध्यायमाहात्म्यवर्णनम्

महादेव उवाच ।

स्त कोल्हापुरं नाम नगरं दक्षिणापथे । सुखानांसदनंसाध्विसाधूनांसिद्धिसम्भवम्
शक्तेः परं पीठं सर्वदेवनिषेवितम् । पुराणेषु प्रसिद्धं यद्भुक्तिमुक्तिफलप्रदम् ॥ २ ॥
टिशस्तत्र तीर्थानि शिवलिङ्गानि कोटिशः । आस्तेरुद्रगयायत्रविशालंलोकविश्रुतम्
ङ्गाचलमहावप्रगोपुरोल्लासितोरणम् । प्रासादशिखरै यत्र तुङ्गं च कनकध्वजम् ॥४॥
मकान्तिमहासौधवलभीपङ्क्तिशोभितम् ।जालरन्ध्रोद्गिरद्धूपधूमाऽऽमोदितदिक्तटम्
चलत्पताकविस्तीर्णच्छायं देवालयान्वितम् ।
चतुरैः सुन्दरैः स्निग्धैः श्रीमद्भिः शुचिमानसैः॥ ६ ॥
धिष्ठितं सदाचारैः पुरुषेर्भूरिभूषणैः । कुरङ्गनयनाश्चन्द्रवदनाः कुटिलालकाः ॥ ७ ॥
स्फुल्लचम्पकच्छायाः पीनतुङ्गपयोधराः । कृशमध्यानिम्ननाभिवलित्रयविराजिताः ॥
शालजघनाश्चारुजङ्घायुग्मा वराङ्घ्रयः । वाचालमेखलादामनिक्वणन्मणिनूपुराः ॥
गत्कङ्कणहस्ताब्जस्फुरत्करजरश्मयः । वसन्ति प्रमदा यत्र मादयन्त्यो मुनीनपि ॥
मस्तवस्तुसंयुक्तं सर्वभोगसमन्वितम् । मङ्गलैः सकलैर्युक्तं महालक्ष्मीसमन्वितम् ॥
तत्राऽगच्छत्पुमान्कश्चिद्युवा गौरः सुलोचनः ।
कम्बुकण्ठः पृथुस्कन्धो महावक्षा महाभुजः ॥ १२ ॥
मस्तलक्षणोपेतो गोचरासक्तमानसः । प्रविश्य नगरं पश्य शोभां सौधेषु सर्वतः ॥
त्कण्ठितमना द्रष्टुं महालक्ष्मीं सुरेश्वरीम् । मणिकुण्डे कृतस्नानः सम्पन्नपितृतर्पणः
महालक्ष्मीं महामायां नत्वा तुष्टाव भक्तितः ॥ १४ ॥

राजपुत्र उवाच ।

यत्यपारकरुणा शरण्या जगदम्बिका । कुर्वाणा जगतो जन्म पालनं क्षपणं द्रुशा ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यया शक्त्या कृतादिष्टः परमेष्ठीसृजत्यसौ । अवष्टभ्य च तांशक्तिं पालयत्यच्युतः
यया शक्त्या कृतावेशः संहरत्यखिलं हरः । तां भजे परमांशक्तिं सर्गस्थितिलयां
योगिध्येयाङ्घ्रिकमलेकमलेकमलालये !। स्वभावानखिलान्नस्त्वं गृह्णासीन्द्रियं
त्वमेव कल्पनाजालं तत्कल्पं कुरुषे मनः । इच्छाज्ञानक्रियारूपा परसंवित्स्वरू
निष्कला निर्मला नित्या निराकारानिरञ्जना । निरन्तरा निरातङ्कानिरालम्बानि
तवैवं महिमानं हि के वर्णयितुमीशते । वन्दे निर्भिन्नषट्चक्रद्वादशान्तविहारि
अनाहतध्वनिमयीं विन्दुनादकलात्मिकाम् । मातस्त्वं पूर्णशीतांशुगलत्पीयूषवा

पुष्णासि वत्सले बालान्सनकादीन्दिगम्बरान् ।
अनुस्यूता शिवा सम्विज्जाग्रत्स्वप्नसुषुप्तिषु ॥ २३ ॥

तुरीयायां वर्त्तमाना दयासूनृतसन्धिषु । ददासि प्राणिनां सर्वाः सततं ब्रह्मस
संहृत्य तत्त्वसंघातं तुरीयातीतया त्वया । योगिनां विम्वतादात्म्यंदीयतेनिर्वि
परां नमामि पश्यन्तीं मध्यमां वैखरीमपि । रूपाणि देवि! गृह्णासि जगत्सन्त्राइत

त्वं ब्राह्मी वैष्णवी च त्वं माहेशी च त्वमम्बिके ! ।
वाराहि ! त्वं महालक्ष्मीर्नारसिंही त्वमैन्द्रिका ॥ २७ ॥
त्वं कौमारी चण्डिका त्वं लक्ष्मीस्त्वं विश्वपावनी ।
सावित्री त्वं जगन्माता शशिनी त्वं च रोहिणी ॥ २८ ॥

त्वं स्वाहात्वंस्वधात्वंहित्वंसुधापरमेश्वरी । चण्डमुण्डभुजादण्डखण्डदोर्दण्ड
रक्तवीजगलद्रक्तपानघूर्णितलोचने ! । उन्मत्तमहिषग्रीवोन्मूलनप्रौढदोर्युगे ! ॥
शुम्भासुरमहादैत्यदारणायात्तविक्रमे !। अनन्तचरिते तुभ्यं नमस्त्रैलोक्यमातृके

भक्तकल्पलते मह्यं प्रसीद परमेश्वरि ! ॥ ३२ ॥

शिव उवाच ।

इति तेन स्तुतादेवी महालक्ष्मीस्ततःस्वयम् । निजरूपं समास्थाय पुरुषं प्रत्युवा

श्रीलक्ष्मीरुवाच ।

राजपुत्र ! प्रसन्नाऽहं वृणीष्व वरमुत्तमम् ॥ ३४ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

राजपुत्र उवाच ।

ता मे धरणीपालो वाजिमेधं महाक्रतुम् । कुर्वाणो दैवयोगेन रोगाक्रान्तोदिवंययौ
तद्वपुस्तत्ततैलेन शोषयित्वा मया ततः ॥ ३५ ॥
स्थापितस्तत्र यागेऽसौ यथापूर्वमवर्तत ॥ ३६ ॥

थ क्रान्तमहीचक्रो यूपे यागतुरङ्गमः । निशीथे बन्धनंछित्त्वा नीतःकेनाऽपिकुत्रचित्
दृष्ट्वा तद्गतं क्वापि निवृत्तेषु जनेष्वहम् । आमन्त्र्य ऋत्विजः सर्वाञ्छरणंत्वामुपागतः
सन्ना यदि देवि! त्वं तन्मे यागतुरंगमः । दृष्टो भवतु यागोऽसौ सम्पूर्णोजायते यथा
रानृण्यं मम तातस्य तेन राज्ञी भविष्यति । तथा कुरु जगद्धात्रि शरणागतवत्सले ॥

देव्युवाच ।

मम द्वारे द्विजः सिद्धसमाधिरिति विश्रुतः । ममाऽऽज्ञयासतेसर्वंकार्यंनिष्पादयिष्यति

शिव उवाच ।

इत्युक्तः श्रीमहालक्ष्म्या ततो राजकुमारकः । आजगाम मुनिः सिद्धसमाधिर्यत्रतिष्ठति
रणम्य तस्य पादाब्जं कृताञ्जलिरवस्थितः । तमुवाच ततोविप्रः प्रहितोऽसित्वमम्बया
त्वदीप्सितमिदं सर्वं साधयामि विलोकय ॥ ४३ ॥

शिव उवाच ।

इत्युक्त्वात्रिदशान्सर्वानाचकर्षसमान्त्रिकः । ऐक्षतक्षितिपालस्यतनयोऽसौतदासुरान्
कृताञ्जलिपुटान्देवान्वेपमानकलेवरान् । अथ तानमरान्सर्वान्सम्बभाषे द्विजोत्तमः ॥

सिद्धसमाधिरुवाच ।

अमुष्य राजपुत्रस्य वाजीयज्ञाय कल्पितः । नीतोऽस्ति देवराजेन क्षपायामपहृत्य सः
गीर्वाणा अश्वमेवाऽस्य समानयतमाचिरम् । अथ तस्य मुनेर्वाक्याद्देवैर्यज्ञतुरङ्गमः ॥
समर्पितस्ततस्तेन तेऽनुज्ञाता दिवौकसः । आकृष्टानमरान्दृष्ट्वा गतं लब्ध्वा तुरङ्गमम्
महीपतिसुतो नत्वा तं मुनिं वाक्यमब्रवीत् ॥ ४६ ॥

राजपुत्र उवाच ।

आश्चर्यमिदमेतत्ते सामर्थ्यमृषिसत्तम !। कृतमेतत्त्वया विप्र ! त्रिदशाकर्षणं क्षणात् ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

हस्तादाकृष्य दत्तो मे यज्ञीयोऽयं तुरङ्गमः । न किञ्चिदपरं यावद्दुष्करं यत्सुरै
प्रभविष्यति तत्कर्तुं भवानेव न चाऽपरः ॥ ५१ ॥

शृणु विप्र! महीपालः पितासीन्मे बृहद्रथः । प्रारब्धहयमेधोऽसौ दैवेन निधनं ग
अद्याऽपि तस्य देहोऽस्ति तप्ततैलेन शोषितः । तस्य सञ्जीवनं भूयः कर्त्तुमर्हसि

श्रीशिव उवाच ।

इत्याकर्ण्य स्मितं कृत्वा स जगाद महामुनिः । यामस्तत्र पिता यत्र तावकोयागम
अथाऽऽगत्य समं तेन तत्र सिद्धसमाधिना । पयोऽभिमन्त्र्य विदधे तस्य प्रेतस्य
ततः प्राप नृपः संज्ञामुत्तस्थे वै ददर्श च । स तं पप्रच्छ विप्रेन्द्रं कोऽसि धर्मेति
ततो राजसुतः सर्वं भूपालाय न्यवेदयत् । स नत्वा ब्राह्मणं राजा तं पुनर्दत्तजीवि
वभाषे केन पुण्येन त्वयि शक्तिरलौकिकी । यथा मे जीवितं दत्तमाकृष्टाश्च दिवौकस्त्र
यागश्चोद्धरितो विप्र येन मे तन्निरूपय ॥ ५८ ॥

श्रीशिव उवाच ।

इत्युक्तस्तेन विप्रोऽसौ जगाद श्लक्ष्णया गिरा ॥ ५९ ॥

सिद्धसमाधिरुवाच ।

गीतानां द्वादशाध्यायं जपाम्यहमतन्द्रितः । तेन शक्तिरियं राजन्यया प्राप्तोऽसि र्जा

श्रीशिव उवाच ।

एतदाकर्ण्य राजाऽसौ द्वादशाध्यायमुत्तमम् ।
पपाठ तस्माद्विप्रर्षेः सकाशाद्ब्राह्मणान्वितः ॥ ६१ ॥

तस्याऽध्यायस्य माहात्म्यात्ते सर्वे सद्गतिं ययुः । अन्ये पठित्वा जीवाश्च मुक्तिमापुरहो
इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे गीताद्वाद
ध्यायमाहात्म्ये षडशीत्यधिकशततमोऽध्यायः ॥ १८६ ॥

---

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# सप्ताशीत्यधिकशततमोऽध्यायः

## सहरिदीक्षितविप्रभार्यावृत्तं गीतात्रयोदशाध्यायमाहात्म्यवर्णनम्

देव्युवाच ।

…दशाध्यायमाहात्म्यं भवता कथितं मम । ब्रूहि त्रयोदशाध्यायमाहात्म्यमतिसुन्दरम्

ईश्वर उवाच ।

…णु त्रयोदशाध्यायमहिमाम्भोनिधिं शिवे । यदाकर्णनमात्रेण परां मुदमवाप्स्यसि॥
…स्ति दक्षिणदिग्भागे तुङ्गभद्रा महानदी । तत्तटे नगरं रम्यं नाम्ना हरिहरम्पुरम् ॥३ ॥
…त्राऽऽस्ते भगवान्देवि देवो हरिहरः स्वयम् । यस्य दर्शनमात्रेण परं कल्याणमाप्यते
…स्मिन्पुरे द्विजन्माऽऽसीद्धरिदीक्षितसञ्ज्ञकः । तपःस्वाध्यायनिरतः श्रोत्रियो वेदपारगः

दुराचारेति तस्यासीद्भार्या नाम्ना च कर्मणा ।
न सुष्वाप समं पत्या दुरालापा कदाचन ॥ ६ ॥

…णमप्यात्मसदने नचाऽऽस्ते स्वैरचारिणी । कण्ठदघ्नं द्विजद्वारैर्धयन्ती वारुणीरसम्
…तिसम्बन्धिनः सर्वांस्तर्जयन्ती पुनःपुनः । विटैः सह सदोन्मत्ता रममाणा निरन्तरम्
कदाचिद्व्याकुलं दृष्ट्वा पुरं पौरैरितस्ततः । सङ्केतगेहमकरोत्कान्तारे निर्जने स्वयम्
अथ तत्रैव सा धूर्ता रममाणा विटैः सह । निनाय सा बहून्कालान्निजयौवनगर्विता॥
अथ तस्मिन्पुरे रम्ये निवसन्त्या निरङ्कुशम् । वसन्तकालः समभूत्परश्चित्तभुवः सखा
आमूलपल्लवाकीर्णः सहकारविकारिणा । पिकानां पञ्चमालापैः पुनः सञ्जीवितः स्मरः
स्फुरच्चम्पकसौरभ्यहारकैर्मलयानिलैः । मन्दं मन्दं प्रसर्पद्भिरान्दोलितवनद्रुमः ॥१३॥
उत्फुल्लमल्लिकामोदमदिरापारणीवताम् । अलीनां कलटङ्कारैः समन्ताद्भावशोभितः ॥
प्रसन्नचारुभिः स्मेरः सरोवरसुगन्धिभिः । मीलन्मरालनिवहैः सरोभिः प्रकटीकृतः ॥
घनच्छायासुखासीनहरिणार्भकधारिभिः । नीरन्ध्रपल्लवैर्नानाशाखिभिः शोभितावनिः
तस्मिन्वसन्तसमये मुदितासाभिसारिका । अपश्यज्जगदानन्ददायिनीं चन्द्रिकां निशि

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

चञ्चच्चकोरचञ्चग्रगलत्पीयूषसीकराम् । द्रवदिन्दुशिलानिर्यत्सुधानिर्झरनिर्भ
विकासीकुसुमक्रोडसान्द्रीभूतकरोत्कराम्। उल्लासितपयोराशिकल्लोलालिङ्गिताम्
मनोभवमहासिंहकुलटाकण्ठकर्तरीम्। घनान्धकारसंदोहविदारणपटीयसीम्॥
श्वेतीकृतसतीकारपरार्थहिमगर्भिणीम् । म्लानपङ्कजसङ्कोचाद्यूनामानन्ददायिनी
चक्रवाकवधूवक्त्रकरुणाक्रोशसाक्षिणीम् । मुक्ताश्रेणीविशुद्धांशुप्रभासितदिग

अथ तस्यां प्रभूतायां पूरयन्त्यां दिशो दश।
कामान्धाः कामिनो जाताः पथि सौधविहारिणीः॥ २३॥

अपश्यन्ती विटान्रात्रौ निर्भिद्य भवनार्गलम्। ययौ सङ्केतभवनं निर्गत्य नगराद्
तत्र प्रियतमं कश्चित्काममोहितमानसा। अन्वेषयन्ती नाऽद्राक्षीत्कुञ्जे कुञ्जे तां
आकर्णयन्ती कान्तस्य मन्दालापान्पदेपदे। अभियाति ततःक्रीडन्यत्रसम्हारिणि
चक्रवाकरवाञ्छ्रुत्वा कन्तालापभ्रमादसौ। सरोवराणिसर्वाणि पर्यटन्ती मुहु

कान्तभ्रान्त्या तरुतले प्रसुप्तान्हरिणोत्करान्।
प्रबोधयन्ती सोच्छ्वासमागताऽस्मीति भाषिणी॥ २८॥

आलिङ्गन्ती वनस्थाणुं जीवनेश्वरशङ्कया। तदाननभ्रमाद्भूयश्चुम्बन्तीविकचा
तत्रतत्र कृतव्यर्थश्रमाऽदृष्टप्रिया स्वयम्। विललापवनेतस्मिन्मूर्च्छन्ती विविधो

हा कान्त हा गुणाक्रांत मच्चैतन्यनायक॥ ३०॥

हेमनोहरसौभाग्यभाग्यलावण्यशेवधे!। हा पूर्णचन्द्रवदन हा सरोजायतेक्षण॥
हाकान्त! तत्त्वसाहित्यविश्रामार्यसुरद्रुम। अहो कान्त नवाकीर्णकर्णकुण्डलदी
नयनानन्दनिष्यन्दी कुत्र ते मुखचन्द्रमा। यदि कोपेन कुत्राऽपि गुह्यवेषोऽत्रति

प्रसादयामि त्वां कान्त! दत्त्वा प्राणान्प्रियानपि।
इत्युच्चैः सर्वतो दिक्षु विलपन्त्या वियोगतः॥ ३४॥
तस्याः श्रुत्वा वचः कोऽपि सुप्तो व्याघ्रः प्रबुद्धवान्।
कुर्वन्घुरघुरध्वानं पश्यन्प्रतिदिशं रुषा॥ ३५॥

आस्फालयन्नखैर्भूमिगर्जन्नाकाशगह्वरम्। पृष्ठनिर्भग्नलाङ्गूलं द्रुतमुत्थाय चाक

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

गतो व्याघ्रः समुत्पत्य यत्राऽऽस्ते साऽभिसारिका ।
अथ साऽपि तमायान्तमालोक्य पतिशङ्कया ॥ ३७ ॥

निर्जगाम पुरःस्थातुं प्रेमनिर्भरमानसा । ततस्तस्य नखक्रीडाक्रूरताऽर्थाकृता सती ॥
हौ प्रियवपुःशङ्कां श्रुत्वा गर्जितमुर्जितम् । व्याघ्रोऽपि पातयामास ततो नखशिखामुखैः

तमुवाचाऽथ क्रोशन्ती वीतसौहृदया गिरा ।
तथाविधापि सा नारी भ्रान्तिमुत्सृज्य सत्वरम् ॥ ४० ॥

व्याघ्रत्वं तु कुतोहेतोर्मां निहन्तुमिहागतः । इदंसर्वं समाख्याहि यतस्त्वं हन्तुमिच्छसि
इतितस्या वचः श्रुत्वा शार्दूलश्चण्डविक्रमः । क्षणं विहाय तद्ग्रासमुवाच प्रहसन्निव ॥
मलापहा नदी नाम्ना देशे तिष्ठति दक्षिणे । नगरीमुनिपर्णेति तस्या रोधसि वर्तते ॥

तत्राऽऽस्ते भगवान्साक्षात्पञ्चलिङ्गो महेश्वरः ।
तस्यां पुर्यामहं विप्रपुत्रो भूत्वा स्थितस्ततः ॥ ४४ ॥

अयाज्यान्याजयन्नश्चन्नेकोद्दिष्टे नदीतटे । वेदपाठफलं शश्वद्विक्रीणन्धनकाङ्क्षया ॥
भिक्षुकानपराँल्लोभात्तिरस्कुर्वन्दुरुक्तिभिः । अदेयद्रविणं गृह्णन्दत्तमनिशं दिनम् ॥४६॥
छलयन्सकलाँल्लोकान्क्षणग्रहणकौतुकात् । ततः कतिपये काले जठरत्वमुपागतः ॥४७
वलीपलितवानन्धः प्रपतन्प्रस्खलद्गतिः । पतद्दन्तोऽभवं भूयः प्रतिग्रहपरायणः ॥४८॥
हस्ते गृहीतदर्भोऽहमगमं तीर्थसन्निधिम् । धनग्रहणलोभेन भ्रमन्पर्वसु पर्वसु ॥ ४९ ॥
ततोऽहं शिथिलाङ्गःसन्कश्चिद्भूनिर्जरालयम् । गतवान्याचितंभोक्तुं दष्टो मध्ये पदे शुना
अपतम्मूर्च्छितोभूत्वा ततः क्षितितलेक्षणात् । ततोऽहं गलितप्राणो व्याघ्रयोनिमुपागतः
अत्र तिष्ठामि कान्तारे पूर्वपापमनुस्मरन् । न भक्षयामि धर्मिष्ठान्मुनीन्साधुजनान्सतीः
किंतु पापान्दुराचारानसतीर्भक्षयाम्यहम् । अतोऽसतित्वं तत्त्वेन ममैव कवलायसे ॥
इत्युक्त्वा स्वैर्नखैःक्रूरैस्तांविभज्याऽङ्गखण्डशः । अथतांभक्षितांतेन पापदेहमुपाश्रिताम्
यमस्य किङ्करा निन्युःसद्यः संयमनीं पुरीम् । यमादेशेन तत्रापि पातयामासुराशुताम्
विण्मूत्ररक्तपूर्णेषु घोरकुण्डेष्वनेकधा । कल्पकोटिषु जातासु तस्मादादाय तां मुहुः॥
रौरवे स्थापयामासुर्मन्वन्तरशतावधि । ततोऽप्याकृष्य तां दीनांरुदतीं सर्वतोमुखीम्

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मुक्तकेशां भग्नगात्रां चिक्षिपुर्दहनानने । एवं पापापरा घोरा भुक्त्वा नरकयातना
इह जाता महापापात्पुनः श्वपचयोनिषु । ततः श्वपचगेहेऽपि वर्द्धमाना दिने
पूर्वजन्मवशेनैव तथैवाऽऽसीद्यथा पुरा । ततः कतिपये काले पुनः स्वं भवनं

यत्राऽऽस्ते जृम्भकादेवी शिवस्याऽन्तःपुरेश्वरी ।
तत्राऽपश्यद्द्विजन्मानं वासुदेवाभिधं शुचिम् ॥ ६१ ॥

गीतात्रयोदशाध्यायमुद्गिरन्तमनारतम् । ततस्तच्छ्रवणादेव मुक्ता श्वपचविग्रहात्

दिव्यं देहं समासाद्य जगाम त्रिदशालयम् ॥ ६३ ॥

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे गीतात्रयोदशाध्यायमाहात्म्ये सप्ताशीत्यधिकशततमोऽध्यायः ॥ १८७ ॥

———

## अष्टाशीत्यधिकशततमोऽध्यायः

शौर्यवर्मविक्रमवेतालराज्ञोःकथापुरस्सरं गीताचतुर्दशाध्यायमाहात्म्यवर्णनम्

ईश्वर उवाच ।

अतःपरं प्रवक्ष्यामि भवानि भवमुक्तये । गीताचतुर्दशाध्यायमवधारय सुस्मिते ।

मेदिन्यां यत्किल स्थूलमस्ति काश्मीरमण्डलम् ।
राजधानी सरस्वत्या आस्ते चैव मनोहरा ॥ २ ॥

यामभिष्ठाय वाग्देवी ब्रह्मलोकं प्रयच्छति । हंसैस्समुह्यमानाऽपि सावित्रीप्रहतैः
सरस्वतीपदाम्भोजसेवामाश्रित्यकुङ्कुमैः । यत्र गौरवधन्त्याशा हंसाः पक्षपुटोज्ज्व
निरन्तरं तया चैव नृणां संस्कृतभाषिणाम् । सुपर्वाणमयीभाषा निमेषेणोपलभ्य
प्रातर्गृहाङ्गणोद्भूतैर्यत्र कुङ्कुमपांसुलैः । सर्वतोऽरुणितच्छायं शशाङ्कविमण्डल
तत्राऽऽसीत्तेजसांराशिःशौर्यवर्मानरेश्वरः । उद्यदुज्ज्वलबाणौघखण्डितारातिम

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

[...]भूच्च सिंहलद्वीपे राजा सिंहपराक्रमः । नाम्ना विक्रमवेतालः कलानामपि शेवधिः ॥
[...]भौपरस्परं मैत्रीं वर्द्धयाञ्चक्रतुः क्रमात् । तत्तद्देशसमुत्पन्नैरपूर्वैः प्रचुरोत्करैः ॥ ६ ॥
[...]कदा प्रहितं प्रेम्णा प्रभूतं शौर्यवर्मणा । राजा विक्रमवेतालो विलोक्य शुनकीद्वयम्
[...]त्तमातङ्गतुरगमणिभूषणचामरम् । प्रेषयामास मित्राय प्रभूतं शौर्यवर्मणे ॥ ११ ॥
[...]कदा शिविकारूढश्चारुचामरवीजितः । सुवर्णशृङ्खलारूढं वाद्यडिण्डिमडम्बरम् ॥
[...]शुनीयुगलमादाय मृगयाकौतुकोत्सुकः । राजा जगाम बाह्यालीं समं राजकुमारकैः ॥
[...]णवन्धविधानेन समुपेतं शशामिषम् । तत्र राजकुमाराणां महान्कोलाहलोऽभवत् ॥
[...]तः समानवयसा केनचिद्राजसूनुना । बहुमूल्यं पणं कृत्वा राजा चिक्रीड कौतुकी ॥

ततोऽवतार्य दोलाया बिरुदावलिगर्विताम् ।
धावतः शशकस्योच्चैः पृष्ठे मुञ्चन्नृपः शुनीम् ॥ १६ ॥

[...]मोच राजपुत्रोऽपि प्रेमपात्रं महाभुजः । विरराम शुनीमुच्चैः सङ्कीर्त्य विरुदावलीम्
[...]लक्ष्यमाणवेगेऽस्मिञ्छुनीयुगलकेभृशम् । धावत्युत्थितमेवासीत्पश्यतांसर्वभूभृताम्
[...]पात गर्ते महति शशकोऽतिश्रमादसौ । पतितोऽपि शुनीवश्यो नाऽभवच्छशशावकः
[...]तः शनैः समुत्थाय धावन्नाक्रम्य रोषतः । जगृहे राजशुन्याऽसौ शशकः फेनमुद्वमन्

ततः कथञ्चिदुत्प्लुत्य गच्छन्विस्खलयञ्छशः ।
राजपुत्रशुनक्याऽसौ गृहीतः कन्धरातटे ॥ २१ ॥
जितमस्माभिरत्यर्थमिति सञ्जल्पतां नृणाम् ।
कोलाहले शङ्कितायाः शुन्या निर्गतवान्मुखात् ॥ २२ ॥

[...]तो दंष्ट्राव्रणश्रेणीक्षरद्रुधिरधारकः । क्वाऽपिमर्मरभूभागे निलीय स्थितवाञ्छशः ॥२३॥
[...]जेघ्रन्त्याराजशुन्याऽसौ भूभागंघनरोषया । दृष्टमात्रः परित्रस्तो हस्तमात्रं ततोऽगमत्
[...]त्र कर्पूरकदलीक्रोडव्याघ्रदरीतलः । चोलीकपोलफलकांश्चुम्बन्वाति समीरणः ॥
[...]द्भिन्नकेतकीकोशरजोमुकुलितेक्षणः । विस्रब्धाहरिणा यत्र च्छायां तां परितन्वतः ॥
[...]रिकेलफलैर्यत्र स्वयं निपतितैरधः । अपिचूतफलैस्तृप्ताः पक्वैः शाखामृगाअपि ॥
[...]पि केसरिणो यत्र खेलन्ति कलभैः समम् । फणिनः केकिबर्हेषु निर्विशङ्कं विशन्तिच

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यत्राश्रमान्तरे विप्रो वत्सनामा जितेन्द्रियः। शान्तश्चतुर्दशाध्यायं जपन्नास्ते
तत्र तच्छिष्यपादाब्जप्रक्षालनजलैः कृते। कर्दमे न्यपतद्गत्वा जीवशेषो मुहुः
ततः कर्दमसंस्पर्शमात्रनिस्तीर्णसंसृतिः। दिव्यं विमानमारुह्य निर्ययौ शशको
ततः शुन्यपि लिप्ताङ्गी स्तोकैः कर्दमबिन्दुभिः। क्षुत्पिपासार्तिरहिताशुनीरूप
ततो दिव्याङ्गना रम्यं गन्धर्वैरुपशोभितम्। दिव्यं विमानमारुह्य शुन्यपि त्रि

ततो जहास मेधावी शिष्यो नाम्ना स्वकन्धरः।
विचार्य विस्मितः पूर्वजन्मवैरस्य कारणम्॥ ३४॥

राजाऽपि पर्यपृच्छत्तं विस्मयस्मेरलोचनः। प्रणम्य परया भक्त्या विनयै
कथां कथय मे विप्र! हीनयोनिनिषेवितौ। अज्ञौ यौ जग्मतुः स्वर्गं शुनीशशका

शिष्य उवाच।

वत्सनामाऽऽद्विजन्माऽऽस्तेवनेमुष्मिञ्जितेन्द्रियः। चतुर्दशंतुह्यध्यायंगीतानांस
शिष्योऽहं तस्य भूपाल! ब्रह्मविद्याविशारदः। गीताचतुर्दशाध्यायं जपामि प्र
मदीयचरणाम्भोजप्रक्षालनजले लुठन्। शशस्त्रिदिवमापन्नः शुनक्या सह भूपते

राजोवाच।

हेतुना केन कथय हसितं च द्विजोत्तम!। अतः किमपि साकूतं मन्यमानेन

शिष्य उवाच।

महाराष्ट्रे तिनगरं नाम्ना प्रत्युदकं महत्। तत्राऽऽसीद्ब्राह्मणो नाम्ना केशवः कित
विलोभना भवत्तस्य जाया स्वैरविहारिणी। तेन सा हन्यते क्रोधाद्वैरंसश्रि
ततः स्त्रीवधपापेन शशको जायते द्विजः। किल्बिषाच्छुनकी साऽपि जाता व
पूर्वेणजन्मनाऽऽभ्यस्तंवैरंविस्मरतो नहि। आसेदिवद्भ्यांबहुधा योन्यन्तरम
इत्याकलय्य सकलं भूपालः श्रद्धयाऽन्वितः। गीतामभ्यस्य सकलामवाप पर

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे गीता
ध्यायमाहात्म्ये अष्टाशीत्यधिकशततमोऽध्यायः॥ १८८॥

———

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# एकोननवत्यधिकशततमोऽध्यायः

## गौड़ाधिपतिनरसिंहवृत्तपुरस्सरं गीतापञ्चदशाध्यायमाहात्म्यवर्णनम्

ईश्वर उवाच ।

ष्यामि विशालाक्षि तुहिनाचलकन्यके !। गीतापञ्चदशाध्यायमाहात्म्यमवधारय ॥

कृपालुर्नरसिंहोऽभून्नाम्ना गौडेषु भूपतिः ।
यस्याऽसिधारया सङ्ख्ये देवसङ्घाश्च धिक्कृताः ॥ २ ॥

यमत्तमातङ्गदानधाराजलैरिला । निदाघेऽपि च सेहे तां रविसन्तापवेदनाम् ॥३॥

स्यन्दनपरित्रस्ता यदीयशरणं गताः । रेजिरे करिणो मत्ताश्चलन्तः पर्वता इव ॥४॥

मातङ्गचीत्कारप्रतिस्वनमिवादरात् । यस्य गोपायतः शैला व्याहरन्ति कृपावतः॥

य यावत्तुरगक्षुरसङ्घातजर्जरम् । नाभूच्चित्रं कथङ्कारं गतखण्डं धरातलम् ॥ ६ ॥

मन्वृत्रहणो मित्रे समुद्धरति मेदिनीम् । पुनरुज्ज्वलयाञ्चक्रे महाभाष्यं फणीश्वरः

तस्याऽऽसीत्सैनिको धीमाञ्छस्त्रशास्त्रकलानिधिः ।
नाम्ना सरभभेरुण्डः प्रचण्डभुजमण्डलः ॥ ८ ॥

डारैण तुरङ्गैश्च भटैर्वीररसोद्भवैः । समानएवभूपालदुर्गैरत्यन्तदुर्गमैः ॥ ९ ॥

कदाचित्स्वयंराज्यं कर्तुं पापे दधे मनः । निहत्य वसुधापालं बलात्साकं कुमारकैः

व्यवस्य दिवसैः स्वल्पैरित्थं चिकीर्षया । विषूचिकामयादाशु परासुः समजायत

कालेनाऽल्पीयसा प्रेत्य पापात्मा तेन कर्मणा ।
तेजस्वी तुरगो जातः सिन्धुदेशे कृशोदरि ! ॥ १२ ॥

बहुना क्रीत्वा हयतत्त्वविदा ततः । बहुयत्नवतानीतः केनचिद्वैश्यसूनुना ॥१३

पिपौत्रनप्त्राद्यैस्तस्यैव मरणात्पदम् । कालेन वृद्धतां प्राप्तःस्वराज्यंचापिपालयन्

श्यसूनुस्तं चाश्वंराज्ञे दातुंसमागतः । राज्ञो द्वारिस्थितस्तत्र प्रतीक्षंस्तत्समागमम्

पूर्वोऽपि वैश्योऽसौ प्रतीहारेण दर्शितः । किमर्थं ब्रूहि राज्ञेति पृष्टः स्पष्टमभाषत॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

देव त्रिजगतीरत्नमितिमत्वा तुरङ्गमः । मायाऽनीयत मूल्येन क्रीतोऽसौ सा

ततोऽवलोक्य वक्त्राणि भूपालः पार्श्ववर्तिनाम् ।
समादिदेश वणिजमश्वोऽत्राऽऽनीयतामिति ॥ १८ ॥

शिरांसि धूनयन्नृणामश्वलक्षणवेदिनाम् । शूराणामपि चेतांसि मुहुरुत्साह

अखण्डमेदिनीवेगबहुसङ्क्रमणार्जितम् । लालाफेनच्छलेनासौवमञ्छुभ्रतरं

उच्चैःश्रवस्तुलां भेजे गुणसाम्येन तत्त्वतः । विवृण्वन्नतितेजस्वी ह्रियेवनत

चामरैरिन्दुधवलैर्वीज्यमानो निरन्तरम् ।
दुग्धाम्भोनिधिलोलैस्तैःश्वासैरुच्चैःश्रवा इव ॥ २२ ॥

नीलातपत्रयुगलं घनच्छायतुलश्रिया । बिभ्राणो वारिदालीढहिमाद्रिशि

मेदिनीमण्डलस्पर्शसंक्रान्तमिव पावकम् । मुहुरुद्धारयन्धुन्वन्बन्धुरं क

दारयन्वैरिणः सर्वान्व्याहरंश्च जयश्रियम् । हेषारवेण गुरुणा दिक्षु प्रख्यापित

सत्त्वस्य राशिरत्युच्चैर्गतीनामिवशेवधिः । रूपस्य निलयं साक्षाल्लक्षणानांपात्रं

आनीतो वणिजा वाजी राज्ञा च समदृश्यत । बहुधा वर्णितोऽमात्यैरश्वलक्ष

यथेच्छं वणिजोदीर्णं स्वर्णं दत्त्वा महीपतिः । जग्राह तुरगं वेगादसीमानन्द

ततोऽश्वपालमाहूययत्नतस्तं निरूप्य च । विसर्जितसभालोको गृहान्तरम

अनेकधा समाकृष्टो महीपालं रणाङ्गणे । शस्त्रव्रणकिणश्रेणीभूषणं सत्त्व

एकदा मृगयां खेलन्कुतूहलरसात्मना । तमारुह्य महीपालो वनं प्रति विवे

विसृज्य सैनिकान्पृष्ठे धावतः परितोऽखिलान् ।
आकृष्यमाणो हरिणैः पिपासाकुलितोऽभवत् ॥ ३२ ॥

ततउत्तीर्य तुरगाज्जलमन्वेषयन्नृपः । बद्ध्वाश्वं तरुशाखायामारुरोह शिलां

गीतापञ्चदशाध्यायश्लोकार्द्धं लिखितं ततः । पातितं मरुता तत्र यत्र खण्डे

पत्रं वाचयतो राज्ञः श्रुत्वा गीताक्षरावलीम् । ततो मुक्तिपदं लेभे तुरगस्त

ततो ग्रन्थिं समाच्छिद्य पल्याणमवतार्यच । उत्थाप्यमानस्तुरगो राज्ञा नोत्ति

ततः सरभसेरुण्डोनृपमाभाष्य सुस्वरम् । दिव्यं विमानमारुह्य जगाम दि

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तो गिरिं समारुह्य ददर्शाश्रममुत्तमम् । पुन्नागकदलीचूतनालिकेरसमन्वितम् ॥३८॥
क्षेक्षुवाटिकापूगनागकेसरचम्पकम् । खेलत्करभसारङ्गंनृत्यत्केकिकुलं नृपः ॥ ३९ ॥
णिपत्य द्विजन्मानमुटजाभ्यन्तरस्थितम् । पप्रच्छ परया भक्त्या मुक्तसंसारवासनात्
रगोनिरगात्स्वर्गं हेतुना केन मे वद । इत्याकर्ण्य वचो राज्ञो द्विजन्मा वाचमूचिवान्
त्रिकालदर्शी मन्त्रज्ञो विष्णुशर्मा महत्तरः ॥ ४२ ॥

द्विजन्मोवाच ।

ासीत्सेनापतिः पूर्वं भेरुण्डस्तवभूपते !। त्वां निहत्य समं पुत्रैः कर्तु राज्यं समुद्यतः
ावद्विषूचिकारोगात्कालधर्ममवाप्तवान् । कालेन बहुना प्रेत्य तत्वात्तु पारगोऽभवत्
अथ पञ्चदशाध्यायश्लोकार्द्धं लिखितं क्वचित् ।
ततो वाचयतः श्रुत्वा निरगात्तुरगो दिवम् ॥ ४५ ॥
तः समागतैस्तत्र परिवारजनैर्वृतः । प्रणिपत्य द्विजन्मानं हृष्टरोमा विनिर्गतः ॥४६॥
त्रं तदेव लिखितं गीतापञ्चदशाक्षरम् । वाचयन्स महीपालो हर्षसम्फुल्ललोचनः ॥
भिषिच्य निजं पुत्रं मन्त्रविन्मन्त्रिभिः समम् । सिंहासने सिंहबलं मुक्तिमाप विशुद्धधीः
ति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे गीतापुरुषोत्तम-
योगापरपञ्चदशाध्यायमाहात्म्ये एकोननवत्यधिकशततमोऽध्यायः ॥१८९॥

---

## नवत्यधिकशततमोऽध्यायः

### सौराष्ट्रिकेराज्ञःखड्गबाहोर्विप्रमुखात्षोडशाध्यायोपदेशेनोद्धारपुरस्सरं गीताषोडशाध्यायमाहात्म्यवर्णनम्

ईश्वर उवाच ।

तः परं प्रवक्ष्यामि षोडशाध्यायगौरवम् । आकर्णयकुरङ्गाक्षि हर्षोत्कण्ठप्रवर्षिणि !

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अस्ति सौराष्ट्रिकं नाम्ना पुरं गुर्जरमण्डले । तत्रासीत्खड्गबाहुश्च राजा चन्द्र
यदीयकुसुमामोदमालासुरभितोदरे । वारां निधौ हरिः स्वास्थ्यादशेत सह
यदीयकीर्त्तिकर्पूरकणा भान्ति नभोऽङ्गणे । कीर्णा वैरिकृतश्वाससमारुतैस्तार

यस्याऽसिधारा तीर्थेषु स्नाता वै रिपुभूभुजः ।
व्यावर्त्तन्ते दिवोऽद्यापि स्वर्गस्त्रीवाग्विमोहिताः ॥ ५ ॥

तस्याऽरिमर्दनो नाम मदहस्ती मदोद्धुरः । मदाम्बुधारासलिले गुञ्जद्भ्रमरमा
कपोलफलकोत्तीर्णमदधाराजलाविलः । बभौ यो निर्झरोद्गारैरञ्जनाद्रिरिवो

यस्याङ्गेषु व्यराजन्त चामराश्चन्द्रिकोज्ज्वलाः ।
किरणाइव शीतांशोः पतिताः काननोदरे ॥ ८ ॥
सिन्दूरपांसुपटलीराजत्कुम्भस्थलो बभौ ।
यः सन्ध्यावारिदव्याप्तं वियत्खण्डमिव स्थितम् ॥ ९ ॥

सकदाचिन्मोचयित्वाश्शृङ्खलान्निगडानपि । भङ्क्त्वा लौहं दृढं स्तम्भं प्रह्वहस्
आधोरणगणान्सर्वान्पार्ष्णिविस्फूर्जदङ्कुशान् । क्रोधादवगणय्यैव निजशाल

तीक्ष्णाङ्कुशमुखैर्विष्वग्घन्यमानोऽपि वैणवैः ।
दण्डैस्तु त्रासयामासुः सादिनो न मनागपि ॥ १२ ॥

ततो राजा समागत्य निशम्येदं कुतूहलम् । तत्र हस्तिकलाभिज्ञैः समं राजकु
अदृश्यत समागत्य राज्ञा दन्तावलो बली । मोहयन्भृङ्गटाटोपो हृताट्टालिकमा
ददृशुस्तं महाभीमं पौरा दूरतरं स्थिताः । गोपायन्तः शिशून्भीत्या निवृत्तान्य
रुद्धेषु तत्र मार्गेषु पलायनपरैर्जनैः । वासितेषु तदीयोग्रदानधाराम्बुसीकरै

स्नात्वा तेनाऽध्वना यातः सरसः कश्चन द्विजः ।
गीतानां षोडशाध्यायश्लोकान्कतिपयाञ्जपन् ॥ १७ ॥

निषिद्ध्यमानो बहुधा पौरैराधोरणैरपि । अमन्यमानः करिणो भीतांश्चलित
फूत्कारेणसञ्चात्रप्वञ्जनादिपरिमर्दयन् । स्पृशन्दानाम्बुजं तस्य स्वस्तिमाविश
ततो महानभूत्तत्र विस्मयो वागगोचरः । मानसे भूमिपालस्य पौराणामपि

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

माहूय ततो राजा फुल्लराजीवलोचनः । तमपृच्छद्द्विजं वाह्यादवतीर्य प्रणम्य च ॥

राजोवाच ।

अलौकिकमिदं विप्र ! त्वयाऽऽद्याऽचरितं महत् ।
कृतान्तकल्पादेतस्मात्कथं निर्यातवान्गजात् ॥ २२ ॥
कमर्चयसि गीर्वाणं कं मन्त्रं जपसि प्रभो ! ।
का च सिद्धिस्तवाऽस्तीति द्विजन्मन्समुदीरय ॥ २३ ॥

द्विज उवाच ।

तायाः षोडशाध्यायश्लोकान्कतिपयानहम् । जपामि प्रत्यहं भूप! तेनैताः सर्वसिद्धयः
तो विहाय द्विरदं कौतूहलरसं नृपः । आजगाम द्विजन्मानमादाय निजमन्दिरम् ॥
भं मुहूर्तमन्वीक्ष्य तोषयित्वा द्विजोत्तमम् । सुवर्णैर्लक्षसङ्ख्याकैर्गीतामन्त्रमुपाददे॥
तायाःषोडशाध्यायश्लोकान्कतिपयानपि । समभ्यस्य ततोराजासत्कारेणसकौतुकः
थैकदा विनिर्गत्य वाह्यालीं सह सैनिकैः । तमेवामोचयद्राजा मत्तमाधोरणाद्गजम्
स्पष्टमितिवाक्यानि राज्यसौख्यममानयन् । तृणवज्जीवितं राजागजस्याग्रेऽविशत्ततः
दायगण्डफलकं मदपङ्क्तिनिरङ्कुशम् । आययौमन्त्रिविश्वासान्नृपः साहसिकाग्रणीः
होरिवमुखादिन्दुः कालास्यादिव धार्मिकः । साधुःखलस्य वदनान्नृपोनिरगमद्गजात्

आगत्य नगरं राजा त्वभिषिच्य कुमारकम् ।
गीतायाः षोडशाध्यायादवाप परमां गतिम् ॥ ३२ ॥

ति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे गीताषोडशा-
ध्यायमाहात्म्ये नवत्यधिकशततमोऽध्यायः ॥ १९० ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# एकनवत्यधिकशततमोऽध्यायः

## मालवभूपतिपुत्रभृत्यस्यमत्तगजमारणेनपुनर्गजप्राप्तिः सप्तदशाध्यायजपप्रभावान्मुक्तिवर्णनम्

ईश्वर उवाच ।

षोडशाध्यायसामर्थ्यं कथितं शृणु साम्प्रतम् ।
स्पष्टं सप्तदशाध्यायमहिमाम्भोनिधिं शिवे ! ॥ १ ॥

खड्गबाहोः सुतस्यैवभृत्यो दुःशासनोऽभवत् । तंगजं धर्तुमागत्य गजात्प्राप्तो य…
तद्वासनानिबद्धात्मा गजयोनिमवाप्य च । गीतासप्तदशाध्यायं श्रुत्वा प्राप्तः प…

देव्युवाच ।

दुःशासनो गजत्वं च प्राप्य मुक्तइति श्रुतम् । तदेव वद कल्याण विस्तरेण मम…

ईश्वर उवाच ।

स्थितः कश्चन दुर्मेधा मण्डलीककुमारकैः । बहुमूल्यं पणं कृत्वा गजमारूढवां…
गत्वा कतिपयान्येव पदानि जनवारितः । नाम्ना दुःशासनो मूढः प्रौढवाक्यमु…

ततो निशम्य तद्वाक्यं क्रोधान्धः सिन्धुरोऽभवत् ।
न्यपतच्च स्खलत्पादः कम्पमानकुमारकैः ॥ ७ ॥

ततो निपतितं किञ्चिदुच्छ्वसन्तं गजोरुषा । ऊद्‌र्ध्वमुन्मूलयाञ्चक्रे कृतान्तकि…

गतासोरपि रोषेण तस्यास्थ्नां च गणं गजः ।
विकीर्णवान्पृथक्कृत्वा मत्तो दन्तावलस्ततः ॥ ९ ॥

ततः कालेन सम्प्रेत्य गजयोनिमवाप सः । महान्तं कालमनयत्सिंहलद्वीपभूपते…
मैत्री गरीयसी सार्द्धं खड्गबाहुमहीभुजा । ततोऽयं जलमार्गेण प्रापितो वारुणो…

जयदेवेन खड्गबाहोः प्रीत्या नीतो महीभुजा ।
जातिं स्मरन्स्वकीयां स पश्यन्बन्धून्सहोदरान् ॥ १२ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ेन महतास्तोकान्दिवसानत्यवाहयत् । उवास खड्गबाहोश्च गृहे तूष्णीमनिर्दिशन्
कदाचित्तुसन्तुष्टः समस्याश्लोकपूरणे । कस्मैचित्कवये प्रादात्तमुपायनहस्तिनम् ॥
तेन कविना रोगोपद्रवभीरुणा । मालवक्षोणिपालस्य विक्रीतश्चैत्यकुञ्जरः ॥१५॥
यत्यपि गते काले पाल्यमानोऽपि यत्नतः । मुमूर्षुरभवत्तत्र कुञ्जरो दुर्जरज्वरः ॥१६
जेघ्रति पयः शीतं नादत्ते कवलं गजः । स्वपित्यपि न सौख्येन मुञ्चत्यश्रूणि केवलम्

ततो हस्तिपकाख्यातं वृत्तान्तमवनीपतिः ।
आकर्ण्य स समायातो यत्राऽऽस्ते ज्वरितो गजः ॥ १८ ॥

चाऽवलोक्य भूपालं जगद्विस्मयकारिणीम् । वाचमूचे गजः सम्यग्विसृष्टज्वरवेदनः
न्नशेषशास्त्रज्ञ! राजनीतिपयोनिधे! । निर्जितारातिसङ्घात मुरारिचरणप्रिय ! ॥२०
मौषधैरलं वैद्यैः किं ध्यानैः किं नु जापकैः । गीतासप्तदशाध्यायजापकं द्विजमानय
ाऽयंमामको रोगः शाम्यत्यत्र न संशयः । यथादिष्टं गजेनाऽसौ तथाचक्रे नराधिपः
ो गजत्वमुत्सृज्यमुक्तो दुःशासनोऽभवत् । तेन विप्रेणाऽभिमन्त्र्यजले क्षिप्ते तदुत्तमे
य दिव्यं समारूढं विमानमवनीपतिः । तं दुःशासनमद्राक्षीत्पाकशासनतेजसम् ॥

राजोवाच ।

किञ्जातीयः किमात्मा त्वं किं वृत्तइति मे वद ।
केन वा कर्मणा जातो गजः कथमिहागतः ॥ २५ ॥
पृष्टो राज्ञा विमुक्तोऽसौ विमानस्थः स्थिराक्षरम् ।
वृत्तं यथा यदाचख्यौ निजं दुःशासनः क्रमात् ॥ २६ ॥

ीतासप्तदशाध्यायं जपन्मालवभूपतिः । नरवर्माऽभवन्मुक्तः कालेनाऽल्पीयसा ततः
ते श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे गीतासप्तदशा-
ध्यायमाहात्म्ये एकनवत्यधिकशततमोऽध्यायः ॥ १९१ ॥

———

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# द्विनवत्यधिकशततमोऽध्यायः

## गीताष्टादशाध्यायेश्लोकपञ्चकजापकस्येन्द्रपदप्राप्तिपुरःसरमष्टादशा[ध्याय]माहात्म्यवर्णनम्

पार्वत्युवाच ।

उक्तसप्तादशाध्यायगौरवं भगवता शिव ! स त्वमष्टादशाध्यायमहिमानमुदीर[य]

ईश्वर उवाच ।

आकर्णयचिदानन्दनिष्पादि निगमोत्तरम् । पुण्यमष्टादशाध्यायमाहात्म्यं गिरि[जे]
समस्तशास्त्रसर्वस्वं श्रोत्रप्राप्तं रसायनम् । संसारयातनाजालविदारणपराय[णम्]
परं रहस्यं सिद्धानामविद्योन्मूलनक्षमम् । चैतन्यं कैटभारातेरग्रगण्यं परं प[दम्]
विवेकवल्लरीमूलं कामक्रोधमलापहम् । पुरन्दरादिगीर्वाणचित्तविश्रामकार[णम्]
सनकादिमहायोगिमनोरञ्जनकारणम् । पाठमात्रपराभूतकालकिङ्करगर्जितम् ॥
अष्टोत्तरशतव्याधिमूलोन्मूलनकारकम् । नातःपरतरं किञ्चिद्रहस्यं हंसगामिनि[...]
उपतापत्रयहरं महापातकनाशनम् । यथाकालेष्वहं नित्यो यथा पशुषु कामधु[क्]

यथा व्यासो मुनीन्द्रेषु व्यासेषु ब्रह्मवित्तमः ।
यथा दिवौकसां शक्रो गुरुः शक्राद्यथा वरः ॥ ६ ॥

यथारसानांपीयूषमुत्तमं विश्वविश्रुतम् । यथागिरीणांकैलासो यथाचेन्द्रोदिवौ[कसाम्]
तीर्थानां पुष्करं तीर्थं यथा पुष्पेषु पङ्कजम् । पतिव्रतासु नारीषु यथा लोके[...]
यथा मखेष्वश्वमेधो यथोद्यानेषु नन्दनम् । यथा रुद्रेषु सर्वेषु वीरभद्रो ममा[...]
यथा दानेषु भूदानं यथासिन्धुषु गौतमी । यथा लोके हरिक्षेत्रं प्रशस्तं धर्म[...]
तथैवाष्टादशाध्यायमाहात्म्यं भुवनोत्तरम् । तत्राख्यानमिदं पुण्यं भक्त्याकर्ण[य]
यदाकर्णनमात्रेण जन्तुः पापैः प्रमुच्यते । अस्ति मेरुगिरेः शृङ्गे पुरी रम्याऽम[रा]
पुरा मम विनोदाय निर्मिता विश्वकर्मणा । निरन्तरं गुणयुता कोटिगीर्वाणसे[विता]

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ज:पुञ्जवती साक्षाद्ब्रह्मविद्येव विश्रुता । चिन्तामणिशिलाबद्धाः प्रासादा यत्र कामदाः
यन्ति मेरुशिखरे चतुर्मुखपुरावधि । यत्र कल्पद्रुमच्छाया सुखासीना पुलोमजा ॥

श्रृणोति श्यामलागीर्भिर्गीतं गन्धर्वयोषिताम् ।
यत्राऽऽस्ते सबलारातिर्दैवैश्च दलितायुषाम् ॥ १६ ॥

यानां रक्तकल्लोलैः स्वर्धुनीशोणतां गता । पुरातनसुधास्वादु स्मारंस्मारं दिवौकसः
यन्ति यत्र क्षुत्क्षामाः कलांप्रत्यहमैन्दवीम् । तस्यां कैवल्यकल्पायामासीत्पूर्वं शतक्रतुः
चीसमन्वितःश्रीमान्सर्वगीर्वाणसेवितः । स कदाचित्सुखासीनो विष्णुदूतैरधिश्रितम्
हस्रनेत्रमायान्तमपश्यत्पुरुषं परम् । ततस्तदीयतेजोभिरभिभूतः पुरन्दरः ॥ २३ ॥
णिसिंहासनात्तूर्णं पतितः स्थानमण्डपे । सिंहासनात्प्रयातस्य ततस्तस्य हरेर्भटाः ॥
र्वाणगणसाम्राज्यपट्टबन्धं वितेनिरे । अथ तस्याऽभिषिक्तस्य महेन्द्रस्य पुलोमजा॥

वामाङ्कमारुरोहाऽऽशु दिव्यदुन्दुभिनिःस्वनैः ।
अथ त्रिदिवसंगीतगीर्वाणाः प्रमदान्विताः ॥ २६ ॥

रा नीराजयामासुर्दिव्यरत्नैः सुरस्त्रियः । ततो वै ऋषयो वेदैराशीर्वादांस्तदा ददुः
म्भाद्या ननृतुस्तस्य पुरस्तादप्सरोगणाः । गन्धर्वाललितालापाञ्जगुर्मङ्गलकौतुकम्
वं नूतनमिन्द्रं तु जुष्टं बहुभिरुत्सवैः । विना शतक्रतुं दृष्ट्वा शक्रो विस्मयमाययौ ॥
मया विहितामार्गे तडागा न विनिर्मिताः । न रोपितामहावृक्षाःपान्थविश्रान्तिकारकाः
कदाचिदहो दृष्टो देवस्त्रिपुरभैरवः । निधिवासे स्थिता देवी पूजिता न मदालसा ॥
घङ्करस्थितः शार्ङ्गधरो नैव निरीक्षितः । न कृतं विरजे स्नानं नैव काशीं पुरीं गतः ॥
देवराटिकावासी दृष्टो नरहरिः स्वयम् । एरण्डविष्णुर्हेरम्बो न जातु परिशीलितः
णुका नेक्षिता जातु मातापुरनिवासिनी । न भक्त्या पूजिता देवी दानापुरनिवासिनी

न भक्त्या त्रिपुरे दृष्टस्त्रिलिङ्गस्त्र्यम्बकः स्वयम् ।
न शार्दूलतडागस्थो वीक्षितः सोमनाथकः ॥ ३५ ॥

पापुरस्थितो देवो घुसृणेशो न वीक्षितः । नागदन्तपुरे ख्यातो नागनाथो न वीक्षितः
र्णग्रामस्थितो दृष्टो न महानमृतेश्वरः । न तुङ्गभद्रतीरस्थो दृष्टो हरिहरः स्वयम् ॥३७

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न वेङ्कटाद्रिनिलयः श्रीनिवासः सुलक्षितः। कावेरीकर्णिकातीरे श्रीरङ्गो नैव

दीनास्त्वनाथाः क्रोशन्तः कारागाराच मोचिताः।

अन्नदानेन दौर्भिक्षे प्राणिनो नैव पूजिताः॥ ३९॥

रात्रौ रात्रौ कृता क्वापि निर्जले नोदकप्रपा। न गौतम्यां कृतं स्नानं न दृष्टो हरि

कृष्णवेण्यां च नं कृतं स्नानं कन्यागते गुरौ। दत्तं नो भूखण्डमपि कवयोनैव

न तीर्थेषु कृतं सत्रं न ग्रामेषु कृता मखाः॥ ४२॥

पुष्करिण्यो न विहिता मध्ये मार्गं बहूदकाः।

न प्रासादाः कृताः क्वाऽपि ब्रह्मविष्णुपिनाकिनाम्॥ ४३॥

न जातुचिद्भयाक्रान्ता रक्षिताः शरणागताः। कथमेकेन पुण्येन देवदत्तमिहार्जि

इति चिन्ताकुलो भूत्वा हरिं प्रष्टुं पुरन्दरः। ययौ सरभसं खिन्नः क्षीराकूपारग

तत्र प्रविश्य गोविन्दं कृतनिद्रं नवैः स्तवैः। अकस्मान्निजसाम्राज्यभ्रंशदुःखमु

इन्द्र उवाच।

रमाकान्त भवत्प्रीत्यै कृतं क्रतुशतं पुरा। तेन पुण्येन सम्प्राप्तं मया पौरन्दरं

इदानीं नूतनः कोऽपि जातो दिवि पुरन्दरः। न तेन धर्मोविहितो न तेन क्रतवः

मम सिंहासनं दिव्यं कथमाक्रान्तमच्युत!॥ ४६॥

महादेव उवाच।

इत्येवं वदतस्तस्य श्रुत्वा वाचं रमापतिः। उन्मीलितस्मिताक्षोऽसावुवाच मधु

श्रीभगवानुवाच।

किं दानैरल्पफलदैः किं तपोभिः किमध्वरैः। वर्त्तमानःक्षितितले स माम्प्रीणित

इन्द्र उवाच।

भगवन्कर्मणा केन स त्वां प्रीणितवान्द्विजः। यत्प्रीत्या भगवान्प्रादात्तस्मैपौरन्द

श्रीभगवानुवाच।

जपत्यष्टादशाध्याये गीतानां श्लोकपञ्चकम्। यत्पुण्येन च सम्प्राप्तं तवसाम्राज्य

सर्वपुण्यशिरोरत्नभूतेन त्वं स्थिरो भव। इतिविष्णोर्वचः श्रुत्वा ज्ञात्वोपायं पु

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विषधरो भूत्वा गतो गोदावरीतटम् । तत्राऽपश्यत्पुरं पुण्यं कालिकाग्राममुत्तमम्
कालेश्वरो देवो वर्त्तते कालमर्दनः । तत्र गोदावरीतीरे स्थितं परमधार्मिकम् ॥
श्यत्करुणावन्तं ब्राह्मणं वेदपारगम् । नित्यमष्टादशाध्यायं जपन्तं क्षान्तचेतसम् ॥
त्तच्चरणद्वन्द्वे लुठित्वा परया मुदा । सत्वमष्टादशाध्यायमपठत्तेन शिक्षितम् ॥५८॥

अथ पुण्येन तेनाऽसौ विष्णोः सायुज्यमाययौ ।
हित्वा पुरन्दरादीनां देवानां पदमल्पकम् ॥ ५९ ॥

चाऽतीव मुदा युक्तो वैकुण्ठमगमत्पुरम् । अतएव परं तत्त्वं मुनीनामिदमुत्तमम् ॥
यमष्टादशाध्यायमाहात्म्यं कथितं मया । यस्य श्रवणमात्रेण सर्वपापैः प्रमुच्यते ॥
वं गीतामाहात्म्यं कथितंपापनाशनम् । पुण्यं पवित्रमायुष्यंस्वर्ग्यंस्वस्त्ययनंमहत्

यः शृणोति महाभागे ! श्रद्धया संयुतः पुमान् ।
सर्वयज्ञफलं प्राप्य विष्णोः सायुज्यमाप्नुयात् ॥ ६३ ॥

ं श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे सतीश्वरसम्वादे
गीताष्टादशाध्यायमाहात्म्ये द्विनवत्यधिकशततमोऽध्यायः ॥ १९२ ॥

———

## त्रिनवत्यधिकशततमोऽध्यायः

### सतीश्वरसम्वादे सूतशौनकसम्वादमुखेनश्रीमद्भागवतमाहात्म्यवर्णनम्

पार्वत्युवाच ।

देवमहादेव सर्वज्ञ सकलार्थद । कृपां मयि परां कृत्वा यत्पृच्छे तद्वदस्व मे ॥१ ॥
तं च गीतामाहात्म्यं बह्वाश्चर्यकथायुतम् । तेन मे भक्तिरुत्पन्नाश्रोतुंकृष्णकथांपराम्
राणेषु तु सर्वेषु श्रीमद्भागवतम्परम् । यत्र प्रतिपदं कृष्णो गीयते बहुधर्षिभिः ॥३ ॥

तन्माहात्म्यं यथा तत्त्वं सेतिहासं वदाऽधुना ॥ ४ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ईश्वर उवाच।

नैमिषे सूतमासीनमभिवाद्य महामतिम्। कथामृतरसस्वादकुशलः शौनको

शौनक उवाच।

अज्ञानध्वान्तविध्वंसि कोटिजन्माऽघनाशनम्।
श्रीमद्भागवताख्यानं सूताऽऽख्याहि रसायनम्॥ ६॥

भक्तिज्ञानविरागाढ्यो विवेको वर्द्धतेकथम्। मायामोहनिरासश्चवैष्णवैःक्रियते
इहघोरैकलौप्रायो जीवश्चाऽसुरतांगतः। क्लेशाक्रान्तस्य तस्याऽथशोधनेकिरत
श्रेयसां यद्भवेच्छ्रेयः पावनानां च पावनम्। कृष्णप्रीतिकरं यच्च साधनं तद्वदा
चिन्तामणिं लोकसुखं सुरेन्द्रास्पदसम्पदम्। प्रयच्छतिगुरुःप्रीतो वैकुण्ठंचाति

सूत उवाच।

प्रीतोऽहं ते द्विजश्रेष्ठ कथयिष्ये यथाश्रुतम्। सारात्सारतरं यच्च संसारभयना
भक्तिप्रवर्द्धकं यच्च कृष्णसंतुष्टिहेतुकम्। तन्मे कथयतः साधो! सावधानतया
कालव्यालमुखालीढजगत्त्राणविधायकम्। श्रीमद्भागवतंशास्त्रं कलौकृष्णेनभा
एतस्मादपरं किंचिन्मनःशुद्धिकरं न हि। जन्मान्तरकृतैः पुण्यैर्लभ्यतेसाधुभि

राज्ञः परीक्षितो मोक्षं ज्ञात्वा कमलसम्भवः।
तोलयामास शास्त्राणि पुराणानि महान्ति च॥ १५॥

श्रीमद्भागवतं तत्र गरीयो भुवि संगतम्। श्रीमद्भागवती वार्ता सुराणामपि दु
इति सञ्चिन्त्य बहुशो मुनयः साधवोऽमलाः। मेनिरे भगवद्रूपं श्रीमद्भागवतं
पठनाच्छ्रवणाद्यस्य नरो याति हरेःपदम्। वर्षेण श्रवणं तस्य बहुसौख्यप्रदा
मासेन भक्तिराभास्यं लभते द्विजसत्तम!। सप्ताहेनश्रुतं च(चै)तत्सर्वथा मुक्ति
किं बहूक्तेन वै साधो श्रीमद्भागवतामृतम्। नित्यंसद्भिःप्रपातव्यं कृष्णलीलाप्रका
सनकाद्यैः पुरा प्रोक्तं नारदाय दयापरैः। ब्रह्मणः श्रुतपूर्वाय सप्ताहश्रवणे वि

शौनक उवाच।

पितुर्लब्ध्वा वरं ज्ञानं श्रीमद्भागवताभिधम्। नारदो लोकतत्त्वज्ञः सर्वदा ह्यटते

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्र तैः संगमोजातो नारदस्य महात्मभिः । श्रुतो देवर्षिणा यत्र सप्ताहश्रवणे विधिः

सूत उवाच ।

त्र ते वर्णयिष्यामि भक्तियुक्तं कथानकम् । यत्पुरा ब्रह्मरातेन मह्यं प्रोक्तं दयालुना

कदा तु विशालायामुपविष्टमधोमुखम् । नारदं सनकाद्यास्ते ददृशुर्दीनमानसम् ॥

दृष्ट्वा चिन्तयानं तु देवर्षिर्भ्रातरंस्वकम् । पप्रच्छुर्विस्मयाविष्टा मुनयस्तत्त्वचिन्तकाः

कुमाराऊचुः ।

त्वं चिन्तयसे ब्रह्मन्नतिदीनइवाऽऽतुरः । वेत्थं मुक्तसङ्गस्य नोचितं वद कारणम्

नारद उवाच ।

अहं पृथ्व्यां समायातो ज्ञात्वा सर्वोत्तमोत्तमाम् ।
तीर्थैर्नानाविधैर्युक्तां पुण्यदैः पुण्यरूपिणीम् ॥ २८ ॥

ष्करे च प्रयागे च काश्यां गोदावरीतटे । हरिक्षेत्रे कुरुक्षेत्रे श्रीरङ्गे सेतुबन्धने ॥२९

तेष्वन्येषु तीर्थेषु भ्रममाण इतस्ततः । नापश्यं कुत्रचिच्छर्म मनःसन्तोषकारकम् ॥

लिना धर्ममित्रेण धरेयं बाधिताऽधुना । सत्यं शौचं दया दानं नास्तिकुत्रापि भूतले

दरम्भरयो लोका वराकाः कूटसाक्षिणः । मन्दाः सुमन्दमतयो महापाखण्डसंश्रयाः

स्त्रीप्रधाना गृहस्थाश्चवर्णिनोव्रतवर्जिताः । वानप्रस्थाःपुरावासान्यासिनोभोगतत्पराः

न्याविक्रयिणोलोभात्कृषिकर्मपरायणाः । भ्रष्टाचारादम्भिनश्चस्वेच्छाचारनिदर्शिनः

आश्रमाय वनैरुद्धास्तीर्थानि सरितो ह्रदाः । देवतायतनान्यत्र दुष्टैरुच्छेदितानि च ॥

योगी सिद्धोऽथवा ज्ञानी सत्क्रियोऽत्र न दृश्यते ।
कलिदावानलेनाऽऽद्य साधनं भस्मतां गतम् ॥ ३६ ॥

ट्टशूला जनपदाः शिवशूला द्विजातयः । कामिन्यः केशशूलिन्यो दृश्यन्ते भुवि सर्वतः

कदाऽहमनुप्राप्तो यमुनायास्तटं शुभम् । दृष्टं वृन्दावनं तत्र यत्र लीला हरेरभूत् ॥

त्र यच्चाद्भुतं दृष्टं श्रूयतां तन्मुनीश्वराः!। एका तु तरुणी तत्र निषण्णा खिन्नमानसा

द्वौ वृद्धौ पतितौ पार्श्वे निःश्वसन्तावचेतनौ । शुश्रूषन्ती प्रबोधन्ती रुदती च तयोःपुरः

शदिक्षु निरीक्षन्ती रक्षितारमिवात्मनः । वीज्यमाना बहुस्त्रीभिर्बोध्यमाना मुहुर्मुहुः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दृष्ट्वा दूराद्गतश्चाऽहं कौतुकेन तदन्तिकम् । मां दृष्ट्वोत्थाय सा बाला वचनं

बालोवाच ।

भोः साधोऽत्रक्षणंतिष्ठ मम चिन्तामपाकुरु । पुंसां च दर्शनं भद्र! सर्वाघौघ
पुण्येन प्राक्तनेनैव दर्शनं तव जायते । अतो मे मानसंदुःखं छेत्तुमर्हसि मानद

नारद उवाच ।

एवमुक्तस्तया चाऽहं कृपया स्निग्धमानसः । अपृच्छं तां वरारोहां कौतुकेन

का त्वमेतौ च कौ भद्रे काश्चेमाः पद्मलोचनाः ।

आख्याहि मत्पुरः सर्वं तव दुःखस्य कारणम् ॥ ४६ ॥

इतिपृष्टा मया सा तु बालादुःखितमानसा । प्रोवाचनिखिलंदुःखमात्मनोदुः

बालोवाच ।

अहं भक्तिरितिख्याता एतौ मे तनयौ वरौ । ज्ञानवैराग्यनामानौ कालयोगेन
गङ्गाद्याः सरितश्चेमा मम सेवार्थमागताः । एताभिः सेवितानित्यं सत्कारैर्णा
न च श्रेयोलभेत्किञ्चित्क्षीणाहं सर्वतो मुने । मम पूर्वं तु वृत्तान्तं शृणु त्वाह
येनाऽहं दुःखिताजाता न लभेशर्मकुत्रचित् । उत्पन्ना द्रविडे चाहं कर्णाटे वृद्धिं
स्थिताकिञ्चिन्महाराष्ट्रे गुर्जरे जीर्णतांगता । तत्र घोरकलेर्योगात्पाखण्डैःखण्डि
दुर्बलाऽहं चिरं जाता पुत्राभ्यां सह सङ्गता । वृन्दावनमिदं प्राप्ता दैवयोगेन
जाताऽहं तु पुनर्बाला नवीनेव सुरूपिणी । इमौ तु शयितावत्र सुतौ मे क्लि

अतिवृद्धौ परित्यज्य गन्तुं नाऽहं क्षमाऽधुना ।

अहं बाला कथं जाता सुतौ मे जरठौ कुतः ॥ ५५ ॥

त्रयाणामेकभावानां वैपरीत्यं कुतोऽभवत् । घटते जरठा माता बालकौ त
अतःशोचामिचाऽऽत्मानंविस्मयाविष्टमानसा । यदित्वं वेत्सिधर्मज्ञ कृपालो
वद सर्वं यथातत्त्वं कारणं चाऽत्र यद्भवेत् । एवं पृष्टस्तया चाऽहं क्षणंचैव
अवोचम्भक्तिमाभाष्य क्लिष्टां कालेन भूयसा । ज्ञानेनाऽहं प्रपश्यामि वृत्तं सर्वं
मा विषादं कुरु प्राज्ञे हरिः शन्ते करिष्यति । सर्वसत्त्वहरो बाले युगोऽयं दारुण

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

लुप्तोऽनेनसदाचारो योगमार्गस्तपांसि च । जनाश्चाद्यासुरायन्ते शाठ्यदुष्कृतकारिणः
सन्तो ह्यस्मिन्सुदुःखार्ता असन्तो हृष्टमानसाः ।
दृश्यते धीरचित्तस्तु पण्डितोऽपि न कोऽपि च ॥ ६२ ॥
अस्पृश्यानवलोक्येयं दुष्टभाराकुला धरा । अन्वब्दं क्रमतो जातोमङ्गलं हीयतेऽन्वहम्
न त्वां तव सुतौ चेमौ कोऽपि पश्यति भामिनि! ।
यूयं तु रागबहुलैस्त्यक्ता जर्जरतां गताः ॥ ६४ ॥
वृन्दावनस्य संगोगाद्बालात्वमभवः पुनः । धन्यं वृन्दावनं चेदं भक्तिर्यत्राऽभवन्नवा
अत्रेमौ ग्राहकाभावान्नवीनत्वं नचाऽऽगतौ । किञ्चिदात्मसुखेनेह प्रसुप्ताविति लक्ष्यते

भक्तिरुवाच ।

कथं परीक्षिता राज्ञा स्थापितोऽद्य शुचिःकलिः । दयापरेणहरिणाह्यधर्मः किमुपेक्षिता
एनं मे सशयं छिन्धि त्वद्वाचा सुखिताऽस्म्यहम् ।
तस्या वचः समाकर्ण्य भूयोऽहमवदं द्विजाः ! ॥ ६८ ॥
यदि पृष्टं त्वया वाले प्रेमतः श्रवणं कुरु । यदा मुकुन्दो भगवान्क्ष्मां त्यक्त्वास्वपदंगतः
कलिस्तद्दिनमारभ्य प्रवृत्तः सत्यबाधकः । दृष्टो दिग्विजये राज्ञा दीनवच्छरणं गतः ॥
न हतोऽस्य गुणद्रष्टासर्वसाधारणं त्विदम् । यत्फलंतपसा नैति न योगेन समाधिना
तत्फलं लभते धीमान्कलौ केशवकीर्तनात् । एतादृशं कलिं दृष्ट्वा सारात्सारफलप्रदम्
विष्णुरातः स्थापितवान्कालिजानां हिताय च ।
कुकर्माचरणात्सारः सर्वतो निर्गतोऽधुना ॥ ७३ ॥
पदार्थाः संस्थिता भूमौ बीजहीनास्तुषा यथा । विप्रैर्भागवती वार्ता गेहे गेहे जने जने
कारिताधनलोभेन कथासारस्ततो गतः । अत्युग्रभूरिकर्माणो नास्तिकादाम्भिकाजना
तिष्ठन्ति सर्वतीर्थेषु तीर्थसारस्ततो गतः । कामक्रोधमहालोभतृष्णाव्याकुलचेतसः ॥
समारभन्ते कमाणि कर्मसारस्ततो गतः । मनसश्चाजयाल्लोभाद्दम्भात्पाखण्डसंश्रयात्
शास्त्रानभ्यसनाच्चैव ध्यानयोगफलं गतम् । पण्डितास्ते कलत्रेषु रमन्ते महिषाइव॥
पुत्रोत्पादनदक्षाश्च न दक्षा मुक्तिसाधने । न हि वैष्णवता कुत्र संप्रदायपुरःसरा ॥७९

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

देवनिन्दापराः सर्वे साधुनिन्दापरायणाः । अयं तु युगधर्मोऽस्ति दीयते कस्य

अतस्त्वं पुण्डरीकाक्षं स्मृत्वा सौख्यमवाप्स्यसि ।
एवं मयोक्तं वचनं श्रुत्वा सा विस्मयं गता ॥
उवाच वचनं भूयो मां प्रशस्य द्विजोत्तमाः ॥ ८१ ॥

भक्तिरुवाच ।

देवर्षे! त्वं तु धन्योऽसि मद्भाग्येन समागतः । साधूनां दर्शनं लोके सर्वसिद्धिप्र
सुखोपायो यथा मे स्यात्तथादिश मुनेऽधुना । सर्वज्ञस्य तव ब्रह्मन्नासाध्यं किम

अजयदजितमायां यस्य मायाधवस्ते वचनरचनमेकं केवलं चाऽऽक
ध्रुवपदमुपयातो यत्कृपातो ध्रुवो वै तमहमरणभूतं ब्रह्मपुत्रं नताऽस्मि

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे भागवतमा
त्रिनवत्यधिकशततमोऽध्यायः ॥ १९३ ॥

---

# चतुर्नवत्यधिकशततमोऽध्यायः

## ज्ञानवैराग्यसहितांक्षीणांभक्तिम्प्रतिप्रबोधनवाक्यमुखेननारदद्वारासनका दत्तवरेणभक्तिसंस्थापनवर्णनम्

सूत उवाच ।

एवं संप्रार्थितो विप्रास्तया भक्त्याऽतिदीनया । पुनश्चाकथयद्यद्वैतच्छृणुध्वं द्वि

नारद उवाच ।

मा खिदस्वं वृथा बाले! समाधाय मनो हृदि ।
श्रीकृष्णचरणाम्भोजं स्मर सौख्यं लभिष्यसे ॥ २ ॥
द्रौपदी च परित्राता येन कौरवकश्मलात् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पालिता गोपसुन्दर्यः स कृष्णः क्वाऽपि नो गतः ॥ ३ ॥

भक्तिः प्रियातस्यसततंप्राणतोऽधिका । त्वयाहूतस्तु भगवान्याति नीचगृहेष्वपि

ादित्रियुगेबोधो विरागोमुक्तिसाधकौ । कलौतु केवलाभक्तिर्ब्रह्मसायुज्यकारिणी

निश्चित्यचिद्रूपी स्वकाङ्गात्त्वां ससर्ज ह । परमानन्दचिन्मूर्तिः स्वप्रियां प्रीतमानसः

बध्वाऽञ्जलिं त्वया पृष्टः किंकरोमीति वै हरिः ।

त्वां तदाऽऽज्ञापयत्कृष्णो मद्भक्तान्पोषयेति च ॥ ७ ॥

कृतं त्वया तद्वै प्रसन्नोऽभूद्धरिस्तदा । मुक्तिं दासीं ददौ तुभ्यं ज्ञानवैराग्यकौसुतौ

भक्तानां पोषणं नित्यं वैकुण्ठस्था करोषि च ।

भूमौ च भक्तपोषायच्छायारूपं समाश्रिता ॥ ९ ॥

क्तिज्ञानवैराग्यैः सहचैवाऽऽगताऽत्रहि । कृतादिद्वापरान्ते हि कालेमुक्तिर्मुदास्थिता

ौ तु संक्षयं प्राप्ता पाषण्डामयपीडिता । त्वदाज्ञया गता शीघ्रं वैकुण्ठे पुनरेव सा

स्मृतमात्रा त्वयाऽद्यापि मुक्तिरायाति सत्वरम् ।

पुत्रीकृत्य त्वयेमौ च स्वपार्श्वे परिरक्षितौ ॥ १२ ॥

ातःकलौमन्दवृद्धौजातौसुतौ तव । तथापि चिन्तां मुञ्च त्वमुपायं चिन्तयाम्यहम्

कलिना सदृशः कोऽपि युगो नास्ति वरानने! ।

तस्मिंस्त्वां ख्यापयिष्यामि गेहे गेहे जने जने ॥ १४ ॥

नकान्धर्मांस्तिरस्कृत्य पुरस्कृत्य महोत्सवान् । यदि प्रवर्त्तये न त्वां तदादासो हरेर्नहि

त्वदन्विताश्च ये जीवा भविष्यन्ति कलाविह ।

पापिनोऽपि गमिष्यन्ति निर्भया हरिमन्दिरम् ॥ १६ ॥

चित्ते भवेद्भक्तिः सर्वदा प्रेमरूपिणी । न ते पश्यन्ति कीनाशं स्वप्नेऽप्यमलमूर्त्तयः

ेन पिशाचो वा राक्षसो वाऽसुरोऽपि च । भक्तियुक्तमनस्कानां स्पर्शने दर्शने प्रभुः

ोभिर्न वेदैश्च न ज्ञानेनाऽपि कर्मणा । हरिर्हि साध्यते भक्त्या प्रमाणंतत्र गोपिका

नृणां जन्मसहस्रेण भक्तिः सुकृतिनां भवेत् ।

कलौ भक्तिः कलौ भक्तिर्भक्त्या कृष्णः पुरः स्थितः ॥ २० ॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भक्तिद्रोहकरा ये च ते सीदन्ति जगत्त्रये। दुर्वासादुःखमापन्नः पुरा भक्ति
अलं वृत्तैरलं तीर्थैरलं योगैरलं मखैः। अलं ज्ञानकथालापैर्भक्तिरेकैव मुक्ति
एवमुक्तं मया सा तु स्वमाहात्म्यं निशम्य वै। सर्वाङ्गहर्षसंयुक्ता मां पुनर्वा
अहो नारद धन्योऽसि प्रीतिस्तेमयिनिश्चला। न कदाचिद्विमुञ्चामिचित्तेम

कृपालुना त्वया साधो! मद्बाधा ध्वंसिता क्षणात्।
पुत्रयोश्चेतना नास्ति ममेमौ प्रतिबोधय ॥ २९ ॥

तस्यास्तद्वचनं श्रुत्वा कारुण्येनान्वितोह्यहम्। तयोःप्रबोधनंकर्तुं प्रवृत्तःपा
मुखं संसृज्य कर्णान्ते शब्दमुच्चैःसमुच्चरन्। ज्ञान!प्रबुध्यतां शीघ्रंवैराग्य!प्र
वेदवेदान्तघोषैश्च गीतापाठैर्मुहुर्मुहुः। बोध्यमानौ तदा तेन कथं चिद्बोध
नेत्रैरनवलोकन्तौ जृम्भन्तौ सालसावुभौ। बककत्पलितौ प्रायः शुष्ककाष्ठ
क्षुत्क्षामौ तौ निरीक्ष्यैव पुनः स्वापमुपागतौ। तदा चिन्तापरोऽभूवंकिंविधे

अहो निद्रा कथं याति वृद्धत्वं चानयोः परम्।
चिन्तयन्निति गोविन्दं स्मरन्नासं द्विजोत्तमाः! ॥ ३१ ॥

व्योमवाणी तदैवाभून्मात्रृषे खिद्यतामिति। उद्यमःसफलस्ते तु भविष्यति
एतदर्थं तु सत्कर्मसुरर्षे त्वं समाचर। तत्कर्म तेऽभिधास्यन्ति साधवः सा
सत्कर्मणि कृते तस्मिन्स्वपनं वृद्धताऽनयोः। गमिष्यति क्षणाद्भक्तिःसर्वतः

इत्याकाशवचः स्पष्टं निशम्याऽपि मया द्विजाः।
न ज्ञातं यन्नभोवाण्या गोप्यत्वेन निरूपितम् ॥ ३५ ॥

किं तत्कर्म च येनैतौ भवतोज्ञानसंयुतौ। क्व भविष्यन्ति ते सन्तःकथंवक्ष्य
मयाऽत्र किं प्रकर्त्तव्यंयदुक्तंव्योमभाषया। अथतौ तत्रसंस्थाप्यनिर्गतोऽह
वृन्दारण्यादपृच्छं च यत्रतत्रद्विजोत्तमान्। वृत्तान्तंसर्वएवाऽथश्रुत्वाविस्मि
न वोत्तरं प्रयच्छन्ति ह्यनभिज्ञा नभोगिरः। असाध्यं केचनप्रोचुरविज्ञेयम
मूकीवभूवुरन्ये तु चिन्तमानाः पुनःपुनः। वेदवेदान्तघोषैश्च गीतापाठैर्मुहुर्मु
बोध्यमानं त्रिकं तत्तु नोदतिष्ठदहो विधिः। योगिना नारदेनाऽपि स्वयं न

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कथं शक्यते कर्तुमितरैरिह मानुषैः । ततश्चिन्तातुरश्चाऽहं बदरीवनमागतः ॥ ४२ ॥
चरामि चाऽत्रैव तदर्थं कृतनिश्चयः । तावद्ददर्श पुरतः सनकाद्यान्मुनीश्वरान् ॥४३
टिसूर्यसमाभासानुवाच मुनिसत्तमान् । इदानीं भूरिभाग्येण भवतां दर्शनं ह्यभूत् ॥
पायं महाभागा वदन्तु प्रीतमानसाः । भवन्तो योगिनां श्रेष्ठा बुद्धिमन्तोवहुश्रुताः॥
रा एव पञ्चाब्दाः पूर्वेषामपि पूर्वजाः । सदा वैकुण्ठनिलया हरिकीर्त्तनतत्पराः ॥
मृतकथोन्मत्ता हरिस्मरणतत्पराः । अतः कालसमादिष्टा जरा युष्मान्न वाधते॥
भ्रूभङ्गमात्रेणद्वारपालौ हरेःपुरा । दैत्यौभूत्वा त्रिजन्मानि पुनस्तत्स्थानमास्थितौ
रीरगिरोक्तं यत्किं तत्साधनमुच्यताम् । अनुष्ठेयं यथा यत्र प्रब्रुवन्तु कृपालवः ॥
ज्ञानविरागाणां सुखमुत्पद्यते यथा । ख्यातिर्वः सर्वलोकेषु तथा साधूच्यतांवुधाः

कुमाराऊचुः ।

चिन्तां कुरु देवर्षे! स्वचित्तेहर्षमावह । उपायः सुखसाध्योऽत्रविद्यतेविश्वसौख्यदः

अहो नारद ! धन्योऽसि विरक्तानां शिरोमणिः ।
श्रीकृष्णप्रेमपात्राणामग्रणीर्वदताम्वरः ॥ ५२ ॥

ये चित्रं न देवर्षे भक्तिसाधनतत्परे । उचितं कृष्णदासानां भक्तेः संचारणंभुवि॥
भिर्वहुधा लोकउपायाः सिद्धये कृताः । श्रमसाध्याश्चतेसर्वे प्रायः स्वर्गफलप्रदाः
ण्ठसाधकः पन्था गुप्तो लोकेषु वर्त्तते । तस्योपदेशकः साधुः प्रायोभाग्येन लभ्यते
सत्कर्मनिर्दिष्टं व्योमवाचा मुनीश्वर! । तज्ज्ञेयमिह सर्वज्ञैर्ज्ञानयज्ञः पुरातनैः ॥
द्भागवतालापो ज्ञानयज्ञः शुकोदितः । भक्तिज्ञानविरागाणां सुखदः प्रतिभाति नः
दोषा इमे सर्वे श्रीमद्भागवतध्वनेः । प्रभीताः प्रपलायन्ते सिंहशब्दाद्वृका इव ॥
वैराग्यसंयुक्ता भक्तिः प्रेमरसापहा । प्रतिगेहं प्रतिजनं सुखक्रीडां करिष्यति ॥

सूत उवाच ।

रोक्तं समाकर्ण्य नारदः प्रीतमानसः । पुनः प्रोवाच भगवांस्तदुत्कर्षं विभावयन्

नारद उवाच ।

वेदान्तघोषैश्च गीतापाठैः प्रवोधितम् । नोदतिष्ठत्त्विकं तत्तु कलिदोषतिरस्कृतम् ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कथं भागवतालापात्तद्विबोधमिहैष्यति । छिन्दन्तु संशयं ह्येनं भवन्तोऽमोघ
विलम्बो नाऽत्र कर्त्तव्यः शरणागतवत्सलाः । ततस्तेसनकाद्यास्तुविरक्ताह्यतु
सिद्धाः सनातना विप्रा नारदं प्रोचुरादरात् ॥ ६३ ॥

कुमाराऊचुः ।

वेदोपनिषदां साराज्जाता भागवती कथा । अत्युत्तमा ततो भाति पृथग्भूताफ
आमूलाग्रं रसोऽस्त्येव रसालस्य यथा फले । पृथग्भूतस्तु पानेन यथा वि
यथा दुग्धे स्थितं सर्पिर्नच स्वादूपकल्प्यते । पृथग्भूतं तु तद्दिव्यं देवानांप्री
इक्षुष्विवादिमध्यान्तं शर्करा व्याप्यतिष्ठति । पृथग्भूता तु सा मिष्टा तथाभाग
श्रीमद्भागवतं नाम पुराणं रसमेव हि । भक्तिज्ञानविरागाणां सौख्यायैव प्रकान
कृष्णेन ब्रह्मणे नाभिकञ्जस्थाय हृदैव हि । तच्चतुःश्लोकमखिलं ब्रह्मैव प्रति
तुभ्यं च ब्रह्मणा प्रोक्तं तच्चरित्रनिदर्शनम् । त्वयाऽपि व्यासदेवाय प्रोक्तं तत्
यदीयस्मरणात्सद्यो निर्विण्णो बादरायणः । चकार महदाख्यातुमात्माराम
अत्र ते विस्मयः केन येन पृच्छेः पुनः पुनः । श्रीमद्भागवतं शास्त्रं क्षमं कृष्णा

सूत उवाच ।

एतन्निशम्य वचनं समुदाहृतं तु योगीश्वरैः सनकमुख्यतमैरभीष्
भक्त्या विधृत्य चरणं च प्रणम्य मूर्ध्ना हृष्टोजगादजगदाधिनिवर्त

नारद उवाच ।

सन्दर्शनं च भवतां विनिहन्त्यघौघं श्रेयस्तनोति भवदुःखदवार्दि
निःशेषशेषमुखगीतकथैकपानात्प्रेमप्रकाशनकृते शरणं गतः वः
पुण्योदयेन बहुजन्मसमर्जितेन सत्संगमो यदि भवेत्कृतिनो जन
अज्ञानहेतुकृतमोहमहान्धकारो नश्येत्तदा ह्युदयमेति महान्विवेक

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे श्रीम
माहात्म्ये चतुर्नवत्यधिकशततमोऽध्यायः ॥ १९४ ॥

---

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# पञ्चनवत्यधिकशततमोऽध्यायः

## कुमाराणामुपदेशमुखेननारदस्यभृग्वादिभिःकामदापुरेगमन, भागवतसप्ताहकरण, कुमारैःभक्तेःस्थानदानवर्णनम्

सूत उवाच ।

अथ देवऋषिस्तत्र कुमाराननुमान्य च । उवाच प्रणतो वाक्यं ज्ञानयज्ञकृतादरः ॥१॥

नारद उवाच ।

ज्ञानयज्ञंकरिष्यामि शुकशास्त्रकथोज्ज्वलम् । भक्तिज्ञानविरागाणां स्थापनार्थं प्रयत्नतः

कुत्र कार्यो मया यज्ञः स्थानं तत्कथ्यतांद्विजाः । चत्वारोयज्ञवाहाश्च यूयमेव वृता मया

कियद्भिर्दिवसैः श्राव्या श्रीमद्भागवतीकथा । कोविधिस्तत्रकर्तव्यो ज्ञानयज्ञविशारदाः

कुमाराऊचुः ।

शृणु नारद वक्ष्यामस्तुभ्यंयत्रकथानृणाम् । श्रृण्वतांपापराशिघ्नी भवेत्पुण्यविवर्द्धिनी

गङ्गाद्वारसमीपे तु कामदाख्यं पुरं महत् । स्वर्णद्याश्चोत्तरे पुण्ये तटमानन्दनामकम् ॥

नानाऋषिगणैर्जुष्टं देवसिद्धनिषेवितम् । नानातरुलताकीर्णं स्वच्छकोमलवालुकम् ॥

रम्यमेकान्तदेशस्थं स्वर्णपङ्कजशोभितम् । यत्समीपस्थजीवानां क्षेत्रस्यैव प्रभावतः ॥

मिथः संस्निग्धचित्तानां वैरं चेतसि न स्थितम् ।

ज्ञानयज्ञस्त्वया तत्र कर्तव्यो हि प्रयत्नतः ॥ ६ ॥

अपूर्वरसदात्री च कथा तत्र भविष्यति । वृन्दावनप्रतोलिस्थं जराजीर्णकलेवरम् ॥

सुतद्वयं पुरस्कृत्य भक्तिस्तत्राऽऽगमिष्यति । यत्र भागवतीवार्ता भक्तिस्तत्रसहात्मजा

कृष्णकीर्तिसुधां पीत्वा तरुणीव भविष्यति ॥ १२ ॥

सूत उवाच ।

एवमुक्त्वा कुमारास्ते नारदेन समन्ततः । गङ्गाद्वारे समाजग्मुर्ज्ञानयज्ञाय सत्वराः ॥

यदा प्राप्तास्तटं ते तु गङ्गया भार्गवर्षभ ! । तदा कोलाहलश्चासीद्भूर्लोकादिकसत्सु

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

श्रीमद्भागवतास्वादलम्पटास्त्यक्तलौकिकाः ।
धावं धावं समाजग्मुः प्राचीना वैष्णवाश्च ये ॥ १५ ॥
भृगुर्वसिष्ठः श्च्यवनश्च गौतमो मेधातिथिर्देवलदेवरातौ ।
रामस्तथा गाधिजशाकलौ च मृकण्डपुत्रात्रिजपिप्पलादाः ॥ १६
योगेश्वरौ व्यासपराशरौ च शुकादयो भागवतप्रधानाः ।
शिष्यैरुपेता बहुशास्त्रविज्ञाः कृष्णामृतास्वादकृतैकतानाः ।
सर्वेऽप्यमी मुनिगणास्सहपुत्रमित्रस्वस्त्रीभिराययुरतिप्रणयेन युक्ताः

वेदान्तानिच्च वेदाश्चमन्त्रास्तन्त्राणिसंहिताः । दशसप्तपुराणानिषट्शास्त्राणि
गङ्गाद्याः सरितस्तत्र पुष्करादिसरांसि च । क्षेत्राणि च दिशःसर्वादण्डकादि
हिमादयोनगास्तत्रदेवगन्धर्वकिन्नराः । द्वीपाः समुद्रा दिक्पालाःपातालस्थास्
दीक्षायां नारदेनाऽथ दत्तमासनमुत्तमम् । कुमारा वन्दिताःसर्वे निषेदुः कृष्ण

वैष्णवाः सुविरक्ताश्च न्यासिनो ब्रह्मचारिणः ।
मुख्या ह्यग्रे स्थितास्तेषां पुरतो नारदः स्थितः ॥ २२ ॥

वामभागे मुनिगणा दक्षिणे च दिवौकसः । वेदोपनिषदोऽन्यत्र तीर्थानिच
जयशब्दो नमःशब्दः शङ्खशब्दस्तथैव च । बभूवाऽऽकाशसंस्पर्शी घोषयन्वि
विमानानि समारुह्य प्रहृष्टा नाकवासिनः । कल्पवृक्षप्रसूनैश्च तां सभां सम

सूत उवाच ।

एवं तेषु निविष्टेषु भृग्वादिषु यथार्हतः । श्रीभागवतमाहात्म्यमूचिरे नारदा

कुमाराऊचुः ।

श्रृणु नारद! वक्ष्यामि महिमानं महाद्भुतम् । श्रीमद्भागवताख्यस्य शास्त्रस्यविधि
सदा नरैः सुकृतिभिः सेव्या भागवतीकथा । यस्याःश्रवणमात्रेण कृतार्थत्वं
ग्रन्थोऽष्टादशसाहस्रो द्वादशस्कन्धसंयुतः । परीक्षिच्छुकसम्वादः श्रीमद्भागवत
तावत्संसारचक्रेऽस्मिन्भ्रमत्यज्ञानमोहितः । यावत्कर्णगतं नोस्याच्छुकशास्त्रं
किं श्रुतैर्बहुभिः शास्त्रैः पुराणैः संहितागमैः । यदि भागवतं पुम्भिर्नश्रुतं भक्ति

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भागवतस्याऽपि नित्यं भवति यद्गृहे । तद्गृहं तीर्थरूपं हि नृणां पापविनाशनम्
मेधसहस्राणि राजसूयशतानि च । भगवत्याः कथायाश्च कलांनार्हन्ति षोडशीम्
त्पापानि तिष्ठन्ति देहेऽस्मिन्मुनिपुङ्गव! । यावन्न श्रूयते सम्यक्छ्रीमद्भागवतं नरैः
ङ्गा न गया काशी प्रतिष्ठानं न पुष्करः । कथाया भागवत्याश्च समापुण्यफलेनच

श्लोकार्द्धं श्लोकपादं वा नित्यं भागवतोद्भवम् ।
पठस्व स्वमुखेनाऽपि यदीच्छसि भवक्षयम् ॥ ३६ ॥

दिर्वेदमाता च पौरुषं सूक्तमेव च । त्रयीभागवतं चैव द्वादशाष्टाक्षरौ मनू ॥३७ ॥
शात्मा प्रयागश्चकालःसम्वत्सरात्मकः । ब्राह्मणाश्चाग्निहोत्रंचसुरभिर्द्वादशींतिथिः
सी च वसन्तर्तुः पुरुषोत्तम एव च । एतेषां वस्तुतो नास्ति पृथग्भावो मुनीश्वर!
भागवतं शास्त्रं व्याकुर्यादन्वहंद्विज !। जन्मकोटिकृतं पापं तस्य नश्यति नारद
ं च पठितं ध्यातं श्रीमद्भागवतं नृभिः । ददातिमुक्तिं भक्तिंवातुलस्यग्न्योश्चसेवनम्
तकाले तु सम्प्राप्ते भयंत्यक्त्वासुदूरतः । श्रीमद्भागवतंभक्त्याश्रृणुयाद्यः समुक्तिभाक्
ष्ठपद्यां च राकायां हेमसिंहसमन्वितम् । अलङ्कृत्य द्विजाग्र्याय श्रीमद्भागवतंददेत्

भक्तियुक्तो विमानश्च मिताशी च जितेन्द्रियः ।
श्रुत्वाऽऽदितः स कृष्णस्य सायुज्यं लोकमाप्नुयात् ॥४४ ॥

आजन्ममात्रमपि येन शठेन चित्तं सम्यङ्नियम्य भुवि कृष्णकथा न पीता
चाण्डालवच्च पशुवद्धत! तेन नीतं मिथ्या स्वजन्मजननीभृशमर्दिता च ॥

यैर्न श्रुतं भागवतं पुराणमाराधितो नो पुरुषः पुराणः ।
मुखे हुतं नैव धरामराणां तेषां वृथा जन्मगतं नराणाम् ॥ ४६ ॥

चित्तं न यस्य तु नरस्य हरेः कथायां सम्प्रीतये दुरितदुष्टमसत्प्रसङ्गात् ।
धिक्तं नरं पशुसमं भुविभारभूतमेवं वदन्ति मुनयः किल पूर्वसिद्धाः॥४७॥

र्लभैव कथा लोके श्रीमद्भागवतोद्भवा । कोटिजन्मसमुत्थेन पुण्येनैव तु लभ्यते ॥

तेन योगनिधे साधो! श्रोतव्या सात्त्वतीकथा ।
प्रत्यहं नियमो नास्ति दिनानां वस्तुतो द्विज ! ॥ ४९ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सत्येन ब्रह्मचर्येण यतोऽस्य श्रवणं मतम् । ततः कलौ विशेषोहिविधिःसप्ता
मनसश्चाजयाद्रोगात्पुंसां चैवाऽऽयुषः क्षयात् । कलेर्दोषबहुत्वाच्च सप्ताहश्र
मनसो निग्रहश्चैव नियमाचरणं तथा । कर्तु सप्तदिनं शक्यं ततो नियम
श्रद्धया श्रवणे नित्यमाद्यन्तावधि यत्फलम् । तत्फलं शुकदेवेन सप्ताहश्रवणे
यत्फलं नास्ति तपसा न योगेन समाधिना । अनायासेन तत्सर्वं सप्ताहश्र
यज्ञाद्व्रताच्च तपसो ध्यानाज्ज्ञानाच्चतीर्थतः । श्रीभागवतसप्ताहनियमो ह्युत्तम

यदा कृष्णो भुवं त्यक्त्वा स्वपदं गन्तुमुद्यतः ।
तदाऽऽज्ञायोद्धवो धीमान्गोविन्दं वाक्यमब्रवीत् ॥ ५६ ॥

उद्धव उवाच ।

भगवन्भवता सर्वं देवकार्यं प्रसाधितम् । अधुना गन्तमिच्छुस्त्वं स्वं पदं त
अतश्चिन्ता ममोत्पन्नात्वद्वियोगभिया विभो । तामपाकुरु देवेश त्वामहं शर

आगतोऽयं कलिर्घोरस्सर्वेऽप्यत्र जनाः खलाः ।
भविष्यन्ति ततो नाथ! किं विधेयं तदाऽऽदिश ॥ ५६ ॥

इयं भारवती भूमिः शरणं कं प्रयास्यति । त्वदन्यो दृश्यते नाऽत्र त्रातास्या
अतोऽस्मासु दयांकृत्वा तिष्ठात्रैवदयानिधे! । साधूनां रक्षणायैव त्वमाविर
निर्गुणोऽपि निराकारः सच्चिदानन्दविग्रहः । त्वद्वियोगेन ते भक्ताःकथंस्था

निर्गुणोपासने कष्टमतोऽस्मद्धितमाचर ॥ ६२ ॥

सूत उवाच ।

इत्युद्धववचः श्रुत्वा चिन्तयित्वा क्षणं हरिः । ददौ भागवतं तस्मै कृपया प
निजं तेजः समाधाय श्रीमद्भागवते द्विज! । दत्त्वोद्धवाय भगवान्स्वकीयं पद
तेनेयं वाङ्मयी मूर्त्तिर्वर्त्तते श्रीहरेरिह । सेवनात्सततंचास्याःपापं नश्येन्नृणां
सप्ताहश्रवणं तेनकथितं सर्वतोऽधिकम् । श्रोतावक्ता प्रच्छकश्च यान्तिमन्म
दुःखदारिद्र्यदौर्भाग्यपापप्रक्षलनाय च । कामक्रोधजयार्थं च कलौ भागवतं
अन्यथा वैष्णवी माया देवानामपि दुर्जया । कथं निवर्तते पुंसां श्रीमद्भागवतं

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सूत उवाच ।

त्येवमुक्त्वा माहात्म्यं श्रीमद्भागवतस्य ते । कथां भागवतीं दिव्यां प्रवक्तुमुपचक्रमुः ॥
दोपनिषदांसारे श्रीमद्भागवते द्विजैः । आरभ्यमाणे तत्रैव भक्तिराविरभूत्क्षणात् ॥

प्रेमान्विता चारुतनुर्मुदान्वितौ सुतौ गृहीत्वा तरुणौ स्वदोर्भ्याम् ।
श्रीकृष्ण गोविन्द हरे मुरारे नाथेति नामानि मुहुर्वदन्ती ॥ ७१ ॥
तामागतां भागवतार्थभूषां सुचारुवेषां ददृशुःसदस्याः ।
व्यतर्कयंश्चापि कथं कुतोऽसौ कास्तीतिसर्वेऽपि सुविस्मिताक्षाः ॥ ७२ ॥
ततः कुमारा जगदुःकृतार्था कथार्थतो निष्पतिताऽधुनेयम् ।
एवं गिरः सा ससुता निशम्य जगाद नम्राब्जभुवः कुमारान् ॥ ७३ ॥

भक्तिरुवाच ।

भवद्भिरद्यैव कृताऽस्मि पुष्टा कलौ प्रनष्टाऽपि कथारसेन ।
तिष्ठामि कुत्राऽहमभीष्टमाभ्यां सहास्पदं मह्यमुपादिशध्वम् ॥ ७४ ॥

सूत उवाच ।

तद्वाक्यमाकर्ण्य विधेः कुमारा विचार्य सम्यक्प्रणिधाय चित्ते ।
ऊचुश्च भक्तिं भवरोगहर्त्रीं प्रेमैकदात्रीं हरिभक्तिभाजाम् ॥ ७५ ॥

कुमाराऊचुः ।

भक्तेषु गोविन्दपरायणेषु साधुष्वथो दीनदयापरेषु ।
मनो नियम्योत्पथसम्प्रवृत्तं कृत्वैकतानं हरिपादपद्मे ॥ ७६ ॥
ततो हि दोषाः कलिजा इमे त्वां द्रष्टुं न शक्ताः प्रभवोऽपि लोके ।
कलौ त्वमेकैव जगद्धिताय भविष्यसे नारद ! संप्रणीता ॥ ७७ ॥
सकलभुवनमध्ये निर्धनाश्चातिधन्या निवसति हृदि येषां श्रीहरेर्भक्तिरेका ।
हरिरपि निजलोकं सत्वरं सम्विहाय प्रविशति हृदि येषां प्रेमसूत्रापिनद्धः

ति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे श्रीमद्भागवत-
माहात्म्ये पञ्चनवत्यधिकशततमोऽध्यायः ॥१९५ ॥

---

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# षण्णवत्यधिकशततमोऽध्यायः

## श्रीमद्भागवतमाहात्म्येगोकर्णवृत्तान्तवर्णनपुरःसरमात्मदेवस्यधुन्धुकारिद्वारापीड़नंगोकर्णसान्त्वनेनवनंगत्वाऽऽत्मदेवस्यमुक्तिप्राप्तिवर्णनम्

सूत उवाच ।

अथ वैष्णवचित्तेषु दृष्ट्वा भक्तिमलौकिकीम् । निजलोकं परित्यज्य भुवमध्या
वनमाली घनश्यामः पीतवासाः किरीटधृत् । काञ्चीकलापपर्यस्तोल्लसन्मकर
त्रिभङ्गललितश्चारुकौस्तुभेन विराजितः । कोटिमन्मथलावण्यो हरिचन्दनचर्चितं
परमानन्दचिन्मूर्तिर्मधुरो मुरलीधरः । आविवेश स्वभक्तानां हृदयान्यमलानि

वैकुण्ठवासिनो ये च वैष्णवाः शान्तमानसाः ।
गूढरूपाः समायाताः श्रोतुकामा हरेः कथाः ॥५॥

तदा जयजयेत्युच्चैः शब्दोऽभूत्कम्बुशब्दयुक् । येनाऽमङ्गलमत्युग्रं कलिजं प्रलीतमभ

तत्रस्थानां जनानां च दृष्ट्वा गेहात्मविस्मृतिम् ।
नारदोऽध्यात्मतत्त्वज्ञः कुमारान्प्रत्युवाच ह ॥ ७ ॥

नारद उवाच ।

अलौकिकोऽयं महिमा मुनीश्वराः सप्ताहजन्योऽद्य विलोकितो मया
मूढाः शठा ये पशुपक्षिणोऽपि तेऽतिप्रयान्त्येव गतिं पराख्याम् ।
अतो नृलोके न तु शास्त्रमन्यच्चित्तस्य शुद्ध्यै विहितं पवित्रम् ॥ ९ ॥
अघौघविध्वंसि कृतार्थतावहं कलौ युगे दोषनिधौ कुमाराः ।
के के न शुध्यन्ति वदन्तु मह्यं सप्ताहयज्ञेन कथामयेन ॥ १० ॥
कृपालुभिर्लोकहितो भवद्भिः प्रकाशितः कोऽपि नवीनमार्गः ।

कुमाराऊचुः ।

ये मानवाः पापकृतः सुदुष्टाः सदा दुराचाररताः समत्सराः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

क्रोधाग्निदग्धाः कुटिलाश्च कामिनः सप्ताहयज्ञेन हरिं व्रजन्ति ते ॥१२॥
सत्येन हीनाः पितृमातृदूषकास्तृष्णाकुलाश्चाश्रमवर्णबाह्याः ।
ये दाम्भिका जीवविहिंसकाश्च सप्ताहयज्ञेन हरिं व्रजन्ति ते ॥ १३ ॥
पञ्चोग्रपापाश्छलकारिणश्च क्रूराः पिशाचा इव निर्दयाश्च ।
ब्रह्मस्वपुष्टा व्यभिचारिणश्च सप्ताहयज्ञेन हरिं व्रजन्ति ते ॥१४॥
कायेन वाचा मनसाऽपि पातकं नित्यं प्रकुर्वन्ति शठा हठेन ये ।
नीचाः कृतघ्ना मलिना दुराशयाः सप्ताहयज्ञेन हरिं व्रजन्ति ते ॥१५॥

सूत उवाच ।

थैवं तुष्टचित्तेऽथ नारदे देवपूजिते । प्रसन्नास्ते कुमाराश्च पुनरूचुश्च नारदम् ॥१६॥

कुमाराऊचुः ।

त्र ते कीर्तयिष्याम इतिहासं पुरातनम् । यस्य श्रवणमात्रेण पापहानिः प्रजायते ॥
ङ्गभद्रातटे पूर्वं पत्तने कोहलाभिधे । वर्णाश्रमाचारयुते धनधान्यसमाकुले ॥ १८ ॥
ात्मदेवइतिख्यातस्तत्राऽऽसीद्द्विजसत्तमः । वेदविद्याविधिप्राज्ञो नित्यकर्मपरायणः
तत्प्रिया धुन्धुली नाम नित्यं स्वीयहिते रता ।
स्ववाक्यस्थापना चाऽपि सुन्दरी सुकुलोद्भवा ॥ २० ॥
र्वकर्मविपाकेन प्रायशो बहुजल्पिनी । शूरा च गृहकृत्येषु क्रूरा च कलहप्रिया ॥२१॥
वं निवसतोस्तत्र दम्पत्योर्निरपत्ययोः । व्यतिक्रान्तं वयश्चापि पञ्चाशद्वर्षसम्मितम् ॥
अथ तौ दुःखितौ जातौ निरपत्यौ गृहे स्थितौ ।
सन्तानोत्पत्तये ताभ्यां दत्तं चाऽपि धनादिकम् ॥ २३ ॥
ोभूहिरण्यवासांसि दत्तान्यपि बहूनि च । न पुत्रो नापि दुहिता जायते पूर्वकर्मणा॥
चैकदा तु निर्विण्ण आत्मदेवो द्विजोत्तमः । गृहंत्यक्त्वा गतोऽरण्यमानपत्येनदुःखितः
त्र तत्र भ्रमन्भ्रान्तोदुःखाकुलितमानसः । क्षुत्क्षामस्तृट्परीतश्च दैवात्प्राप्तोजलाशयम्
जलं पीत्वा ततस्तस्मिंस्तडागे स द्विजोत्तमः ।
वृक्षच्छायां समाश्रित्य निषण्णस्तत्र नारद ! ॥ २७ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अथ तत्र तदैवागात्कश्चित्सिद्धो भ्रमन्महीम् ।
जलं पीत्वा तडागे तु सोऽपि तत्रैव चाऽऽगतः ॥ २८ ॥

तंदृष्ट्वा न्यासिनं शान्तमात्मदेव उदारधीः । सत्कृत्योत्थाय तत्पादौ जग्राहस्व...
उपविष्टौततस्तौ द्वौ कृतप्रश्नौ परस्परम् । सुस्निग्धमानसौ भूत्वा गुरुशिष्यौ...
अथ तं स यतिर्दृष्ट्वा श्वसन्तं दुःखितान्तरम् । पप्रच्छ करुणासिन्धुरात्मदेवं पुनः...

सिद्ध उवाच ।

का ते चिन्ता द्विजश्रेष्ठ! दुःखाय हृदि वर्तते । तां समाचक्ष्व धर्मज्ञ! परितापप्र...

तच्छ्रुत्वा वचनं तस्य सिद्धस्य सुमहात्मनः ।
आत्मदेव उवाचाऽथ स्वस्य दुःखस्य कारणम् ॥ ३३ ॥

आत्मदेव उवाच ।

किं ब्रवीमि मुने दुःखं सञ्चितं पूर्वकर्मणाम् । मदीयाः पूर्वजास्तोयं कवोष्णमुख...
मद्दत्तंनैव गृह्णन्ति पितरो देवताबलिम् । तेनदुःखेन निर्विण्णः प्राणांस्त्यक्तुमिहा...

धिग्जीवितं प्रजाहीनं गृहं चैव धनं कुलम् ।
पाल्यते या मया धेनुः सा वन्ध्यात्वमेति ह ॥ ३६ ॥
यो मया रोपितो वृक्षःसोऽपि वन्ध्यत्वमागतः ।
निर्भाग्यस्याऽनपत्यस्य किमतो जीवितेन मे ॥ ३७ ॥

कुमारा ऊचुः ।

इत्युक्त्वा स रुरोदोच्चैस्तत्पुरो दुःखपीडितः । यदा तदा यतेश्चित्तेकरुणाऽभू...

ललाटाक्षरमालां च दृष्ट्वा ज्ञात्वा स योगवान् ।
आत्मदेवं द्विजं प्राज्ञः पुनरूचे सविस्तरम् ॥ ३९ ॥

सिद्ध उवाच ।

शृणु विप्र! मया तेऽद्य प्रारब्धमवलोकितम् । सप्तजन्मावधिप्राप्तिः पुत्रस्य न ...
मुञ्चाऽऽग्रहं प्रजाहेतोर्बलिष्ठा कर्मणो गतिः । विवेकं तु समासाद्य सुखीभव ...
एवमुक्तं सन्आकर्ण्य सिद्धस्य द्विजसत्तमः । प्रजाशाबद्धचित्तस्तु सिद्धंप्राहाऽति...

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विप्र उवाच।

केन भवेत्किं मे पुत्रंदेहि बलादपि। नोचेत्त्यजाम्यहं प्राणांस्त्वदग्रे शोकमूर्च्छितः
विप्राग्रहं दृष्ट्वा प्राब्रवीत्स तपोधनः। सन्ततेः सगरोदुःखमवापाङ्गः प्रजापतिः॥
त्रकेतुर्गतः कष्टं विधिलेखविमार्जनात्। अतस्त्वमपि धर्मज्ञ! यदि पुत्रं लभेरपि॥
पुत्रेन न सुखीभूया दैवं हि बलवत्तरम्। इत्युक्त्वा द्विजवर्याय स सिद्धः साधुसम्मतः
देकं फलं तस्मै प्राग्रहेण सुतार्थिने। इदं फलं मया तुभ्यं दत्तं पुत्राप्तये द्विज!॥
र्यायै देहि पुत्रस्ते भविष्यति न संशयः। सत्यं शौचं दयादानमेकभक्तं तु भोजनम्
विधि क्रिया कार्यं तेनशुद्धो भवेत्सुतः। एवमुक्त्वा ययौ योगी विप्रस्वगृहमागतः

दत्त्वा पत्न्यै फलं तत्तु सिद्धोक्तमवदच्च ह।
अथ सा धुन्धुली क्रूरा स्ववाक्यस्थापनोत्सुका॥ ५०॥

सख्यै प्राह तत्सर्वं पत्योक्तं सिद्धभाषितम्। यद्यहं भक्षये चेदंफलं सिद्धेनचार्पितम्
र्भो मम भवेत्तर्हि कथं चाऽहं सहाम्यहम्। स्वल्पं भक्ष्यमशक्तिश्च गमने गृहकर्मणि
र्यक्चेदागतो गर्भो तदा मे मरणं भवेत्। प्रसूतौ दारुणं दुःखं सुकुमारी कथं सहे

मन्दायां मयि सर्वस्वं ननान्दा संहरेत्सदा।
चिन्ता मे समनुप्राप्ता किं करोमि शुचिस्मिते!॥ ५४॥

तद्वचनमाकर्ण्य स्नेहभङ्गभयाद्द्विज!। एवमेवेति तां प्राह प्रीत्या प्रहसितानना॥
वं कुतर्कयोगेन तत्फलं नैव भक्षितम्। पत्या पृष्टे फलं भुक्तं भुक्तंचेति तयेरितम्॥
कदा भगिनी तस्याः स्वेच्छया तद्गृहं गता। तदग्रे कथितंसर्वं चिन्तेयं महती हि मे
र्बला तेनदुःखेन ह्यनुजे करवाणि किम्। साब्रवीन्ममगर्भोऽस्ति तुभ्यंदास्ये प्रसूतितः
वत्कालं सगर्भेव गुप्तातिष्ठ गृहेसुखम्। तं बालं पोषयिष्यामि त्वद्गृहे चैवनित्यशः

फलं धेनोः प्रयच्छाऽद्य परीक्षार्थं शुभानने!।
इत्युक्त्वा सा ययौ गेहमात्मनो हृष्टमानसा॥ ६०॥
धुन्धुल्याऽपि यथोद्दिष्टं तद्भगिन्या तथा कृतम्।
अथ प्रसूय सा बालं धुन्धुल्यै चार्पयद्द्रुतम्॥ ६१॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तथा च कथितं भर्त्रे प्रसूतः सुखमर्भकः । लोकस्यसुखमुत्पन्नमात्मदेवप्रजो
दत्त्वा दानं द्विजाग्रेभ्यो जातकर्म चकारच । गीतवादित्रनिर्घोषो गृहे तस्याऽभि
बभूवहर्षमापन्न आत्मदेवो महामतिः । अथ सा प्राह भर्त्तारं दुग्धं मे स्तनयोर्न

पालयिष्ये कथं बालं सद्यः सूतं प्रभोऽधुना ।
मत्स्वसुश्च प्रसूता या मृतो बालः पुराऽभवत् ॥ ६५ ॥

तामानीय गृहे रक्षसाऽर्भकं पोषयिष्यति । इतिश्रुत्वा वचस्तस्य धुन्धुल्या द्वि

तथैव कृतवान्भ्रान्तस्त्वात्मदेवो मुदाऽन्वितः ।
धुन्धुकारीति नामाऽस्य कृतं मात्रा यथार्थतः ॥ ६७ ॥
स्तन्येन पोषमाप्नोति नित्यं मातृष्वसुः सुतः ।
त्रिमासे निर्गते चाऽथ सा धेनुः सुषुवेऽर्भकम् ॥ ६८ ॥

सर्वाङ्गसुन्दरं दिव्यं निर्मलं कनकप्रभम् । दृष्ट्वा प्रसन्नस्तं विप्रः संस्कारान्स्व
तं दिदृक्षवआयाता जनाः सर्वेऽतिविस्मिताः । आत्मदेवस्यविप्रस्य महाभाग्यो
धेन्वा बालः प्रसूतश्च देवरूपोऽतिकौतुकम् । न ज्ञातं तद्रहस्यं तु केनापि विधि

गोकर्णं तं सुतं दृष्ट्वा गोकर्णेत्येव चाभ्यधात् ।
कियत्कालेन सम्प्राप्तौ तारूण्यं तावुभावपि ॥ ७२ ॥

गोकर्णःपण्डितोज्ञानीधुन्धुकारीमहाखलः । स्नानशौचक्रियाहीनोऽक्ष्यभक्षीक्रुध
चौरःसर्वजनद्वेषी दुष्टचाण्डालसङ्गतः । क्रीडतो ह्यर्भकान्धृत्वा बलात्कूपे नि
एवं वेश्याप्रसङ्गेनाऽनयद्द्रव्यं क्षयं पितुः । पिताकृपणवत्तस्य शुचा निःस्वो
अनपत्यसुखी नित्यं कुपुत्रो दुःखदायकः । सिद्धेनोक्तं वचः सत्यमनुभूतं मया

क गच्छामि क तिष्ठामि को मे दुःखं निवारयेत् ।
प्राणांस्त्यक्ष्ये जले वह्नौ भृगोर्वापि पते ह्यहम् ॥ ७७ ॥

इत्येवं चिन्तयानं तमधोमुखमुपागतः । गोकर्णो जनकं ज्ञानी बोधयामास त

गोकर्ण उवाच ।

असारस्तात! संसारो दुःखमोहप्रदो नृणाम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कः सुतः किंधनं कस्य का जाया कः पतिः पितः ! ॥ ७९ ॥
मोहेन बद्धो दीनात्मा लोकः क्लिश्यति नान्यथा ।
नचेन्द्रस्य सुखं किञ्चिन्न सुखं चक्रवर्तिनः ॥ ८० ॥
विरक्तस्य सुखं तात ! मुनेरेकान्तशीलिनः । मुञ्चाऽज्ञानं प्रजारूपं मोहं नरककारणम्
निर्द्वन्द्वो निरभीमानो व्रज त्यक्त्वाऽखिलं वनम् ।
ततस्तद्वाक्यमाकर्ण्य गोकर्णं स द्विजोऽब्रवीत् ॥ ८२ ॥

द्विज उवाच ।

किं कर्त्तव्यं वने साधो तन्ममाऽऽचक्ष्व विस्तरात् । मोहपाशनिबद्धंहि शठंकृपणमानसम्
संसारगर्ते पतितं मामुद्धर दयानिधे! । पितुरित्थं वचः श्रुत्वा गोकर्णो ज्ञानपण्डितः
उवाच दीनं निर्विण्णं पितरं हृष्टमानसः ।

गोकर्ण उवाच ।

मांसास्थिरक्तनिकरैस्स्वशरीरकेऽस्मिन्स्वत्वंत्यजाऽऽशुममतां वनितासुतादौ
पश्याऽनिशं जगदिदं क्षणभङ्गनिष्ठं ज्ञानी विरागरसिको भव भक्तिनिष्ठः ॥
धर्मं भजस्व सततं त्यज लोकधर्मान्संसेव्य साधुपुरुषाञ्जहि कामतृष्णाम्
अन्यस्यदोषगुणचिन्तनमाशुमुक्त्वा विष्णोःकथारसमथोनितरांपिव त्वम्

कुमाराऊचुः ।

एवं सुतोक्तविदितानुभवो निरीहस्त्यक्त्वा गृहं स्थिरमतिर्गतषष्टिवर्षः ।
नित्यं हरिप्रियजनानुगतो महात्मा दुष्प्रापमाप च पदं स हरेर्वनस्थः ॥८७

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे श्रीमद्भागवत-
माहात्म्ये षण्णवत्यधिकशततमोऽध्यायः ॥ १९६ ॥

---

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# सप्तनवत्यधिकशततमोऽध्यायः

धुन्धुकारिवृत्तान्तेतस्यवेश्याभिर्धनलोभेनवधकरणं पिशाचत्वप्राप्ति
धुन्धुकारिदशाखेदखिन्नस्यगोकर्णस्यब्राह्मणानांपुरोज्ञापनंसूर्याज्ञयाभाग
सप्ताहकरणेतस्यपिशाचत्वनिरासोगोलोकप्राप्तिश्च

कुमाराऊचु ।

पितर्येवं वनं प्राप्ते पश्चादागत्य नारद !। जननीं तर्जयामास धुन्धुकारी महाख
क्व वित्तं तिष्ठतिब्रूहि मातरं प्रति नारद!। सर्वथा त्वां हनिष्यामि नचेद्ब्रूया नि

सा तस्य वचनात्त्रस्ता रात्रौ दुःखितमानसा ।
निपत्य कूपे तु मृता लोकैर्ज्ञात्वा बहिष्कृता ॥ ३ ॥

गोकर्णस्तां तु निर्हृत्यद्विजैस्तज्ज्ञातिबान्धवैः । तीर्थयात्रांययौप्राज्ञः समदुःखसु
धुन्धुकारी गृहे तिष्ठन्स्वके पण्यवधूवृतः । अत्युग्रकर्माचारेण तत्पोषणविमूढधी
भूषणान्यभिलिप्सन्त्यस्तमूचुर्वारयोषितः । भोभोः प्रिय वयंसर्वास्त्वया नाथेन

स्थिता नैवाऽत्र कोऽप्यन्यो धनदोऽस्येति मानद !।
तस्मात्सूक्ष्माणि वस्त्राणि भूषणानि द्युमन्ति च ॥ ७ ॥
देहि नो चेद्व्रजिष्यामस्त्वत्सकाशान्नरान्तरम् ।
इति श्रुत्वा वचस्तासां चिन्तयित्वा क्षणं स च ॥ ८ ॥
निर्गतः स्वगृहाद्रात्रौ कामान्धो मृत्युमस्मरन् ।
मुषित्वा कस्यचिद्गेहाद्वस्त्राण्याभरणानि च ॥ ९ ॥

ददौताभ्योमुदायुक्तः प्रीत्यैतासां स नारद!। तानिदृष्ट्वा ह्यमूल्यानि वस्त्राण्याभर
ताःस्त्रियश्चिन्तयामासुश्चौर्येणैतानि चामुना । आहृतानीति निश्चित्यपरस्परम
चौर्यं करोत्यसौ नित्यमेनंराजा ग्रहीष्यति । वित्तंहृत्वा पुनश्चैवमारयिष्यतिनि
अतो रहसि चास्माभिर्हत्वाऽमुंचौर्यकारिणम् । वित्तं च बहु संगृह्य किमन्यत्र

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ततः क्रूरहृदयाःसुप्तं कण्ठग्रहं तदा। पाशैः सुतीक्ष्णैर्बद्ध्वा च व्यापादयितुमुद्यताः
दा च न मृतश्चाऽसौ भृशं कण्ठग्रहेण वै। तदाङ्गाराणि बहुशोमुखे चास्यविचिक्षिपुः
ग्निज्वालातिदुःखेन व्याकुलोनिधनं गतः। तद्देहंचिक्षिपुर्गर्ते प्रायः साँहसिकाःस्त्रियः
ज्ञातं तच्चरित्रं तु केनापि मुनिसत्तम!। लोकैः पृष्टा वदन्तिस्म दूरे यातः पतिर्हिनः
गमिष्यति दीर्घेणकालेन धनकर्षितः। अतःस्त्रीणांन विश्वासः कर्त्तव्यो विदुषांवरैः

विश्वस्तं सर्वथा घ्नन्ति प्रार्थयन्त्यो नवं नवम्।
सुधामयं वचो यासां कामिनां रसवर्द्धनम्॥ १६॥

यंक्षुरधाराभं प्रियःको नाम योषिताम्। अथ ता बहुलं वित्तं गृहीत्वा वारयोषितः
मान्तरं ययुः शीघ्रं भयाद्राज्ञोऽतिविह्वलाः। धुन्धुकारी बभूवाऽथ महाप्रेतःकुकर्मकृत्
त्या रूपधरोनित्यं धावन्दुर्मृत्युतो दिशः। शीतातपपरिक्लिष्टो निराहारःपिपासितः
च लेभे सुखं क्वाऽपि हा हेति प्रवदन्मुहुः। कियत्कालान्तरे त्वेनं मृतं चैवावबुध्यच

गोकर्णस्तीर्थयात्रायां गयाश्राद्धमथाऽकरोत्।
समाप्य तीर्थयात्रां तु स्वं पुरं समुपेयिवान्॥ २४॥

भाजितःसपौरैस्तुप्रीत्या स्वजनबान्धवैः। उवासस्वगृहे चैवदिनानि कतिचिद्द्विजः
त्रौप्रसुप्तं गोकर्णंज्ञात्वा वेश्माङ्गणे स तु। धुन्धुकारी महादुष्टो रौद्रं रूपं व्यदर्शयत्
णं नागःक्षणं चोष्ट्रःक्षणंस महिषोऽभवत्। क्षणमग्निः क्षणंसर्पः क्षणेन पुरुषोऽभवत्
रीत्यमिदं दृष्ट्वागोकर्णो धैर्यसंयुतः। चिन्तयामास मेधावी किमेतदिति विस्मितः
पं दुर्गतिमापन्नः कोऽप्यस्ति पुरुषाधमः। इतिनिश्चित्य मनसा तमुवाच दयान्वितः

गोकर्ण उवाच।

कस्त्वमुग्रतरो रात्रौ भीषयन्मामुपागतः।
प्रेतो वाऽथ पिशाचो वा कुतः प्राप्तो दशामिमाम्॥ ३०॥

ब्रूहि त्वं महाभाग! किं कार्यन्तेमयाऽधुना। घोररूपो यतो रात्रौ मत्समीपमुपागतः
श्रुत्वा वचो भ्रातुर्धुन्धुकारी महाखलः। प्रेतभावमनुप्राप्तो रुरोद भृशमातुरः॥३२
नैव क्षमो वाचःप्रेतत्वेन विमोहितः। सञ्ज्ञया निर्दिदेशाऽथ जलं पातुं पिपासितः



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अथाऽसौ सुमहाभागो गोकर्णः साधुसम्मतः ।
स्वकाञ्जलौ जलं कृत्वा प्राक्षिपत्तमुदीरयन् ॥ ३४ ॥

तत्क्षिप्तं तज्जलं भ्रात्रा गोकर्णेन महात्मना । उपस्थितंच तृप्त्यर्थं प्रेतस्यधुन्धु...
अथोवाचागतज्ञानः प्रदत्तेनाम्बुनाऽमुना । पुण्यात्मनात्मनोभ्रात्रा गोकर्णेन ...

प्रेत उवाच ।

अहंभ्राता त्वदीयोऽस्मि धुन्धुकारीतिनामतः । आत्मनः कर्मदोषेण प्रेतत्वंस...
मम माता मृता दुःखाद्बहुशस्तर्जितामया । द्रव्यहेतोस्ततः पश्चाद्वारस्त्रीपोप...
निषिद्धं कृतवान्कर्म चौर्यादिधनलोभतः । एकदा प्रार्थितस्ताभिर्भूषणान्यस्मा...
धनिकस्य गृहाद्रात्रौ मुषित्वा तान्युपानयम् । ततस्ताधनलोभेन पाशैर्बद्धा ग...
मां तु व्यापादयामासुर्वह्निक्षेपेण मानद ! । गृहीत्वा मद्धनं भूरि ताःसर्वा भूष...
पलायिताःपुरादस्मात्स्वार्थोन्मूलितसौहृदाः । अतःप्रेतत्वमापन्नो भ्रातस्त्वत्...
सिक्तः सञ्ज्ञामहंप्राप्तः पुण्येनाऽतिकृपालुना । वाताहारेण जीवामि दैवादिष्ट...
अपश्यं त्वामहं सुप्तं भ्रातरं स्वंगृहाङ्गणे । ततस्ते ह्यनभिज्ञस्य धर्षणाय कृतो...

अभवं सहसा साधो ! ज्ञातश्चाऽहं त्वयाऽधुना ।
दीनबन्धो दयासिन्धो ! भ्रातर्मामाशु मोचय ॥ ४५ ॥

प्रेतभावादमुष्मात्त्वं कृतार्थोऽसिनसंशयः । इतिश्रुत्वावचो भ्रातुर्गोकर्णोज्ञानव...

भ्रातरं प्राह खिन्नात्मा दुःखितं धुन्धुकारिणम् ॥ ४७ ॥

गोकर्ण उवाच ।

तुभ्यं दत्तो मया पिण्डो गयायां त्वामहं मृतम् ।
श्रुत्वा लोकमुखाद्भ्रातस्त्वं कथं प्रेततां गतः ॥ ४८ ॥

गयापिण्डप्रदानेन दुर्गतोऽपि शुभांगतिम् । प्राप्नोति नाऽत्रसंदेहस्त्वं कथं न...

भ्रातुरित्थं वचः श्रुत्वा गोकर्णस्य महात्मनः ।
धुन्धुकारी दुःखितात्मा प्रोवाच पुरतः स्थितः ॥ ५० ॥

गयाश्राद्धशतेनापि न मे मुक्तिर्भविष्यति । उपायोऽन्यश्चिन्तनीयो ममोद्धार...

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ति तद्वाक्यमाकर्ण्य गोकर्णो विस्मयंगतः । प्राह श्राद्धैर्नमुक्तिश्चेत्तर्ह्यसाध्यागतिस्तव
दानीं त्वं निजस्थानमातिष्ठ प्रेत! निर्भयः । विचार्याऽहं करिष्यामिमुक्त्युपायं परन्तव
तिवाक्यं समाकर्ण्य धुन्धुकारी ततो गतः । निजंस्थानं श्मशानस्थंकलिद्रुममतःपरम्
षांरात्रिं स गोकर्णश्चिन्तयन्नेवनारद । तस्यमुक्तिस्थितस्तत्र तदुपायं न चाध्यगात्॥
तस्ततःसगोकर्णः स्वज्ञातिकुलवान्धवान् । धर्मशास्त्रविदो विप्रान्तान्त्रिवृत्तंन्यवेदयत्

ते विचार्य च तद्वृत्तं शास्त्रेषु वहुशो द्विजाः ।
यदा न ज्ञातवन्तस्तद्वृत्तं सूर्यंतदाऽस्तुवन् ॥ ५७ ॥

द्विजाऊचुः ।

मस्ते भास्करादित्य तमोहन्तर्गभस्तिमन् !। लोकसाक्षिञ्जगद्धाम सुरासुरनमस्कृत!॥
द्शात्मन्हरिहय! भास्वँल्लोकप्रवोधक !। त्वं गतिः सर्वलोकानांसततंधर्मशीलिनाम्

त्वं ब्रह्मा त्वं हरिः शूली सृष्टिस्थितिविनाशकृत् !।
त्वामृते नास्ति लोकेऽस्मिञ्छरणं प्राणिनां विभो !॥ ६० ॥

र्वस्त्वं क्षितिरूपोऽसिभवोऽसिजलरूपधृत् । त्वमग्निरूपोरुद्रोऽसिवायुरस्युग्ररूपधृत्
ीमोऽस्याकाशदेहस्त्वं यज्वा पशुपतिः स्वयम् । महादेवःसोममूर्तिरीशानःसूर्यएवहि
वाऽष्टौ मूर्त्तयो दिव्या इज्यन्तेवेदवादिभिः । सर्वकामसमृद्ध्यर्थंव्याप्तलोकत्रयस्य च

मत्स्यस्त्वं वेदधृक्चाऽसि कूर्मश्चाऽद्रिधरो वरः ।
धराधरो वराहोऽसि लोकधृत्त्वं त्रिविक्रमः ॥ ६४ ॥
ब्रह्मध्रुग्घ्नो भार्गवस्त्वं लोकध्रुग्घ्नोऽसि राघवः ।
भूभारहन्ता कृष्णोऽसि वुद्धोऽस्यसुरमोहकृत् ॥ ६५ ॥

ल्क्यसि म्लेच्छहन्तात्वंधर्मग्लानौयुगेयुगे । देवासुरमनुष्याणांपशुपक्ष्यम्बुचारिणाम्
नाविधानां जीवानांत्वंस्रष्टाब्रह्मरूपधृत् । इन्द्रोऽसि धर्मराजोऽसिवरुणस्त्वंधनेश्वरः
ोकपालस्वरूपेण वर्त्तसे गोगणेश्वर !। त्रयीमूर्त्तिस्त्रिकालेज्यस्त्रिधामात्रिगुणात्मकः
वमेव पूज्यसे लोकैस्त्रिधा भिन्नो दिवाकरः । पद्मप्रबोधनकरस्त्वमेवाऽसि जगत्पते !
त्युदीर्य द्विजश्रेष्ठायावत्तस्थुर्मुनीश्वर !। तावदाकाशगः प्राह स्फुटं तेषां तु शृण्वताम्

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

श्रीसूर्य उवाच ।

श्रूयतां भो द्विजश्रेष्ठा यदर्थं वर्णितोऽस्म्यहम् । भवद्भिर्धुन्धुलीसूनोर्महापातक
आत्मदेवस्य पुण्येन गोकर्णो रौहिणोह्ययम् । श्रीभागवतसप्ताहंकृत्वोद्धर्ता
यद्भवद्भिः कृतं स्तोत्रं मम वैभववर्णनम् । तेन स्तुत्वा नरो विप्रा देवयानं

पुत्रार्थी च धनार्थी च धर्मार्थी मोक्षकामुकः ।
वाञ्छाचिन्तामणिस्तोत्रंपठित्वात्यन्तमाप्नुयात् ॥ ७४ ॥

इत्युक्त्वाभास्करोदेवोविरराम दिविस्थितः । तेद्विजाःसाध्विति प्रोचुर्गोकर्णं
ततः समाजे विप्राणां तुङ्गभद्रातटे शुभे । कौतुकं सुमहद्द्रष्टुं तत्राऽगान्नागरो
गोकर्णो ज्ञाततत्त्वार्थोवक्ताध्यासनमास्थितः । नारायणादिकान्नत्वा सप्ताहंसम
श्रीहरेस्तु वचः शास्त्रं तीर्थं पादाब्जसम्भवम् । यदिसत्यंतदाप्नोतु धुन्धुलीतनं
इतिसंकल्प्य मनसा श्रीमद्भागवताभिधम् । जन्माद्यस्ययतश्चेति श्रीमद्ग्रन्थमुपा
तत्र प्रेतः समागत्य स्थानं पश्यन्नितस्ततः । सप्तग्रन्थियुतं वंशं प्रविष्टो वात

शृण्वत्सु वैष्णवाग्र्येषु ब्राह्मणेष्वथ नारद ! ।
शुश्राव धुन्धुलीपुत्रो ग्रन्थिच्छिद्रस्थितोऽन्वहम् ॥ ८१ ॥

यदा कथाविरामोऽभूत्प्रथमेऽहनि नारद !। तदैका कीचकग्रन्थिःपुस्फोटात्यु
द्वितीयादिष्वहःस्वेवमेकैकग्रन्थिभेदनम् । बभूव सप्तमे भिन्ने स सद्यः प्रेततां
दिव्यरूपधरोभूत्वा तुलसीदाममण्डितः । पीतवासा घनश्यामः प्रवभौ भूष

गोकर्णं भ्रातरं नत्वा प्रोवाचाऽखिलतत्त्ववद्वक् ।
त्वयाऽहं मोचितो बन्धो ! कृपया प्रेतकश्मलात् ॥ ८५ ॥

धन्या भागवतीवार्ता प्रेतत्वोन्मूलिनी श्रुता । सप्ताहोऽपितथाधन्योविष्णुलोक
यत्प्रभावाद्विमुक्तोऽहं प्रेतभावाद्भृशातुरः । आर्द्रं शुष्कंलघुस्थूलंवाङ्मनःकर्मभिः
पातकं भस्मसात्कुर्यात्सप्ताहोऽग्निरिवेन्धनम् । अस्मिन्वैभारतेवर्षेदेवानामपि
शृण्वतांभगवच्छास्त्रंगतिरत्युत्तमाभवेत् । स्नाय्वस्थिमज्जामांसासृक्सङ्घातं
शुचि भागवतास्वादादशुचि त्वन्यथा मतम् । कर्मकश्मलसंदुष्टो देहो नरक

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अतो दोषनिवृत्त्यर्थमेतदेव हि साधनम्। बुद्बुदा इव तोयेषु मशका इव जन्तुषु ॥६१
जायन्ते मरणायैव भगवच्छास्त्रवर्जिताः। भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः॥

क्षीयन्ते चाऽस्य कर्माणि श्रुते भागवते द्विजाः।
एवं ब्रुवति वै तस्मिन्विमानवरमागतम्॥ ६३॥

वैकुण्ठात्तदधिष्ठायगतोऽसौविष्णुमन्दिरम्। विष्णुलोकंगतेतस्मिन्सर्वेविस्मितमानसाः

बभूवुश्चाऽपि पप्रच्छुर्गोकर्णं ते द्विजोत्तमाः॥ ६४॥

द्विज उवाच।

श्रुतं भागवतं सर्वैरस्माभिरिह संगतैः। किं कारणं महाभागत्वद्भ्रातैकोगतो हरिम्

गोकर्ण उवाच।

श्रूयताममिधास्यामि कारणं भ्रातृसद्गतौ। यच्छ्रुत्वा यूयमेवाऽपि गोलोकंचगमिष्यथ
सप्ताहश्रावणं कार्यमुपवासपरायणैः। कृष्णैकतानमतिभिर्गोलोकगतिदायकम्॥ ६७॥
पुनः शृणुध्वं सप्ताहं श्रीमद्भागवतं द्विजाः। एकाग्रचित्ताः सततं कृष्णप्रेमामृतप्रदम्॥

इति श्रुत्वा वचस्तस्य गोकर्णस्य द्विजोत्तमाः।
पुनः श्रोतुं भागवतं सप्ताहं समुपावसन्॥ ६६॥

कृष्णैकतानमतयो नियमेन च नारद!। पुनस्ते शुश्रुवुः सर्वे श्रीमद्भागवतं द्विजाः॥
कथावसाने भगवान्कृष्णः कमललोचनः। आविरासीन्मुनिश्रेष्ठशङ्खचक्रगदाब्जधृत्॥
किरीटकुण्डलधरो वनमालाविभूषितः। पीतवासा घनश्यामः कटकाङ्गदभूषितः॥
तं दृष्ट्वा ते द्विजाः सर्वे विष्वक्सेनादिभिर्युतम्। पार्षदप्रवरैर्हृष्टाःप्रणेमुर्मुविसंगताः॥
जयशब्दो नमःशब्दस्तदासीत्सर्वतो मुने!। अथ शङ्खध्वनिं चक्रे हरिः संहर्षयन्द्विजान्
तदाऽनेके विमानास्तु वैकुण्ठात्समुपागताः। द्विजानां पश्यतां तत्र पार्षदप्रवरैर्युताः॥
गोकर्णं तु समालिङ्ग्यददौसारूप्यमात्मनः। श्रोतॄनन्यान्घनश्यामान्पीतकौशेयवाससः
किरीटिनः कुण्डलिनो हारिणो वनमालिनः। चकार तत्क्षणात्तत्र महदाश्चर्यमप्यभूत्

तस्मिन्ग्रामे स्थिता ये तु आचाण्डालजना मुने!।
समारुह्य विमानांस्तान्ययुः कृष्णाज्ञया दिवम्॥ १०८॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

गोकर्णसहितः कृष्णो गोपगोपीजनप्रियः । गोलोकं समनुप्राप्तः सर्वलोकोपरि

यत्र वृन्दावनं रम्यं शतशृङ्गसमावृतम् ॥ १०६ ॥

तद्बाह्ये परितोवृतं विजयया ह्यत्यद्भुतं राजतेऽ-
रण्यं यत्र तु मण्डपानि सुबहून्यच्छोदवाप्यो ह्रदाः ।
गावः कामदुघाः सुरद्रुमततिच्छायाश्रिता गोपकैः-
क्रीडातत्परमानसैः परिवृतो नन्दात्मजः क्रीडति ॥

मध्ये त्वस्य सुकाननस्य रचितो वृन्दावनेशेच्छया-
रम्यं रत्नसमूहभर्मखचितं प्राकारमुद्भासयन् ।
न्यग्रोधः सुमहांस्ततः प्रतिदिशं गोपीजनाध्यासितं-
वत्सालङ्कृतमद्भुताकृतिमहच्छ्रीगोकुलं राजते ॥

तन्मध्ये भवनं हरेरधिकृतं प्रोद्भासते भास्वरं-
यस्मिन्नन्दगृहेश्वरीसमुदितास्ते राधया राधिताः ।
यद्भाग्यं महदप्युमापतिमुखैश्चिन्त्यं सदाभ्यन्तरै-
स्तत्सूनोर्मधुराकृतेरधिचकास्त्यण्डौघभास्यांशुभिः ॥

वाताम्बुपर्णाशनदेहशोषणैस्तपोभिरुग्रैर्जपयज्ञकर्मभिः ।
योगैश्च संयान्ति नरा न तां गतिं सप्ताहगाथाश्रवणेन यान्ति याम् ॥

इतिहासमिमं पुण्यं यः पठेच्छृणुयादपि । सोऽपि गोलोकमभ्येति किं श्रीभागव

इतिहासमिमं पुण्यं शाण्डिल्योऽपि मुनीश्वरः । पठते चित्रकूटस्थो ब्रह्मानन्दपरि

आख्यानमेतत्परमं पवित्रं श्रुतं सकृद्वै विदहेदघौघम् ।
श्राद्धे प्रयुक्तं पितृतृप्तिमावहेन्नित्यं सुपाठादपुनर्भवश्च ॥ ११६ ॥

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे श्रीमद्भा
माहात्म्ये सप्तनवत्यधिकशततमोऽध्यायः ॥ १९७ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

## अष्टनवत्यधिकशततमोऽध्यायः

### सनत्कुमाराद्युक्तश्रीमद्भागवतसप्ताहश्रवणविधिवर्णनम्

कुमारा ऊचुः ।

अथ ते सम्प्रवक्ष्यामः सप्ताहश्रवणे विधिम् । येन भागवतं सिद्ध्येत्पुंसां कृष्णार्पितात्मनाम् ॥
दैवज्ञं शास्त्रकुशलं समाहूय धनांशुकैः । समभ्यर्च्य मुहूर्तं तु प्राक्पृच्छेद्भक्तिमान्नरः ॥
वदेद्यं मुहूर्तं तु तत्राऽऽरम्भः प्रशस्यते । नभो नभस्येषोर्जाश्च सहः शुचिसमन्विताः
मासाः श्रेष्ठाः कथारम्भे पूर्णा चापि तिथिः शुभा ।
भौमार्कवर्जिता वारा भानि ध्रुवमृदूनि च ॥ ४ ॥
शुभेयोगे शुभेलग्ने प्रारम्भः शस्यते सदा । नित्यायां च कथायांतु पुराणानांमुनीश्वर
द्वादशीं वर्जयेत्प्राज्ञः सूत सूतकसम्भवात् । श्रीमद्भागवतस्याऽपि सप्ताहेनैत्यकेऽपि च
निषेधोऽस्ति देवर्षे प्राहुरेवं पुराविदः । श्रीभागवतसप्ताहो महायज्ञः स्मृतो बुधैः ॥
ततो निमन्त्रणं कार्यं वैष्णवानां समन्ततः । सतांसमाजोभवितासप्ताहं वैष्णवोत्तमाः
आगन्तव्यमतश्चाऽत्र वैष्णवैः श्रवणार्थिभिः । समागतानां तेषांतुनिवासंपरिकल्पयेत्
तीर्थे वाऽपि वने वाऽपि ग्रामे वाऽपि प्रयत्नतः ।
संशोधितायां भूम्यां तु मण्डपं परिकल्पयेत् ॥ १० ॥
कदलीस्तम्भसंयुक्तं चतुर्दिक्षुध्वजान्वितम् । उच्चमासनमप्युक्तं वक्तुस्तस्याऽग्रतो मुने!
आपार्श्वद्वयमुक्तानि श्रोतॄणामासनानिच । उदङ्मुखो भवेद्वक्तासमाजेऽस्मिन्विदांवरः
वेदशास्त्रार्थतत्त्वज्ञो वैष्णवो ब्राह्मणोत्तमः । दृष्टान्तकुशलोधीरोवक्ताकार्योऽतिनिःस्पृहः
सर्वसन्देहहर्त्ताऽपिकार्योवक्तासदैवहि । वक्तुःपार्श्वेसहायार्थंस्थाप्योऽन्यःपण्डितःसुधीः
श्रोतॄणां संशयच्छेत्ता लोकबोधविधायकः । कथा विघ्नविघातार्थंगणेशंप्राक्प्रपूजयेत्
ततो दुर्गां हरं विष्णुं ब्रह्माणं भास्करं द्विजान् ।
सम्पूज्य विधिवद्भक्त्या तर्पयेद्देवताः पितॄन् ॥ १६ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मुख्यः श्रोता ततः पश्चात्पूजयेत्पुस्तकेहरिम् । ततः प्रदक्षिणीकृत्य द्रव्यवस्त्र

धृत्वाऽञ्जलौ पुस्तकस्थं हरिं सम्प्रार्थयेन्मुने ! ।

त्वं भागवत! लोकेऽस्मिन्स्वयं कृष्णो व्यवस्थितः ॥ १८ ॥

समाश्रितो मया नाथ! मुक्त्यर्थं भवसागरे । मनोरथो मदीयोऽयं सर्वथा सफ

निर्विघ्नेन प्रकर्तव्यो दासोऽहं तव केशव !। इत्युच्चार्य मुने द्रव्यं पुस्तकाग्रे सम

वक्तारं प्रार्थयेच्चाऽपि नमस्कुर्वन्कृताञ्जलिः । शुकरूप द्विजश्रेष्ठ सर्वशास्त्रविशारद

श्रीभागवतव्याख्यानादज्ञानं मे विनाशय । इति सम्प्रार्थ्य वक्तारं वरयेत्पञ्चश

द्वादशाक्षरमन्त्रस्य जपार्थं मुनिसत्तम !। गीतवाद्यविधिज्ञांश्च सम्पूज्यार्थांशु

स्थापयेत्कीर्तनार्थं तु कथान्ते विधिवन्मुने । यस्तु जायाधनागारपुत्रचिन्तां

श्रृणुयादेकचित्तस्तु स समग्रं फलं लभेत् । सूर्योदयं समारभ्य सार्द्धं त्रिप्रहर

पठित्वाऽर्थः प्रकर्त्तव्यो वाक्यमध्यायमेव वा । मध्याह्ने घटिकायुग्मं विरमेदपि

कथावसाने कर्त्तव्यं कीर्तनं केशवस्य च । उपवासः प्रकर्त्तव्यः श्रोतृभिस्तत्फले

तदशक्तो हविष्यान्नं सकृत्स्वल्पं समाहरेत् । जलेनाऽपि फलेनाऽपि दुग्धेनचघृते

केवलेनैव कर्त्तव्यं निर्विघ्नं धारणं तनोः । सप्ताहव्रतिनां पुंसां नियमाञ्छृणु

विष्णुदीक्षाविहीनानां नाऽधिकारोऽत्र कीर्तितः ।

ब्रह्मचर्यमधः सुप्तिः पत्रावल्यां च भोजनम् ॥

समाचरेन्नित्यमेव सप्ताहे मुनिसत्तम ! ॥ ३१ ॥

द्विदलं मधुतैलं च परान्नं चेक्षुजं रसम् । भावदुष्टं क्रियादुष्टं जह्यात्पर्युषितं

पलाण्डुं लशुनं हिङ्गुं मूलकं गृञ्जनं तथा । नालिकांचैवकूष्माण्डं नरोनाद्यात्क

कामं क्रोधं मदं लोभं दम्भं मात्सर्यमेव च । मोहं द्वेषं तथाहिंसां नैवकुर्यात्क

वेदवैष्णवविप्राणां गुरुगोव्रतिनां तथा । स्त्रीराजमहतां चापि निन्दां जह्यात्क

सत्यं शौचं दयां मौनमार्जवं विनयं तथा । मनःप्रसन्नतांचाऽपि बुधः कुर्यात्क

श्रीकामस्तनयार्थी च जयकामश्च मोक्षधीः । श्रृणुयाद्भैभागवतंनिष्कामः श्रीहरिं

सप्तमे दिवसे कुर्याल्लङ्घनं तत्समाप्तिके । वक्तुश्च पूजा कर्त्तव्या गोभूस्वर्णास्वरादि

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दतुलसीं मालां श्रोतृभ्यः प्रतिदापयेत्। उत्सवश्च तथा कार्यो गीतवाद्यविशारदैः
गीतार्थं शृणुयाच्चाऽऽपि परेऽहनि विचक्षणः।
प्रतिश्लोकं च जुहुयाद्गायत्र्या वा यथाविधि ॥ ४० ॥
सं मधुसर्पिश्च तिलांस्तण्डुलकान्यवान्। शर्करां च प्रियालश्च द्राक्षांवातामखर्जुरो
भोजानि च कर्पूरं चन्दनागुरुणी पुरम्। लवङ्गं विल्वपत्राणिसहस्रं च पृथक्पृथक्
स्य च विघातार्थं न्यूनाधिक्यनिवृत्तये। आत्मनः पूततार्थं च पठेन्नामसहस्रकम्
शाष्टादशाथाऽपि श्रद्धयाह्यधिकांस्तथा। पायसेनाशयेद्विप्रान्स्वर्णं धेनुश्च दक्षिणा
सिद्ध्यर्थमप्यत्र प्रौष्ठपद्यामथापि वा। स्वर्णसिंहं विनिर्माय तस्य पृष्ठे निधाय च
द्भागवतं वक्त्रे लेखयित्वा समर्पयेत्। एवं कृते विधाने तु सर्वपापनिवारणम् ॥
च्छ्रोतुः सुफलदं श्रीमद्भागवतं श्रुतम्। धर्मकामार्थमोक्षाणां साधनं भक्तिदायकम्
ार्यं विद्यते लोके यदनेन न सिध्यति। ततो भागवतं लोके पुराणेभ्योऽधिकंमतम्
ाष्टादशनिर्मुक्तो वाचकः परिकीर्तितः। द्वात्रिंशदपराधैर्हि मुक्तः श्रोता मतो बुधैः॥
श्रीमद्भागवतं नाम पुराणं कामदं नृणाम्।
तथापि श्रवणं चाऽस्य निष्कामस्यैव भक्तिदम् ॥ ५० ॥
श्रीमद्भागवताभिधः सुरतरुस्ताराङ्कुरः सज्जनिः-
स्कन्धैर्द्वादशभिस्ततः प्रविलसद्भक्त्यालवालोदयः।
द्वात्रिंशत्त्रिशतं च यस्य विलसच्छाखाः सहस्राण्यलं-
पर्णान्यष्टदशेष्टदोऽतिसुलभो वर्वर्ति सर्वोपरि ॥ ५१ ॥
ते कथितंसूत्रं कृतंचाऽपि तवेप्सितम्। ज्ञानवैराग्यभक्तीनां तारुण्यंलोकमोक्षदम्

सूत उवाच।

उक्त्वा ते कुमारास्तु कृष्णाङ्घ्रिसुधयाप्लुताः। विरेमुर्भगवद्भक्ता दीनोद्धरणतत्पराः
कथं तु समाकर्ण्य नारदो भगवत्प्रियः। प्रेमगद्गदया वाचा तानुवाच कृताञ्जलिः॥

नारद उवाच।

योऽस्म्यनुगृहीतोऽस्मि भवद्भिः करुणापरैः। यद्भागवतसप्ताहान्निकटे दर्शितो हरिः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

श्रवणं सर्वधर्मेभ्यो वरं मन्ये तपोधनाः। वैकुण्ठस्थो यतः कृष्णः श्रवणाद्यः

सूत उवाच।

एवं ब्रुवति वै तस्मिन्नारदे वैष्णवोत्तमे। पर्यटंस्तं समायातस्तत्र योगेश्व...

छिरष्टवर्षाकृतिरम्बुजाक्षो व्यासात्मजो ज्ञानपयोधिचन्द्रः।
कथावसाने निजलाभतुष्टो हृदाऽनिशं भागवतं पठंश्च ॥ ५८॥
दृष्ट्वा सदस्यास्तमथोरुतेजसं सद्यः समुत्थाय वरासनं ददुः।
सचोपविष्टः सुखमासने यदा तदाविरासीद्धरिरब्जलोचनः ॥ ५९॥
भवो भवान्या कमलासनः सुतैस्तत्राऽऽगतः कीर्तनदर्शनाय च।
सुरेशमुख्यास्त्रिदशा विमानकैः समागतास्तैरभवद्धृतं नभः ॥ ६०॥
प्रह्लादस्तालधारी तरलगतितया ह्युद्धवः कांस्यधारी-
वीणाधारी सुरर्षिः स्वरकुशलतया रागकर्ताऽर्जुनोऽभूत्।
इन्द्रो मार्दङ्गिकोऽभूज्जयजयसुवचः प्रावदंस्ते कुमाराः-
सद्भावस्य प्रवक्ता निरतिशयगुणो व्यासपुत्रो बभूव ॥
ननर्त्त मध्ये त्रिकमेव तत्र ज्ञानादिकानां नवरूपयुक्तम्।
अलौकिकं कीर्त्तनकं समीक्ष्य प्रसन्नचेता हरिरित्युवाच ॥ ६२॥
मत्तो वरं भागवता वृणीध्वं प्रीतात्कथाकीर्तनतो भृशं वः।
श्रुत्वाऽथ तद्वाक्यमतिप्रसन्नाः प्रेमार्द्रचित्ता हरिमूचिरे ते ॥ ६३॥

कुमाराऊचुः।

सप्ताहयज्ञेन कृतेन भक्त्या सद्यः प्रसन्नो भविता मुरारे!।
कलौ युगे घोरतरे नराणां स्वल्पायुषां विघ्नशताकुलानाम् ॥ ६४॥
एवं वरं विश्वविधानपालनप्रणाशहेतोर्भवतोऽखिलात्मनः।
वृणीमहेऽन्यो न मनोरथो विभो! भवत्पदाम्भोजनिषेविणां हि...

एवमस्त्वितिचैवोक्त्वा तत्रैवाऽन्तर्दधे हरिः। नारदः सुप्रसन्नात्मा कुमारान...

ततस्ते सनकाद्याश्च भृग्वाद्याश्च शुकादयः। प्रययुःस्वाश्रमान्हृष्टाःपीत्वातत्क...

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

...ः सुताभ्यां सहिता नारदेन प्रवर्तिता । भूमण्डले समस्तेऽस्मिंस्तदाप्रभृति शौनक

शिव उवाच ।

...ख्यानं महदाकर्ण्य प्रीतात्मा शौनकः प्रिये । पर्यपृच्छत्पुनः सूतं सर्वसन्देहभञ्जनम्

शौनक उवाच ।

...नोक्तं कदा राज्ञे गोकर्णेन कदा पुनः । सुरर्षये कदा ब्राह्मैरेतदाख्याहि मानद ! ॥

सूत उवाच ।

...ष्णनिर्गमात्त्रिंशद्वर्षाधिगते कलौ । भाद्रशुक्लनवम्यां वै कथारम्भं शुकोऽकरोत्

...क्षिच्छ्रवणान्ते तु गते वर्षशतद्वये । शुचिशुक्लनवम्यां तु गोकर्णोऽकथयत्कथाम् ॥

...ादपि कलौ याते त्रिशते सषडब्दके । ऊचुरूर्जे सिते पक्षे नवम्यां ब्रह्मणस्सुताः ॥

...ौ सहस्रमब्दानामधुना प्रगतं द्विज !। परीक्षितो जन्मकालात्समाप्तिं नीयतां मखः

---

...७४तमश्लोकादारभ्याध्यायसमाप्तिपर्यन्तं श्लोकाः पुण्यपत्तनपुस्तके न सन्ति ।
...स्थाने अधोलिखिताः श्लोकास्सन्ति ।

...तत्ते समाख्यातं यत्पृष्टोऽहं त्वयानघे । कलौ भागवती वार्ता भवरोगविनाशिनी

कृष्णप्रियं सकलकल्मषनाशनं च मुक्त्येकहेतुमिह भक्तिविलासकारि ।
सन्तः कथानकमिदंपिबतादरेण लोके हितार्थपरिशीलनसेवया किम् ॥ २॥
स्वपुरुषमभिवीक्ष्य पाशहस्तं वदति यमः किल तस्य कर्णमूले ।
परिहर भगवत्कथासुमत्तान्प्रभुरहमन्यनृणां न वैष्णवानाम् ॥ ३ ॥

असारेसंसारेविषयविषसंगाकुलधियःक्षणार्थंमोक्षार्थंपिबतशुकगाथातुलसुधाम्
किमर्थंव्यर्थंभोव्रजतकुपथेकुत्सितपथेपरीक्षित्साक्षीयच्छ्रवणगतमुक्त्युक्तिकथने॥

...हसंस्थेन श्रीशुकेनेरिता कथा । कण्ठे सम्बध्यते येन स वैकुण्ठप्रभुर्भवेत् ॥५

इति च परमगुह्यं सर्वसिद्धान्तसिद्धं सपदि निगदितं ते शास्त्रपुञ्जंविलोड्य
जगतिशुककथातोनिर्मलंनास्तिकिञ्चित्पिबपरसुखहेतोर्द्वादशस्कन्धसारम्॥
एतां यो नियततया शृणोति भक्त्या यश्चैनां कथयति शुद्धवैष्णवाग्रे ।
तौ सम्यग्विधिकरणात्फलं लभेते याथार्थ्यान्नहि भुवने किमप्यसाध्यम् ॥)

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ईश्वर उवाच ।

इतिश्रुत्वा वचस्तस्य शौनको मुनिसत्तमः । पूर्णं चकार तं यज्ञं सहस्र

ब्राह्मं पाद्मं वैष्णवं च कौर्म्मं मात्स्यं च वामनम् ।

वाराहं ब्रह्मवैवर्त्तं नारदीयं भविष्यकम् ॥ ७६ ॥

आग्नेयमर्द्धं वै सूताच्छुश्रुवुर्लोमहर्षणात् । एतानि तु पुराणानि द्वापरान्ते

शौनकाद्यैर्मुनिवरैर्यज्ञारम्भात्पुरैव हि । यदा तु तीर्थयात्रायां बलदेवः समा

नैमिषं मिश्रिकं नाम समाहूतो मुनीश्वरैः । तत्र सूतं समासीनं दृष्ट्वा त्वथ

चुक्षुभे भगवान्रामः पर्वणीव महोदधिः । आषाढशुक्लद्वादश्यां पारणाह

पूर्वार्द्धयामवेलायां भावित्वात्कृष्णमायया । मुग्धोदर्भकरो रामः प्राहरल्लो

ततो मुनिगणाः सर्वे हाहाकारपरायणाः । बभूवुर्नगजेऽत्यर्थं शोकदुःखाकु

ऊचुश्च रामं लोकेशं विनयेन क्षमापराः ॥ ८२ ॥

ऋषयऊचुः ।

राम राम महाबाहो! भवता लोककारिणा । अजानतेवाचरिताहिंसाब्रह्मव

व्यासशिष्यो ह्ययं साक्षात्पुराणर्षिर्महातपाः । अस्मै ह्यध्यासनंदत्तमस्मा

अष्टादशपुराणानां वाचकाय कृतक्षणैः । कथायां जगदीशस्य दीर्घमायुश्च

तद्भवाँल्लोकरक्षार्थं धर्मसेतुप्रवर्तकः । आविर्भूतो जगन्नाथो निग्रहानुग्रहक्ष

इत्युक्त्वा मुनयस्ते तु बलदेवाग्रतः प्रिये ! । तूष्णींबभूवुःसहसा स्मरन्तो

ततः प्रोवाच भगवान्रामः शत्रुनिषूदनः । विप्रान्सम्प्रीणयंस्तांस्तु लोकवेद

श्रीराम उवाच ।

विप्राः शृणुत भद्रं वः कोपं त्यक्त्वा सुदूरतः । यदहंवेद्मि भवतामभीष्टं का

अस्य पुत्रो महाज्ञानी भविष्यतिवरान्मम । भवतामीप्सितं सर्वं शास्त्रम्वै का

यदर्थमहमाहूतस्तच्च कार्य्यं समुच्यताम् ॥ ९० ॥

ईश्वर उवाच।

इतिश्रुत्वा वचस्ते तु रामस्य सुमहात्मनः । बल्वकस्य वधार्थाय प्रेरयामा

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स बल्वलं हत्वा प्रसाद्य मुनिपुङ्गवान् । प्रणिपत्याभ्यनुज्ञातस्तीर्थयात्रामुपागतः ॥
यात्रां गते रामे शौनकाद्या मुनीश्वराः । लौमहर्षणिमाहूय सत्कृत्य नगनन्दिनि ॥
ईं स्थापयामासुः शेषसंकीर्तनायवै । आग्नेयोत्तरमाहात्म्यं श्रीमद्भागवतान्तकम्
गं सप्तकं सार्द्धं शुश्रुवुर्हृष्टमानसाः । दशसप्तपुराणानि कृत्वा सत्यवतीसुतः ॥
वात्मनस्तोषंभारतेनाऽपि भामिनि ! । ज्ञात्वाऽस्य हृदयं खिन्नं नारदो देवदर्शनः
जगाम भगवान्व्यासस्याश्रममुत्तमम् । तं दृष्ट्वा वासवीसूनुः सत्कृत्यासनपूर्वकम्
ईं पूजयामास विधिदृष्टेन कर्मणा । अथ तं नारदः प्राह किंभवान्क्लिष्टमानसः
यते तत्समाचक्ष्व सर्वं सन्देहकारणम् । इतिपृष्टः स मुनिना पराशरसुतोऽब्रवीत्
न्किकारणं चेतो मोहे जाने न तत्त्वहम् । भवान्विज्ञानकुशलो ज्ञात्वा तत्प्रब्रवीतुमे
विज्ञापितस्तेन नारदोऽध्यात्मकोविदः । उवाच परमं तत्त्वं यदुक्तं विधिनात्मने॥

नारद उवाच ।

पाराशरे मत्तः कारणं येन वै तव । असम्पन्नं मनो भाति शास्त्रयोनेरपि प्रभोः॥

त्वयाऽवतीर्य लोकेऽस्मिन्वेदा व्यस्ता विभागशः ।
कृतानि च पुराणानि सेतिहासानि चानघ ! ॥ १०३ ॥

सर्वस्त्रयीधर्मो वर्णाश्रमनिवासिनाम् । निर्दिष्टो वीक्ष्यकालेन नृणामल्पायुषांकलौ
ाधिकारः सर्वेषां दृश्यते श्रवणादिषु । स्त्रीशूद्रद्विजबन्धूनां साधुसङ्गमशालिना ॥
ादयो यथाशश्वद्वर्णितास्तेषु वै त्वया । प्राधान्येन तथा नैव वर्णितो महिमा हरेः
धर्मक्रियाशून्ये कलौ दोषनिधौ मुने । न गतिः पापकर्तृणां विनाकृष्णकथामृतम्
एवं गुणोह्यस्मिन्घोरे कलियुगे नराः । यत्कृष्णकीर्तनेनैव मुच्यन्ते कर्मबन्धनात्
ो दानं तपः कर्म ज्ञानं ध्यानं कृतादिषु । सिद्धिदं च तथा ब्रह्मन्नामकीर्त्तनकं कलौ
ोवै कलिजातानामुद्धारार्थं नृणां भवान् । श्रीमद्भागवतं नाम पुराणं वर्णयत्वलम्
प्रवर्तितेनाङ्ग! भवतो मानसंध्रुवम् । तोषमेष्यति लोकाश्च प्राप्स्यन्ति कृतकृत्यताम्

ईश्वर उवाच ।

मादिश्य स मुनिर्व्यासायामिततेजसे । ययौ यादृच्छिकः शश्वद्गायन्हरिगुणान्प्रिये

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नारदे तु गते पश्चाद्व्यासः सर्वार्थदर्शनः । चकार संहितामेतांश्रीमद्भागवतं
पैलादींश्चतुरो वेदानध्याप्य विधिपूर्वकम् । पुराणसंहिताःसर्वाः सूताय
श्रीमद्भागवतं नाम पुराणंब्रह्मसम्मितम् । शुकमध्यापयामास विरतं लोके
सा संहिता भागवती लोमहर्षणसूनुना । श्रुता कथयतो राज्ञे औत्तरेयाय
शौनकादिऋषिभ्यस्तु तेन प्रोक्ता यथार्थतः । वरीवर्त्ति पुराणानामुपरीयं
अस्यांसंलग्नचित्तानां नृणामन्यत्र नो रतिः । जायते मानसे कृष्णोनन्दसुत
यत्त पृष्टं त्वया भद्रे लोकनिस्तारहेतवे । श्रीभागवतमाहात्म्यं मह्यं संकी
तत्सर्वंच मया तुभ्यं निर्दिष्टं गणपाम्बिके ! । नानेतिहाससहितं भक्तिमु

यः शृणोति नरो भक्त्या माहात्म्यं पठतेऽपि च ।
अनुमोदनेन वासोऽपि लभते परमां गतिम् ॥ १२१ ॥
द्विजोऽधीत्याऽऽप्नुयाद्वेदान्क्षत्रियस्तु लभेज्जयम् ।
धनं वैश्यस्तथा शूद्रः श्रुत्वैव लभते गतिम् ॥ १२२ ॥

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे उमा
सम्वादेश्रीमद्भागवतमाहात्म्येऽष्टनवत्यधिकशततमोऽध्यायः ॥ १९

---

# एकोनद्विशततमोऽध्यायः

## कालिन्दीमाहात्म्यइन्द्रयागविधिवर्णनम्

ऋषयऊचुः ।

कालिन्द्याश्चैव माहात्म्यं वद सूत ! सविस्तरम् ।
यस्मै प्रकाशितं येन तदाख्यानसमन्वितम् ॥ १ ॥

सूत उवाच ।

एकदा पाण्डुतनयः शुश्रुषुः सौभरेः शुभम् । ज्ञानं तत्स्थानमभ्येत्य नत्वा त

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

युधिष्ठिर उवाच ।

...मार्तण्डतनयातीरतीर्थेषु यच्छुभम् । तीर्थं तद्वद वैकुण्ठजन्मभूमि पुरात्परम् ॥३॥

सौभरिरुवाच ।

...द्वा तु मुनिश्रेष्ठौ दिवि नारदपर्वतौ । गच्छन्तौ खाण्डववनं पश्यतः सुमनोहरम्
...वतीर्णौ नभस उपविष्टौ तटे शुभे । कालिन्द्याः क्षणविश्रान्तौ स्नातुं विविशतुर्जले
...औशीनरोराजा मृगयां तौ चरन्वने । दृष्ट्वा तन्निर्गमापेक्षी निषसाद सरित्तटे ॥६॥

तौ मुनी विधिवत्स्नात्वा परिधायाऽम्बराणि च ।
वन्दितौ शिरसा राज्ञा तेनोपविशतां तटे ॥ ७ ॥

...ऽऽलोक्य सुवर्णस्य शिबिर्यूपान्सहस्रशः । नारदं गर्वसहितः पर्वतं च जगाद सः

शिबिरुवाच ।

...तां मुनिशार्दूलौ कस्येमा यागयष्टयः । केनाऽत्र विहितो यज्ञः सुरेणाऽथ नरेणवा

मुक्त्वा काश्यादितीर्थानि यज्ञैरीजेऽत्र कः पुमान् ।
को विशेषोऽत्र तीर्थेभ्यस्तेभ्यो विज्ञानसन्निधिः ॥ १० ॥

नारद उवाच ।

हिरण्यकशिपुर्जित्वा शक्रादिदेवताः । त्रैलोक्यराज्यमासाद्य सोऽखर्वं गर्वमाददे
...दस्तस्य तनयो नारायणपरायणः । तस्मै सोऽद्रुह्यताऽभीक्ष्णं पापात्मा नष्टमङ्गलः

तद्द्रोहाद्विष्णुना सद्यो नृसिंहतनुधारिणा ।
हत्वा दैत्यपतिं स्वर्गराज्यं स्वःपतयेऽर्पितम् ॥ १३ ॥

...दं ...प्य देवेशो बृहस्पतिमथाऽवदत् । मूर्ध्नाऽभिवन्द्यतत्पादौनारायणगुणान्स्मरन्

इन्द्र उवाच ।

... नृसिंहरूपेण हरिणा लोकधारिणा । दत्तं मे देवताराज्यं यष्टुमिच्छामि तं मखैः
...नंपवित्रंकथय ब्राह्मणांश्चैव मे गुरो!। नविधेयो विलम्बोऽत्र त्वया नो हितकारिणा

बृहस्पतिरुवाच ।

...स्ति ते खाण्डववनं रम्यं परमपावनम् । केतक्यशोकबकुलमधुमत्तमधुव्रतम् ॥ १७॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तत्राऽस्तियमुनापुण्याधन्या त्रैलोक्यपावनी। ददाति स्मरणे स्वर्गं मरणे
तत्तीरे यज देवेश! केशवंबहुभिर्मखैः। यदीच्छसि स्वकीयानां कल्याणं त्वं

नारद उवाच।

गुरोर्वचनमाकर्ण्य तूर्णमारुह्य वाहनम्। शिवप्रदमिमं शक्रः स्वकीयवनमा
गुरुणा सह देवैश्च यज्ञोपकरणैस्तथा। अत्राऽऽगत्य विलोक्यैतद्वनं लेभे

गुरुणा नोदितः शक्रःसप्तर्षीन्ब्रह्मणः सुतान्।
वसिष्ठादीन्द्विजान्वृत्वा यजतिस्म जगत्पतिम्॥ २२॥

तस्य प्रसन्नो भगवान्ब्रह्म शाम्भ्यां सहागतः। क्रतौ शतक्रतोर्यत्र महानभव
देवत्रयीं सतां वीक्ष्य शक्रो वक्रमतिस्तदा। उत्थायासनतस्तूर्णम्ववन्दे मुनि
वाहनेभ्योऽवरुह्याशुतदन्तेषूपविश्यते। आसनेषु सुहैमेषु बभुर्वेदीष्विवाग्न
सितरक्ताङ्गयोः शम्भुब्रह्मणोर्हरिराबभौ। नीलच्छविः पीतवासास्तडित्वानि
शक्रः प्रक्षाल्य तत्पादान्मूर्ध्ना तज्जलमादधे। अब्रवीच्च मुदा युक्तो वचनं म

इन्द्र उवाच।

विहितोऽयं मया देव! यज्ञोऽद्य सफलोऽभवत्।
यदि मे दर्शनं प्राप्ता दुर्लक्ष्या अपि योगिभिः॥ २८॥

एकेनैव त्वयाविष्णो कृतामूर्तिस्त्रयीमयी। गुणैस्तथापिनानात्वं स्फटिकस्
यथादारुषुगूढोऽग्निर्घर्षणेनविना विभो!। नाविर्भवति भूतानां हृत्सु भक्त्या
एकस्य त्वयि भक्तिःस्यात्सर्वभूतोपकारिणी। बभूवुः सुखिनो देवाः प्रह्लाद
वयं विषयिणो देव!त्वन्मायावृतचेतसः। न जानीमः स्वरूपं ते यथात्वत्पाद
भोब्रह्मन्भो महादेव युवामपि जगद्गुरू। एतस्यैव गुरुत्वेन यतोनातः पूर्व
यत्किञ्चिदुच्यते वाचा मनसा च विचिन्त्यते। अस्यैवमाया तत्सर्वं तद्ब्रह्म

प्रपञ्चजातं यदिदं विलोक्यते न सत्यमित्येव विचिन्त्यते नरा
भजन्ति विष्णोश्चरणं तरन्ति ते यदम्बुमूर्ध्ना हर! धार्यते त्वया
विधेऽस्य भूयादनुजन्मपादयो रतिर्मदीया कमलावयोर्भृशम्।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यदीक्षणक्षोभितया तया जगत्समस्तमेतन्महदादि जायते ॥ ३६ ॥
भवादृशो नास्ति कृपापरोऽपरो विपक्षपक्षे वितनोषि यत्सुखम् ।
स्वलोकशोकापनये कृपालुता यदुच्यते ते नृहरे! तदज्ञता ॥ ३७ ॥

नारद उवाच ।

भिष्टूय देवेशं केशवं प्रणतोऽग्रतः । तस्थौ तद्वाक्यशुश्रूषादत्तचित्तो महीपते! ॥३८
कर्ण्य मुनयस्तुतिं तस्य रमापतेः । कृतामिन्द्रेण सदसि साधुसाध्विति चाब्रुवन्
न्यो वर्षशतं ये कुर्वन्ति महत्तपः । न तेषामीदृशी भक्तिर्यादृशी तव माधवे ॥४०

न योगः सुलभोऽष्टाङ्गः ख्यातिर्येनाऽधिगम्यते ।
समत्वेन च तत्त्यागंस्तद्भक्तिः शरणं नृणाम् ॥ ४१ ॥

र्माजितवित्तैर्यद्यथाविधि विधीयते । कर्म तस्याऽर्पणं विष्णौ भक्तिरेषाशिवप्रदा

न निन्देद्देवतामन्यां विष्णुबुद्ध्या च यो नमेत् ।
न त्यजेद्वेदवाक्यानि स भक्तोऽस्य हरेः प्रियः ॥४३ ॥
ये शृण्वन्ति हरेर्गुणानहरहः कुर्वन्ति ये कीर्तनं
ये चाऽस्य स्मरणं पदोश्च भजनं येऽमुं यजन्तस्तथा ।
यद्दास्येन नमन्ति चैनममुना कुर्वन्ति ये मित्रतां-
ये च स्वं च निवेदयन्ति न हि ते वाञ्छन्ति मुक्त्यादिकम् ॥ ४४ ॥
इन्द्र! भक्त्या त्वमप्येनमाराधय जगद्गुरुम् ।
न कामय किमप्यस्मत्कृतकृत्यो भविष्यसि ॥ ४५ ॥

नारद उवाच ।

इति मुनिभिरुदीरितां तु वाचं त्रिभुवनपारपदप्रदां निशम्य ।
हरिरखिलगुरुः कृतस्वभक्ति मधुरमुवाच वचो हरिं समाजे ॥४६ ॥

श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे कालिन्दीमाहात्म्य-
इन्द्रयागविधिर्नामैकोनद्विशततमोऽध्यायः ॥ १९९ ॥

---



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# द्विशततमोऽध्यायः

इन्द्रप्रस्थेभगवत्प्रेरणयानानातीर्थस्थापनंशिवशर्मपुत्रस्यविष्णुशर्मणः
विष्णुशर्मणास्वपित्रेपूर्वजन्मवृत्तकथनंकालिन्दीकूलस्थित-
तीर्थेऽस्मिन्भिल्लसिंहयोर्वैकुण्ठप्राप्तिवर्णनञ्च

श्रीभगवानुवाच ।

न तच्चित्रं सुराधीश! मुनयो ज्ञानवत्तराः। मदीयां यदि वै भक्तिं गुर्वीं कुर्व
एते ज्ञानोपदेष्टारस्त्रिलोकतलवासिनाम् । प्रवर्तयन्त्यमी नष्टं वेदमार्गं यतः
भक्त्याभवानपि स्वर्गभोगासक्तोऽपिमां यतः । प्रपन्नोऽसि किमाश्चर्यं यतस्
यजस्व सुरशार्दूल ! मखैर्मा(र्मां) बहुदक्षिणः ।
निष्कामस्त्वं समीपस्थं तूर्णं प्राप्स्यसि मत्पदम् ॥ ४ ॥
प्रतियागं प्रयच्छ त्वं रत्नप्रस्थान्यनेकशः । आख्यया स्थानमेतत्ते इन्द्रप्रस्थं
विधे ! त्वमत्र रचय प्रयागं तीर्थपुङ्गवम् । सरस्वतीं समानीय गङ्गां च
काशींच शिवकाञ्चींच त्वमत्र स्थापयेश्वर !। गोकर्णंच समं गौर्या निवासं
भोभो ब्रह्मसुता यूयं ज्ञानविज्ञानकोविदाः । निजयोगबलेनाऽत्र कुरुध्वं
निगमोद्बोधकं तीर्थं त्वं गुरो ! प्रतिपादय ।
विनाऽध्ययनमप्यत्र स्नानाद्बोधोऽस्तु छन्दसाम् ॥ ६ ॥
स्मृतिश्च जायतां पूर्वजन्मनस्तु परात्मनः । अहमारोपयाम्यत्र द्वारकां सुम
समुद्रेण समं यत्र गोमत्या सङ्गमोऽभवत् । कोशलं च करोम्यत्रमध्येऽरण्यं
ययोरवतरिष्यामि वपुर्भ्यां रामकृष्णयोः । बदर्याश्रममप्यत्र नरनारायणास
विदधामि सदा यत्र वसामि सुरनायक !। हरिद्वारंपुष्करं च तीर्थद्वयमनुत्त
तदपि स्थापयाम्यत्र तवैव हितकाम्यया । नैमिषे यानि तीर्थानि यानि का
सरस्वतीतटे यानि स्थापयाम्यहमत्र वै ॥ १५ ॥

नारद उवाच ।

शिवंशिवतरं वाक्यं हरेः श्रुत्वा कृतं च तत् । दृष्ट्वा तदुक्तमपि ते चक्रुर्ब्रह्मर्षि

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तीर्थमयेऽमुष्मिन्स्थाने स त्रिदशाधिपः । स्वर्णयूपैर्बहुमखैरीजे भूयो रमापतिम् ॥
रस्थानिविप्रेभ्यः कृष्णस्य पुरतो ददौ । नारायणः समस्तात्मा ममायमितितुष्यतु
प्रस्थमिदं तीर्थं ततः प्रभृति कथ्यते । सर्वतीर्थमये यत्र मृतो भूयो न जायते ॥१६
त्तानि ते लब्ध्वा रत्नप्रस्थानि भूसुराः । तस्मैददुरवितथामाशिषं तत्र संसदि ॥
य तव गोविन्दोदानेनाऽनेन तुष्यतु । तावकी भक्तिरप्यस्मिन्भूयादव्यभिचारिणी
भूमाविह विभो! पुरा यज्ञशतं कृतम् । तेन पुण्येन लब्धं ते सकामेन सुरास्पदम् ॥

अधुना पूजितो विष्णुर्निष्कामेन त्वया मखैः ।
स्वपदाद्विच्युतो भूमौ भविष्यति द्विजाग्रणीः ॥ २३ ॥

ऽपिनिजधर्मेण विष्णुमाराधयन्भवान् । स्मरिष्यति निजं कर्म कृतमत्र मखादिकम्
मृतेर्गृहमुत्सृज्य भवांस्तीर्थानि पर्यटन् । जनकेन समं शक्र!तीर्थेऽस्मिन्संप्रपत्स्यते
र्थाश्रममादाय त्यक्ष्यत्यत्र कलेवरम् । ततो विमानमारुह्य गणानीतं रविप्रभम् ॥

भवान्दिव्याङ्गवान्भूत्वा प्राप्स्यति श्रीहरेः पदम् ॥ २६ ॥

नारद उवाच ।

ाकर्ण्य विप्राणामाशिषं त्रिदशाधिपः । भविष्यपिशुनां चोक्तिं शिवेमुदमगात्तराम्
प्य विधिवद्यज्ञानत्र सौवर्णयष्टिकान् । माधवप्रमुखान्देवान्पूजितान्स व्यसर्जयत्
वजो ब्रह्मणःपुत्रानभ्यर्च्य च धनादिभिः । बृहस्पतिं पुरस्कृत्यययौशक्रस्त्रिविष्टपम्
राज्यं विधायेन्द्रो हरिभक्तियुतः शिवे !। अवातरद्भुवि क्षीणे पुण्ये हास्तिनपत्तने ॥
शर्मा द्विजः कश्चिद्वेदवेदाङ्गपारगः । तस्य भार्या गुणवती नाम्नाऽन्वर्थवती भृशम्
ां जातः सुवेलायामिन्द्रः श्रीपतिसेवकः । ज्योतिर्विदः समाहूताल्लग्नंदृष्ट्वाबभाषिरे

ज्योतिर्विदऊचुः ।

शर्मन्नयं बालस्तव भावी हरिप्रियः । उद्धरिष्यति ते वंशं ब्रूमः सत्यं न वै मृषा ॥
दशाब्ददेहो यः साङ्गं वेदचतुष्टयम् । अधीत्य ज्ञानसम्पन्नो विवाहं तु करिष्यति
त्पाद्य सत्पुत्रं वानप्रस्थो भविष्यति । तीर्थेषु पर्यटन्धीरः संन्यासं धारयिष्यति
य खाण्डववने यमुनाऽस्ति सरिद्वरा । तत्तीरेऽस्ति हरिप्रस्थं मरणं तत्र यास्यति

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नारद उवाच ।

गणकोदितमाकर्ण्य शिवशर्मा शिवं वचः । चकार विष्णुशर्माणं नाम्ना नि

तान्विसृज्य च वित्तेन चिन्तयामास बुद्धिमान् ।
धन्योऽहं यस्य मे पुत्रो विष्णुभक्तो भविष्यति ॥ ३८ ॥
साधयिष्यति पुत्रोऽयमाश्रमांश्चतुरो मम ।
मरिष्यति च सत्तीर्थे मदन्यः कोऽस्ति भाग्यवान् ॥ ३९ ॥

एवं विचिन्त्य मनसा जातकर्माद्यकारयत् । शिशोर्द्विजातिप्रवरैः शिवशर्मा

अथ सप्तस्वतीतेषु वर्षेषु द्विजसत्तमः । सुतोपनयनं चक्रे चैत्रमास्यष्टमेऽब्दे

आद्वादशाब्दादध्याप्यवेदानन्वगतःसुतम् । शिवशर्मा शिवे! राजन्युयोज स

विष्णुशर्मास्वभार्यायांपुत्रमुत्पाद्यबुद्धिमान् । चकार तीर्थयात्रायांमनोनिर्वि

अभ्येत्य पितरं प्राह नत्वा तच्चरणद्वयम् । विष्णुशर्मा महाप्राज्ञो मुनिवाक्य

विष्णुशर्मोवाच ।

अनुजानीहि मां तात विष्णुमाराधयाम्यहम् । तृतीयाश्रममासाद्यसत्संगति

दारागारधनापत्यसुहृदः क्षणभङ्गुराः । बुद्बुदा इव तोयेषु सुधीस्तेषु न

स्वाध्यायेन च सन्तत्या मया तीर्णमृणद्वयम् ।
तीर्थेषु कामरहितो यष्टुमिच्छामि केशवम् ॥ ४७ ॥

संन्यस्तगुणरागोऽहंपश्चात्तीर्थोत्तमेक्वचित् । स्थातुमिच्छाम्यहंतावद्यावत्प्रा

इत्युक्तस्तेन पुत्रेण स पिता बुद्धिमत्तरः । स्मृत्वा ज्योतिर्विदांवाक्यमाहसं

शिवशर्मोवाच ।

चतुर्थाश्रमकालोऽयं ममाऽपिनिरहङ्कृतेः । विषयान्विषवत्त्यक्त्वासेविष्ये

गृहे मम मनः पुत्र! रमते नाऽद्य वार्द्धके । आनीतस्य वनाद्बद्ध्वा गजस्ये

तवाऽनुजः सुशर्माऽऽयं कुटुम्बं धारयिष्यति ।
आवाभ्यामुज्झितं विद्याश्रीकुलाभ्यां यथा नरम् ॥ ५२ ॥

प्रव्रजन्तं तु मामेव तव माता पतिव्रता । अनुयास्यति मार्तण्डं यथा कान्ति

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मादावामविज्ञातौ तथा तात तवाऽम्बया । गच्छावश्चिन्तयन्तौ श्रीहरेःपादसरोरुहम्

नारद उवाच ।

ग्रालोच्य मुमुक्षू तौ निशीथे तमसावृते । सुप्तं कुटुम्बमुत्सृज्य गृहान्निर्याय जग्मतुः
ेव पर्यटन्तौ तौ सुतीर्थे निरहङ्कृती । शिवेऽत्र शिवदे तीर्थे शक्रप्रस्थे समीयतुः ॥

अत्राऽऽगतः स्वविहितान्पूर्वजन्मनि यूपकान् ।
विष्णुशर्मा समालोक्य सस्मार हरिसङ्गमम् ॥ ५७ ॥

े च पितरं धीमाञ्छक्रआसमहं पुरा । मयाऽत्र विहिता यज्ञा माधवप्रीणनेच्छया
ैव मे प्रसन्नोऽभूत्केशवो भक्तवत्सलः । सन्तोषिता मणिप्रस्थैर्द्विजाः सप्तर्षयश्च मे

तत्रैव वैष्णवी भक्तिर्दत्ता मोक्षो भवेऽत्र च ।
विष्ण्वादिभिः समस्तैस्तु तीर्थान्यत्र कृतानि वै ॥ ६० ॥

तीर्थमयं तीर्थमिन्द्रप्रस्थमिदं कृतम् । अत्रैव मे मृतिश्चोक्ता तैरेव मुनिपुङ्गवैः ॥६१
ो हरिपदप्राप्तिरेतत्सर्वं स्मराम्यहम् । इमे गङ्गासरस्वत्यौ निजलोकाद्विरिञ्चिना ॥
ानीते तयोर्योगे प्रयागोऽयं निगद्यते । एषा काशी शिवपुरी प्रयागात्पूर्वदेशके ॥
श्चाशद्धनुर्मात्रे मृतो यस्यां न जायते । काश्याः पश्चिमके भागे धनुषामेकविंशतिः
वकाञ्ची शिवेनैषा स्थापिता मृतमुक्तिदा । गोकर्णाख्यमिदं क्षेत्रं शम्भोःपरमवल्लभम्
द्वयप्रमाणे तु भूमिभागे व्यवस्थितम् । इयं द्वारवती पुण्या तीर्थराजस्य पश्चिमे ॥
ुषां सप्ततिर्यत्र मृतो भावी चतुर्भुजः । अतोऽसौ पूर्वदिग्भागे कोशला जनवत्सला
ादशधनुर्मात्रे दृश्यते पुण्यदर्शना । एतन्मधुवनं तात स्थापितं विष्णुना स्वयम् ॥
शला पश्चिमे भागे दशचापप्रमाणतः । अत उत्तरतस्तात! नरनारायणास्पदम् ॥६९
देकादशधनुर्भूमिदेशे च तिष्ठति । एतत्तीर्थं हरिद्वारमतो दक्षिणतः स्थितम् ॥ ७०॥
शद्धनुर्महीदेशे दृश्यते देवदुर्लभम् । एतत्तु पुष्करं नाम तीर्थं तीर्थशिरोमणिः ॥७१॥
दशेष्वासमात्रे भूभागे भोस्तात! तिष्ठति । प्रयागादिकगव्यूतिः सप्तर्षीणांमहात्मनाम्
स्यां दिशितीर्थानिसप्ततत्तीर्थसप्तकम् । तीर्थसप्तककाश्योऽस्तुसन्तितीर्थान्यनेकशः
पदे येषु मृतो जायते स चतुर्भुजः । प्रयागादेकगव्यूतिमात्रे पश्चिमभूतले ॥७४॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

निगमोद्बोधकं नाम तीर्थं गुरुकृतं पुरा। तीर्थसप्तकनिगमोद्बोधयो

इन्द्रप्रस्थमिदं क्षेत्रं स्थापितं दैवतैः पुरा।

पूर्वपश्चिमयोस्तात! एकयोजनविस्तृतम् ॥ ७६ ॥

कालिन्द्या दक्षिणे यावद्योजनानांचतुष्टयम्। इन्द्रप्रस्थस्यमर्यादा कथितै

देवत्रय्यां च यो ह्यत्र त्यजत्यङ्गं भवत्यजः ॥ ७८ ॥

नारद उवाच।

पुत्रस्यैतद्वचः श्रुत्वा शिवशर्मा शिवे! द्विजः। प्रत्याह संदिहानस्तंस्वपुत्रं

शिवशर्मोवाच।

कथमेतद्विजानीयांत्वंपुराऽऽसीःसुरेश्वरः। त्वमत्रकृतवान्यज्ञान्मणिभिस्तो

त्वदुक्तज्ञानवान्पुत्र यथाऽहं स्यां तथा कुरु। इन्द्रप्रस्थस्य मर्यादा कुतएव

यतः प्रभृति ते जाता मतिस्त्वं नाऽत्यजोगृहम्। मत्तएव त्वयाधीतंसाङ्गं

पूर्वजन्मकृते कृत्ये ज्ञानमासीत्कुतस्तव ॥ ८२ ॥

विष्णुशर्मोवाच।

ऋषिभिर्मे वरो दत्तः पूर्वजन्मस्मृतिप्रदः। तेभ्यएवाऽस्य तीर्थस्य श्रुता

निगमोद्बोधके तीर्थे स्नानमत्र पितः! कुरु। दुर्लभं प्राप्स्यसे ज्ञानं पूर्वजन्म

ममाऽपि पूर्वजनुषः प्रवृत्तिं त्वं स्मरिष्यसि। एतत्तीर्थजलस्पर्शात्तात! सत्यं

नारद उवाच।

शिवशर्मणि विप्रेन्द्रे श्रुत्वैतत्स्नातुमुद्यते। निगमोद्बोधके तीर्थे स्मृतये पू

सिंहेनानुगतः कश्चिद्भिल्लो धावन्समागतः। अतित्रासपरीताङ्गो निःश्वसन्

हिंसात्मको वर्त्मघाती वणिजां लुण्ठतः(कः?) सदा।

कृष्णाङ्गः पिङ्गकेशश्च खर्वो मार्जारलोचनः ॥ ८८ ॥

कुन्तहस्तो भीममूर्तिर्देही पाप्मेव भूपते!। ततः पश्चात्कियद्दूरे सिंहमालो

पितापुत्रौ समीपस्थंद्रुममारुह्यतस्थतुः। वदन्ताविति हा कृष्ण! मोचयाऽस्मा

स किरातस्तु राजेन्द्र! ग्रहीतुं वेगवत्तरम्। वीक्ष्य सिंहं द्रुमं भीतः समारोढुं

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

...रोहणं प्रकुर्वन्तं सिंहो जग्राह वेगवान्। पादयोरथ भूपृष्ठे पातयित्वा रुरोह तम्
...:स्थितकिरातोऽपि कुन्तनोदरमस्य वै। ददार रुधिरौघाक्तनिसृतान्त्रकदम्बकम् ॥
...व्यथो विधायाऽथ नादं परमदारुणम्। सिंहः पिपेष भिल्लस्य शिरःसद्यो ममार च
...पञ्चत्वमापन्ने भूतसङ्घेऽत्र भूपते !। विमानद्वयमुत्तीर्णं गणाभ्यां सह सत्पदात्
...नघनवर्णाभ्यां स्फटिकोपलनिर्मितम्। चारुकुण्डलकर्णाभ्यां मणिप्रकरमण्डितम्
...चक्रगदापद्म हस्ताभ्यां चारुचित्रभृत्। दधद्भ्यां पीतवस्त्राणि हेमभित्तिविभूषितम्
...लाम्बुजनेत्राभ्यां पद्मरागगवाक्षभृत्। धीरनिर्ह्लादमञ्जीरपद्भ्यां रणितकिङ्किणि ॥
...ष्ठे वलयश्रेणीं बिभ्रद्भ्यां चारुवेदिकम्। मुक्ताहारैर्मनोहारिवक्षोभ्यांसवितानवत्
...लालकवक्त्राभ्यामुन्नतध्वजराजितम्। भ्रूयुगाक्षिप्तपञ्चेषु धनुर्भ्यामुच्चतोरणम् ॥
...ालज्जितकीराभ्यां निर्व्यूहशतशोभितम्। नवविद्रुमसच्छायतलाभ्यां दर्पणामलम्

दिव्याङ्गौ भिल्लपञ्चास्यौ त्यक्त्वाऽङ्गं प्राकृतं स्थितौ।
पुरैव प्राणनिर्याणे तीर्थस्याऽस्य प्रभावतः ॥ १०२ ॥

...: समीपमानीय विमाने तौ हरेर्गणौ। ऊचतुस्तौ वयोरूपमेषाकृतिधरौ ततः ॥
... किरात!नरश्रेष्ठ भोःपञ्चास्यमृगाधिप !। आवांजानीतमायातौवैकुण्ठाच्छ्रीहरेर्गणौ
...ग्रामस्तत्पदं सत्यं युवां तत्र नचोर्मयः। स्वं स्वंविमानमारुह्यगम्यतामाशुमाचिरम्

स्वं स्वं विमानमारूढौ तौ किरातमृगाधिपौ।
ऊचतुर्विस्मयाविष्टौ लक्ष्मीपतिगणौ प्रति ॥ १०६ ॥

...भोस्त्रिदशशार्दूलौ श्रूयतां वाक्यमावयोः। युवयोर्दर्शनाज्जातं ज्ञानं नौ पारमार्थिकम्
... जन्मनि नावाभ्यां कृतं सुकृतमल्पकम्। स्मृतिर्नो जायते पूर्वकर्मणाम्त्वांप्रसादतः
...साहारौ प्राणिहिंसारतौ क्रूरान्तरेन्द्रियौ। पापाचारकुलेजातौ दर्शनेन भयप्रदौ ॥
...वामेतादृशे लोके ह्यभूतामिति पापिनौ। केन पुण्येन युवयोर्जातं दर्शनमावयोः ॥

सारूप्यं च कुतः पुण्याद्यायावः श्रीहरेःपदम् ॥ ११० ॥

गणावूचतुः।

...र्थेऽत्र मरणान्नूनं सुराचार्यकृते पुरा। युवयोर्दर्शनं जातं नौ च सारूप्यमद्भुतम् ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

लक्ष्मीपतिपदप्राप्तिर्भविष्यति च वां चिरम् । तावत्पापानि गर्जन्ति ब्रह्महत्या

जातं न दर्शनं यावत्तीर्थस्याऽस्य वृहस्पतेः ।
यथा तमांसि नश्यन्ति भास्करस्योदयादिह ॥ ११३ ॥

तथा पापानि निगमोद्बोधकस्य विलोकनात् । इन्द्रप्रस्थाख्यमेतद्धि क्षेत्रमिन्द्र

तेनाऽत्र पूजितो विष्णुः क्रतुभिर्बहुदक्षिणैः । तुष्टेन विष्णुना तस्मै वरो दत्तो हि

भोः शक्र! तावके क्षेत्रे सर्वतीर्थमये जनाः । तनुं त्यक्ष्यन्ति ये ते वै मत्तुल्या हि

नारद उवाच ।

इत्युक्त्वा तौ गणश्रेष्ठौ नीत्वा तौ जग्मतुः पदम् । हरेर्यत्र गतो भूयो विश्वाख्योऽ

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे
माहात्म्ये भिल्लसिंहवैकुण्ठारोहणं नाम द्विशततमोऽध्यायः ॥२००॥

---

# एकाधिकद्विशततमोऽध्यायः

## इन्द्रप्रस्थमाहात्म्यपूर्वकंशिवशर्म्मणःपूर्वजन्मनिवैश्यकुलेवृत्तवर्णन

नारद उवाच ।

अथाऽवरुह्य तौ वृक्षात्पितापुत्रौ सुविस्मितौ । दृष्ट्वा हरिपदप्राप्तिमभूतां पा

शिवशर्माऽथ विप्रेन्द्रः श्रुत्वातीर्थस्तुतिं तदा । गणोक्तां विष्णुशर्माणमुवाच

शिवशर्मोवाच ।

यत्पदं न सुलभं द्विजन्मनां साधितेन तपसाऽपि लीलया ।
प्रापतुः शबरदंष्ट्रिणौ च तत्तीर्थराजमहिमा विलोक्यताम् ॥ ३ ॥
जन्मनःप्रभृति तावदामृतेः पापिनावपि च यत्प्रभावतः ।
जग्मतुः सुत! हरेः सरूपतामस्य तीर्थवृषभस्य का स्तुतिः ॥ ४ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शुद्धसत्त्वमपि रूपमैश्वरं काऽम्बुजन्मजनिदेवदुर्लभम् ।
तामसौ क मृगनाथभिल्लकौ किंतु तीर्थमिदमद्भुतक्रियम् ॥ ५ ॥
तात भोः ! पतति वेधसः पदाज्जन्तुरन्तमधिगम्य कर्मणाम् १
अत्र देवगुरुनिर्मिते मृतिं प्राप्य माधवपदान्न विच्युतिः ॥ ६ ॥

नारद उवाच ।

ं प्रत्यक्षमालोक्य माहात्म्यं स द्विजोत्तमः । तीर्थस्याऽस्यगुरोराजन्स्नातुंतत्रप्रचक्रमे
वदन्तपदानां स कृत्वा शुद्धिं च चेतसः । पञ्चकच्छः शिखाबन्धोपग्रहीमाधवंस्मरन्
वक्रान्तेतिश्लोकस्य पाठेन तटमृत्तिकाम् । स्पृशंस्तयैव विदधत्तिलकंजलमाविशत्
प्रवाहाभिमुखो निमज्जन्पुनरुत्थितः । पुनर्मग्नो हरिं स्मृत्वा गङ्गां च जनपावनीम्
योध्याद्याः पुरीः सप्त पुनरुत्थाय संस्मरन् । पुनर्ममज्ज सलिले गोविन्दार्पितमानसः
त्वा यथाविधिस्नानं धौतवस्त्रे च पर्यधात् । बहिरागत्य तिलकं चक्रे च द्विजसत्तमः
पादशिखासूत्रैर्दर्भांश्च विदधद्वशी । सन्ध्यां चकार विधिवत्तर्पणं त्रिविधं तथा ॥
र्घाय कुसुमैर्दत्त्वा सजलैरर्घमादृतः । शिरोबद्धाञ्जलिपुटो नमश्चक्रे द्विजोत्तमः ॥१४
वाहनादिनैवद्यपर्यन्तमथ विप्रराट् । जगत्पूज्यपदाब्जस्य विष्णोः पूजामचीकरत् ॥
तक्रियः सूपविष्टस्तादृशं सुतमात्मनः । जगाद संस्मरन्पूर्वजन्मकर्माणि कृत्स्नशः ॥

शिवशर्मोवाच ।

ष्णुशर्मन्नतेमिथ्यावाक्यंतात यतःस्मृतिः । अत्र स्नानेन मे जातापूर्वेषांजन्मकर्मणाम्
कर्णय महाभाग ! कथयामि तवाऽग्रतः । पुराहमन्वयेजातो विशां धनिकधर्मिणाम्
ता मे शरभो नाम्ना कान्यकुब्जेपुरेऽवसन् । वाणिज्येनार्जयन्वित्तं भूरिधर्मधनाश्रितः
तीतस्तु महान्कालस्तस्य नाऽभवदात्मजः । जरागृहीतदेहस्य तच्चिन्तातुरचेतसः ॥
चिन्तयदहोरात्रमिति वैश्यवरस्तदा । विना सुतेन मे व्यर्थं धनं भूर्यपि संचितम् ॥
ते सुतमृणी लोके पितॄणां धनवानपि । सजलोऽपि विनावर्षं चातकानां यथाघनः
पाञ्जयतिसन्तत्या विश्वं धर्मधुरीणया । शक्त्यात्रिविधया राजा विपक्षमिव दुर्जयम्
प्रीणाति सन्ततिः शुद्धा सुमनः पितृमानवान् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मित्रप्रत्यर्थ्युदासीनान्सूनृता वाग्यथेरिता ॥ २४ ॥

उदयस्थेन पुत्रेण वर्द्धते स्वयशः पितुः । निर्मलं द्विजराजेन नीरंनीरनिधेरिव

तस्माद्यतेत्सुतोत्पत्त्यै शरीरेण धनेन वा । तमृते हि द्वयं व्यर्थं जनानां तदि

एवंचिन्तयतस्तस्य गृहे मुनिवरस्तदा । देवलोऽतिन्द्रियज्ञानो वरन्दातुं समा

आगतं तं समालोक्य प्रत्युत्थायाऽऽसनात्पिता ।

दत्त्वाऽर्घमथ पाद्यं च ववन्दे शिरसा मुनिम् ॥ २८ ॥

उपवेश्याऽऽसने दत्ते स्वहस्तेन पिता मम । पप्रच्छ च मुनिश्रेष्ठं देवलं देव

स्वागतंतु मुनिश्रेष्ठ! शमस्ति भवतांकुले । तपःस्वाध्यायनियमा निष्प्रत्यूहाः

कालेचाऽतिथयः कच्चिदायान्ति भवदाश्रमे । कच्चिदाश्रमवृक्षावःफलन्ति मनं

व्याघ्रादयोन नकुर्वन्तिं कच्चिद्वैरं मृगादिभिः । त्वदीयाश्रममभ्येत्य भ्रातरो भ्रा

तवाऽटनं भुवि मुदे गृहिणामन्यथा कथम् । तेषां गृहाधिमग्नानां दर्शनं क भ

हरिपादरजोवृद्धेः कामं कामो न कुत्रचित् । मुने! तव तथाप्याशु हेतुमागमने

शिवशर्मोवाच ।

इत्युक्तस्तेन स मुनिर्देवलो देवपूजितः । अब्रवीत्तन्मनोभावं ज्ञातुकामो विशां

देवल उवाच ।

वैश्यवर्य!त्वया भूरि धनंधर्मेण सञ्चितम् । करोषि येन धर्मज्ञ! नित्यनैमित्तिकं

आदरं राजसदसि धनेन लभते नरः । सुभटः शत्रुसंग्रामे विक्रमेण यथा ज

गृहस्थस्तु धनं प्राप्य परांपुष्टिं व्रजत्यलम् । शरत्परिणतं सस्यमनड्वानिव नि

धनिनं न विमुञ्चन्ति बन्धवोऽन्ये च ये जनाः । मधुमत्सुमनोयुक्तं पादपं मधुप

धनाभावेन गृहिणां कृशत्वमुपजायते । सर्वतो ग्रीष्मसमये त्वम्भसां सरसां

तद्धनं वर्तते भूरि गृहे तव विशांपते !। कुतः कृशत्वमङ्गानां गोप्यं चेन्न वदाऽ

वैश्य उवाच ।

हितोपदेशा निरता भवन्तः पितरो यथा । गोपनीयं भवद्भ्यः किं मादृशैः पु

त्वत्प्रसादान्मुनिश्रेष्ठ!सर्वतोऽस्ति शिवं मम । वार्द्धकेऽपि सुताभावो दुःखमेकं

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्मात्कृशत्वमङ्गानां विद्धि मे मुनिपुङ्गव !। बिभेम्यहं पितृऋणाद्यतोऽधः पतनं नृणाम्
उपायं कुरु मुने! येन स्यां सुतवानहम् । किञ्चित्कर्तुमशक्यं न भूतलेऽत्र भावदृशैः॥

शिवशर्मो उवाच ।

याकर्ण्यवचस्तस्य वैश्यवर्यस्य देवलः । मनःक्षणं स्थिरं कृत्वा दध्यौ मीलितलोचनः
त्ततेर्मत्पितुर्दृष्ट्वा प्रतिबन्धस्य कारणम् । देवलोऽतीन्द्रियज्ञानीबभाषेकारयन्स्मृतिम्

देवल उवाच ।

कदा तु पुरा वैश्य तवेयं धर्मचारिणी । यं चकार स्वचित्ते तं कथयामि मनोरथम्
र्विणी यद्यहं गौरि भवेयं शम्भुवल्लभे! । तदा त्वां तोषयिष्यामि षड्रसान्वितभोजनैः
दीपकमालाभिस्ताम्बूलैर्नृत्यवाद्यकैः । तन्त्रीमुखोद्गतैर्गीतैर्नानाविधविलेपनैः ॥५०॥
त्थं प्रतिश्रुत्य पुरः सखीनां दयिता तव । प्रतीक्षमाणा तं कालं तस्थौ तद्भक्तिसंयुता

तस्मिन्नेवाऽभवद्गर्भो मासेऽस्या योषितस्तव ।
ऊचुरेनां ततः सख्यः सर्वाः सस्नेहचेतसः ॥ ५२ ॥
यस्त्वया वाञ्छितो गर्भो गौर्या सम्प्रतिपादितः ।
अतः प्रतिश्रुतं देव्याः पूजनं सुभगे ! कुरु ॥ ५३ ॥

चेद्धिकाराद्भवति विघ्नन्तु तदनुष्ठितात् । तोषितारोषिताश्चाऽत्रदेव्यो हि वरशापदाः
खीभिरिति ते भार्या कथितेयं मुदान्विता । त्वामुवाच महाभागा विनयेन पतिव्रता

नाथ ! पूजयितुं गौरीं वाञ्छाम्यखिलकामदाम् ।
यत्प्रसादादहं जाता वाञ्छितार्थवती प्रभो ! ॥५६ ॥

मनुश्यवर्य!त्वमेवैतच्छ्रुत्वाऽस्या वचनं शुभम् । अमन्यत गर्भवतीमेनां निजगृहेश्वरीम् ॥
सानन्दमानश्च नितरां तेन सद्यो भवानपि । भृत्यानाज्ञापयामास पूजावस्तूपपादने ॥५८
दाऽऽनाय्यसमस्तानि वस्तूनि भवता ततः । अस्यैदत्तानि मध्वन्नद्राक्षागन्धादिकान्यपि

ततो निजसखीः सर्वा आहूयेयमिदं जगौ ।
सख्यः समस्तासामग्री समानीताऽम्बिकार्चने ॥ ६० ॥

त्वा पूजोपकरणं यूयं याताऽम्बिकालयम् । सन्तोषयत तां देवीं पूजया विधिदृष्टया

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

गुर्विणीतिकुलेऽस्माकं न निर्याति गृहाद्बहिः ।
अतोऽहं नाऽऽगमिष्यामि यूयं यात तदर्चने ॥ ६२ ॥

इत्याज्ञप्तास्तु ताः सख्यो नीत्वोपकरणं ययुः । अम्बिकालयमुन्मत्तभ्रमद्भ्र
कोकिलाकुलसंकेलिसहकारकुलाकुलम् । हंससारसचक्राह्वमण्डितं स्वच्छ
महादेवगुणालापिशुकसारिसमावृतम् । हारयोग्यलतासेके तत्परोमासखीश्र
उमापतेरुमापादन्यासपूतमहीतलम् । स्फटिकोपलसंबद्धजलाधारसुरद्रुमम्
पार्वतीपतिसंनाट्यगायद्गन्धर्वनादितम् । मन्दानिलसनाग्धूतचूतचम्पककोरक
नृत्यन्मयूरनिर्ह्रादप्रतिनादितलतागृहम् । तल्लीलाचलविद्योतमानं रत्नलसत्प्र

तत्र गत्वा गिरिसुतां प्रणेमुस्ताः सभर्तृकाम् ।
प्रदक्षिणीकृत्य ततो भक्त्या तां च बभाषिरे ॥ ६९ ॥

जगदम्ब ! नमस्तुभ्यं शन्नो देहि शिवप्रिये !। त्वत्पूजार्थे समानीतो वलिरेष
वैश्यस्तुशरभो नाम्ना तस्यारतिललिताङ्गना । तयाऽभिलषितोगर्भस्तत्प्राप्तौ
त्वत्प्रसादादभूत्तस्याः सगर्भः शम्भुवल्लभे !। त्वत्पूजनाय प्रहितो वलिरस्मा
तस्याःकुले गर्भवती न निरेतिबहिर्गृहात् । अतः सा नाऽऽगता देवि प्रसीदे

इत्युक्त्वा तां तदा वैश्य ! त्वत्स्त्रीसख्यस्तु तं बलिम् ।
समर्पयित्वा विधिवदानर्चुश्चन्दनादिभिः ॥ ७४ ॥
प्रतिवाक्यमलब्ध्वा ता गौर्याः प्रत्याययुर्गृहम् ।
निजसख्यै समाचख्युर्विषण्णां तां शिवप्रियाम् ॥ ७५ ॥

तासामाकर्ण्य वचनमिति वैश्य!तवाऽवला । उन्मनाश्चिन्तयामास कुतो गौर्य
साजानातियथाभक्तिस्तत्पूजा याकृतामया । तादृशीनां किमज्ञातंबाह्यं चाभ्य
न गताऽहं ततस्तत्र तज्जानात्यपि कारणम् । मया दत्तेन बलिना कुतः सा न
नाऽहमन्यत्प्रजानामि तदतोषे हि कारणम् । ऋतेमद्गतेस्तत्र नूनं रम्ये तदा
यदतीतं नतच्छक्यमन्यथाकर्तुमद्य वै । गर्भान्मुक्तागमिष्यामि तत्पूजायै त
नभस्तस्यै महादेवभार्यायै सा करोतुशम । इत्युक्त्वा दधतीगर्भं तस्थौ वैश्य

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शिवशर्मोवाच ।

णुशर्मन्निदं पूर्ववृत्तमाज्ञाय मत्पिता । पप्रच्छ मुनिशार्दूलं देवलं ज्ञानवत्तरम् ॥८२

वैश्य उवाच ।

! यथा प्रतिश्रुता पूजा ते स्नुषया तया । तथैवाऽकारि पार्वत्या विषादेकारणं वद

यतोऽसौ न गता तत्र तज्जानाति शिवा स्वतः ।

सखीभ्यश्चोक्तमस्यास्तद्विषण्णा सा कुतोऽभवत् ॥ ८४ ॥

देवल उवाच ।

प्रवर्य! शृणुष्वेदं कारणं कथयामि ते । यतस्तस्या विषादोऽभूत्पार्वत्या गर्भनाशकः

निवृत्तासु सखीष्वस्याः सम्पूज्य स्कन्दमातरम् ।

विजया पार्वतीम्प्राह कौतूहलसमन्विता ॥ ८६ ॥

विजयोवाच ।

रेजे! श्रद्धयातुभ्यं दत्तोऽमूभिरयं बलिः । मानुषीभिः कुतःप्रीतानाऽभवस्त्वंवरानने!

दीपकनैवेद्यैः पूजिता तोषहेतवे । प्रत्युताकारणं देवि त्वं विषादं कुतो गता ॥८८

देवल उवाच ।

ाकर्ण्य वचःसख्या देवी देववरार्चिता । अब्रवीद्विजयां वैश्य विषादे कारणंसखीम्

राजोवाच ।

जये! सखि! जानामि वैश्यभार्यांगृहाद्बहिः । निर्गन्तुमक्षमां गर्भधारणं स्वविवेकतः

ागतास्तु तत्सख्यो मत्पूजायैतदीरिताः । माद्वंशो न च गृह्णन्ति परहस्तकृतंबलिम्

तत्पतिश्चेत्समायास्यदभविष्यत्तदा शिवम् ।

तस्यास्तु मदवज्ञातो गर्भपातो भविष्यति ॥ ९२ ॥

व्रतं पूजनं यच्च कर्तुं न क्षमतेऽङ्गना । तत्कारयति नाथेन न भङ्गःस्यात्तयोःसखि!॥

वा विप्रमुख्येन पृष्ट्वा पतिमनन्यधीः । यतः स्वयमनागत्य तत्कृतं मे तयाऽर्चनम् ॥

कारितं च भर्त्राऽतोभविताहोहदोऽफलः । यद्युभौ तौ समागत्य दम्पतीश्रद्धयापुनः

मां पूजयिष्यतः पुत्रो भविष्यति तदा तयोः ॥ ९५ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

देवल उवाच ।

स शापो नत्वया वैश्य नचैव तव भार्यया । श्रुतः सखीभिरस्या नो प्रसादश्च कृ
तयोरज्ञानतो वैश्य! गुर्वयोर्नाऽभवत्सुतः । अजानतोः प्रतिविधिं परत्राऽत्रसु
एतत्ते कथितं वैश्य! सन्तानाभावकारणम् । वसिष्ठेन यथापूर्वं दिलीपस्य

तच्छ्रुत्वा स यथा राजा नन्दिनीं समतोषयत् ।
सस्त्रीकस्त्वं तथा वैश्य! गौरीं तोषय कामदाम् ॥ ९९ ॥
सा यथाऽऽराधिता राज्ञे दिलीपाय ददौ सुतम् ।
आराधय तथा गौरीं त्वं सा तुभ्यं च दास्यति ॥ १०० ॥

वैश्य उवाच।

दिलीप इति भूपः कः का च सा नन्दिनी मुने !। यामाराध्य सुतं लेभे स भूयो
महेशादिसुरान्मुक्त्वा त्रिवर्गफलदायिनः । आराधिता कुतः सैव सुतार्थं ते
एतत्सर्वं समाख्याहि मुने! यत्पृष्टवानहम् । श्रुत्वा ततो गिरिसुतां सेविष्ये स

शिवशर्मा उवाच ।

गदितमिति निशम्य विष्णुशर्मन्विनययुतेन विशा मदीयपित्रा।
मुनिरिति गदितं दिलीपवृत्तं जगति पवित्रतरं विचक्रमे सः ॥ १०

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे का
माहात्म्य एकाधिकद्विशततमोऽध्यायः ॥ २०१ ॥

---

# द्व्यधिकद्विशततमोऽध्यायः

## दिलीपवृत्तान्तवर्णनम्

देवल उवाच ।

शृणुष्व भो महाप्राज्ञ! दिलीपस्य महीपतेः । कथां दिव्यां विचित्रां च शृण्वतां पाप

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

[व]स्वतमनोर्वंशे दिलीपो भूभुजांवरः । आसीत्प्राचीनवर्हिस्तु स्वायम्भुवमनोरिव ॥२
[स] तु धर्मभृतां श्रेष्ठो धर्मेण प्रतिपालयन् । महीं महीपतिर्लोकान्गुणैराढ्यैररञ्जयत् ॥३
[मग]धाधिपतेः पुत्रीमहिषी तस्यभूपतेः । सुदक्षिणाख्यया ख्याता शचीवाऽऽसीद्दिवस्पतेः
गते महति काले तु महिष्यां नाऽभवत्सुतः ।
दध्याविति निजस्वान्ते स सम्राट्कोशलाधिपः ॥ ५ ॥
[र]त्नाकरसुमेर्वादिनगरत्नैर्विराजितम् । धृतं भूवलयं दोषोर्भूषायै नाऽप्रजस्य मे ॥ ६ ॥
[त्र]यी यथाकालंसेविता न विरोधिता । तथापि मेऽनपत्यस्य न सौख्यं विद्यतेहृदि
[यज्ञै]राराधितो विष्णुरिन्द्राद्याश्चसुरोत्तमाः । दीर्घिकारामकूपाश्च कारिताःसर्वतोभुवि
भूहिरण्यवासोभिः षड्रसान्वितभोजनैः । विप्राअतिथयश्चैव भक्त्यासन्तोषितामया
[कोशा]र्थं पृथिवीपालानुद्धृत्य युधि धर्मतः । धनेन महता कोशो मयां हि बहुलीकृतः॥
[वि]मार्गगामिनो मत्तानिजधर्मविलङ्घिनः । विमुखाःपितृदेवेभ्योदण्ड्यास्तेदण्डितामया
[सर्व]पर्वसु वैष्णव्यां रवौपित्र्ये च कर्मणि । दशम्येकादशीतिथ्योर्न स्त्रीसेवा कृतामया
ऋतुकालावधौ स्नातां स्वस्त्रियं नाऽहमत्यजम् ।
अनृतावपि तद्योग्ये काले चेत्प्रार्थितस्तया ॥ १३ ॥
[त]दातस्यां सकामिन्यां सकामं रमितंमया । एवं धर्मार्थकामामे यथाकालंनिषेविताः
[म]हिष्यां केन दोषेण जायते मे न सन्ततिः । अतीतानागतज्ञानो वसिष्ठो गुरुरेव नः ॥
कथयिष्यति तं दोषं यन्मे पुत्रो न जायते ॥ १५ ॥

देवल उवाच ।

इत्यालोच्य स भूपालो गमिष्यन्नाश्रमं गुरोः ।
मन्त्रिष्वारोपयामास कोशलामृद्धिकोशलाम् ॥ १६ ॥
[अ]थप्रजासृजं देवं पूजयित्वाऽऽश्रमं गुरोः । प्रतस्थाते पुत्रकामौ दम्पती तौ शुभेऽहनि
[क]तिचिद्वासरैर्मार्गमुल्लङ्घ्यैकरथे स्थितौ । तौदम्पती गुरोः सायमाश्रमं प्रापतुःशुभम्
[वैश्]वदेवान्तसम्प्राप्तातिथिसत्कारकृन्मुनिम् । हुताशनहुतद्रव्यप्रसरद्धूममालया ॥१९॥
[प]वित्रयन्तमात्मस्थान्मुनीनागन्तुकानपि । मृगैर्दूर्वाप्रतानौघप्रदपूर्णोरमन्थरम् ॥२०॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अभ्यागच्छद्भिरभितो मण्डपं स मृगीगणैः । वासवृक्षमिलत्पक्षिकुलकोलाह
परस्परविनिर्मुक्तवैरव्याघ्रमृगादिकम् । जपध्यानपरर्षीणां क्षणश्रान्तश्रुतिध्वनि
अनध्ययनकालीत्थक्रीडासक्तकुमारकम् । तस्मिन्वसिष्ठमद्राष्टां दम्पती तौ
वृस्यां निसण्णमव्यग्रमरुन्धत्योपसेवितम् । स ववन्दे गुरोःपादौमहिषी साव
आशिषागुरुरप्येनं युयोजाऽरुन्धतीचताम् । अतिथिंतमथाऽभ्यर्च्य मधुपर्का

अर्हणैरर्हतां श्रेष्ठो वसिष्ठइति पृष्टवान् ॥ २५ ॥

वसिष्ठ उवाच ।

भोभो! भूमिभृतां श्रेष्ठ राज्ये कुशलमस्तिते । कुले च कच्चिल्लोके च निजधर्मा
धर्मेण पालिता कच्चित्त्वया वीर! वसुन्धरा । सम्वर्द्धयतिते कोशं धर्मधीरिव

तव जानपदा राजन्पौराश्च स्थितिमात्मनः ।
सारवन्तो विमुञ्चन्ति कच्चिन्नाम्बुधयो यथा ॥ २८ ॥

स्नेहेन साहचर्येण सहवासतया प्रभो ! । लक्ष्मीनारायणायेते कच्चित्ते पुर
काम्यव्रतानि राजेन्द्र! प्रजानां नगरे तव । फलन्ति वाञ्छितं कच्चिद्धरिचन्द

देवल उवाच ।

पृष्ट्वैवं स मुनिश्रेष्ठो वसिष्ठो मुनिपुङ्गवः । योगप्रभावोपनतैर्नृपं भोज्यैर
अरुन्धती च तां राज्ञीं बह्वादरसमन्विता । नानाव्यञ्जनपक्वान्नैरभोजयदुदार
कृतभोजनमासीनंस्वस्थः स्वस्थंमुनिर्नृपम् । पुनःपप्रच्छ संगृह्य पाणिनापाणि

वसिष्ठ उवाच ।

सप्ताङ्गसंयुतं राज्यं निजधर्मरतप्रजम् । प्रीतबन्धुजनामात्यं शस्त्रास्त्रविधि

वश्यमित्रं हतामित्रं कृष्णार्चापरमानसम् ।
यस्याऽस्ति नृपते राज्यं स्वर्गराज्येन तस्य किम् ॥ ३५ ॥

इक्ष्वाकुवंशराजानः पुत्रानुत्पाद्यधार्मिकाः । राज्यंच तेषु विन्यस्यप्रपन्नास्तप

त्वं युवाऽदृष्टपुत्रास्यो नाऽधिकारी तपोविधौ ।
किंमर्थमागतो ह्यत्र राज्यं त्यक्त्वा तथाविधम् ॥ ३७ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

राजोवाच ।

नाऽहं तपः कर्तुमागतस्तावकाश्रमे । स्वर्गकामनया त्यक्त्वा राज्यमत्र तथाविधम्
सत्यमिदं चोक्तं भवता यत्तपोवनम् । राज्यमारोप्य पुत्रेषु प्राप्त इक्ष्वाकुवंशजाः॥
तैस्त्यक्तं महीराज्यमिदं स्वर्गगतैरपि । तन्मूर्तिरस्यां विमनास्तिष्ठति ह्येव सन्ततिः
यथाबाल्यं गतं तात! यौवनं च समागतम् ।
यास्यत्यदोऽपि च तथा जराऽप्येष्यति निश्चितम् ॥ ४१ ॥
सोऽनन्तरं मृत्युः पुरुषस्य न संशयः । मृत्युं गते मयि ब्रह्मन्विना तनयसम्भवम्
येदं जगतीराज्यं भविष्यति गुरो वद । तस्मादपत्यहीनस्य राज्येऽति मम तिष्ठतिः
त्वं विद्यते नाऽत्र पुरस्तात्तदभावतः । वर्गत्रयस्य वै सम्यक्संवेत्ता त्वं गुरो! मम
दोषेण मे पुत्रोजायते न तपोनिधे!। ध्यानेन दोषमालोक्य तं गुरोकथयाऽऽशु मे
तस्य प्रतिक्रियां कुर्यां श्रुत्वा सन्तानलब्धये ॥ ४५ ॥

देवल उवाच ।

आकर्ण्य वसिष्ठस्तु वचस्तस्य महीपतेः । उवाचसन्ततिस्तम्भहेतुं वीक्ष्य समाधिना

वसिष्ठ उवाच ।

पुरा राजशार्दूल!संसेव्यसुरनायकम् । स्नातामिमांवधूं स्मृत्वा चलितोनिजमन्दिरम्
छतस्त्वरयातात सन्तानोत्कण्ठितस्यते । आसीत्सुरतरोर्मूले कामधेनुःस्थितापथि॥
पादितात्वयातस्याः पूज्याङ्घ्रिरजसोऽतिरुट् । प्रदक्षिणनमस्कारसदाचारमकुर्वता
ऽशपत्त्वामतिक्रोधात्पुत्रो नोत्पत्स्यते तव । ममसन्तानशुश्रूषां यावत्त्वंनकरिष्यसि
क्षंस्त्वमृतुदानाय त्वरयासुतकामुकः । उन्मनानाऽश्रृणोः शापं न यन्ताक्षनिनादतः
तस्याः सुतासुतां धेनुं नन्दिनीं ससुतां मम ।
आराधयाऽनया वध्वा सार्द्धं सा दास्यते सुतम् ॥ ५२ ॥

देवल ऊचुः ।

युक्तवति तत्रर्षौ वसिष्ठे सा तु नन्दिनी । तपोवनात्समायाता वत्सस्नेहस्नुतस्तनी
दृष्ट्वा हृष्टहृदयो वसिष्ठो मुनिपुङ्गवः । उवाच भूपतिं भूयो दर्शयित्वा च नन्दिनीम् ॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वसिष्ठ उवाच ।

राजन्समागताह्येषा स्मृतमात्रशुभाह्वया । अतोविद्धिसमीपस्थां कार्यसिद्धिं
आराधितानुगत्वेयं त्वयाऽरण्ये तथाऽऽश्रमे । बध्वाप्रसादात्तेपुत्रंदास्यतेनाऽ
यथा नाभिभवेदेनां जन्तुः कश्चिद्वनोद्भवः । तथा चारय राजेन्द्र ! वने हिंस्रो

देवल उवाच ।

तथेति लघुवादिने नृपतये स्नुषायै च स क्षपाशयनहेतवे सदुटजं
स तत्र सहभार्ययासमधिशय्य दर्भास्तृतां महीमगमयन्निशां नियतमान

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे कालिन्दी
द्व्यधिकद्विशततमोऽध्यायः ॥ २०२ ॥

---

## त्र्यधिकद्विशततमोऽध्यायः

देवलवैश्यसम्वादे राज्ञादिलीपेनस्वमहिष्यासहवसिष्ठधेनोर्नन्दिन्याश्च
सेवाकरणंनन्दिनीकृतपरीक्षणंमायासिंहस्यदिलीपेनसम्वादो
नन्दिन्यावरदानञ्च

देवल उवाच ।

अथोषसि नराधीशः पूजितां कुसुमादिभिः ।
महिष्या नन्दिनीं धेनुं नीत्वाऽरण्यं जगाम सः ॥ १ ॥

गच्छन्तीमनु तां देवीं छायेव नृपतिर्ययौ । खादन्तीमनुशष्पादि सोऽपिमूल
तरुच्छायामुपासीनामनु सोऽप्युपविष्टवान् । पिबन्तीमनुपानीयं राजाऽपि
स च राजा मृदुग्रासैर्दंशापनयनेन च । कण्डूयनैः कामधेनुं गुरोरेवमसेव
अथ प्रत्याश्रमं सायं न्यवर्त्तत महीपतेः । अङ्गं पवित्रयन्ती सा खुरोद्धूतै

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

धोभारेण गुरुणा गच्छन्ती मन्थरं बभौ । महीपालमहाकार्यभाराक्रान्तेव नन्दिनी॥
मुनेराश्रमास्याशे राज्ञी प्रत्युज्जगाम ह । चन्दनाक्षतनैवेद्यधूपादीनुपनीय च ॥ ७ ॥
पूजयित्वा विधिवत्प्रणम्य च पुनःपुनः । कृत्वा प्रदक्षिणं राज्ञी तस्थौप्राञ्जलिरग्रतः

सा गृहीत्वा च तां पूजां विहितां श्रद्धया तया ।
राज्ञा निश्चलमास्थाय ययौ ताभ्यां सहाश्रमम् ॥ ६ ॥

राधयति तामेवं दिलीपे तु दृढव्रते । एकाधिकाव्यतीयायदिनानां वैश्य विंशतिः ॥
थभूमिपतेस्तस्य भावजिज्ञासयातुसा । विवेशनिर्भययस्वान्ता सशष्पांहिमवद्गुहाम्
यता हिमवत्सानु शोभामथ महीभृता । अलक्षितागमः सिंहो बलाज्जग्राह नन्दिनीम्
चक्रन्द भृशंधेनुर्दुःखितेव दयास्वना । चित्तेधनुर्भृतस्तस्य जनयन्ती दयोदयम् ॥
क्रन्दितमाकर्ण्य तस्याः स जगतीपतिः । हिमवत्सानुसंलग्नां निजदृष्टिं न्यवर्त्तयत्

उपर्युपरि तां धेनुं स्रवदश्रुमुखीं नृपः ।
तीक्ष्णदंष्ट्रनखं सिंहं दृष्ट्वा स व्यथितोऽभवत् ॥ १५ ॥

तां तेन सिंहेन तामालक्ष्य धनुर्द्धरः । निषङ्गाद्बाणमुद्धर्तुं प्राहिणोद्दक्षिणं भुजम्
णमुद्धृत्य तूणीरान्निहन्तुं तं मृगाधिपम् । गुणेनापूर्णमायोज्य चकर्ष वसुधाधिपः॥

जडीभूतसमस्ताङ्गस्तत्सिंहालोकनेन सः ।
नाऽशकद्बाणमुत्स्रष्टुं राजाऽसीद्विस्मितस्ततः ॥ १८ ॥

दृशं नृपमालक्ष्य जगाद स मृगाधिपः । नरवाचा भृशं भूयो विस्मयं प्रापयन्निदम्

सिंह उवाच ।

लीपं त्वामहं राजञ्जानामि रविवंशजम् । त्वंचजानीहिमांशम्भोर्गणंकुम्भोदराभिधम्
देवदारुरयं यस्ते वर्त्तते दृष्टिगोचरे । पार्वत्या पुत्रवद्वीर! पालितः स्निग्धचित्तया॥२१
कदाऽमुष्यवन्येन गजेनाघर्षता कटम् । उदपाटि महाराज ! वल्कलं मृदुलं भृशम् ॥
तं तादृशमालक्ष्य मृडानीकरुणान्विता । मामत्र स्थापयामास सिंहंकृत्वाऽस्य रक्षणे

मामाह चेतिसा देवी कुम्भोदर! निशम्यताम् ।
योऽत्र जन्तुः समागच्छेत्तं खादेस्त्वं वसन्निह ॥ २४ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ततःप्रभृति राजेन्द्र! तदाज्ञां पालयन्नहम्। पालितां त्रिदशैः सर्वैः कन्दरेऽत्र
जडीभावे स्वदेहस्य त्वया कार्यो न विस्मयः। महती शाम्भवी मायावर्त्ततेऽत्र
अन्यस्मिन्निव सिंहे त्वं प्रहर्तुं न मयि क्षमः। यतो मत्पृष्ठमारुह्य वृषमारोह
निवर्त्तस्व निजं देहं रक्ष सर्वार्थसाधनम्। दैवेनासादिता वीर! गौरियं भक्ष

देवल उवाच।

इत्याकर्ण्य वचस्तस्य वीरसम्बोधनान्वितम्। प्रत्युवाचदिलीपस्तं स जडी

राजोवाच।

सर्गस्थितिविसर्गाणां कारणं जगतः शिवम्। अम्बिकांजगदम्बांचनमामि
त्वं च तत्सेवकत्वेनमान्योममम‍ृगाधिप!। ब्रवीमियदहंवाक्यंश्रुत्वाशाधि
वसिष्ठो ब्रह्मणःपुत्रो गुरुर्नो विदितस्तव। तस्येयं नन्दिनीनाम धेनुः सर्वार्थ
सन्तानोत्पत्तये तेन दत्ताऽऽराधयितुं मम। येयमाराधितासम्यग्दिनानि कति
लघुतर्णकमातेयं धृता ते गिरिकन्दरे। शम्भुभृत्याद्बलात्त्वत्तोऽशक्ता मोच
अहं तस्य मुनेरग्रे गच्छाम्येनामृते कथम्। कामधेनोस्तु दौहित्रीजगत्सेव्या

अनया सदृशी नाऽन्या गौर्यया तोषयामि तम्।

तस्माद्विमुच्य गामेनाम्मया कुरु निजाशनम्॥ ३६॥

ददामि देहमात्मीयमपकीर्तिमलीमसम्। एवं न धर्महानिः स्याद्भूतेस्तव तु

गवार्थे त्यजतः प्राणान्ममाऽपि गतिरुत्तमा॥ ३७॥

देवल उवाच।

एवमाकर्ण्य सिंहेन कृते मौने विशांपते!। तदग्रेऽवाङ्मुखो राजा न्यपतद्
तस्य प्रतीक्षमाणस्य सिंहपातं सुदुःसहम्। पपातोपरि पुष्पाणां वृष्टिर्मुक्ता
पुत्रोत्तिष्ठेति वचनं श्रुत्वा राजा स उत्थितः। जननीमिवतांधेनुं ददर्श न

तं विस्मितमुवाचेदं नन्दिनी नृपसत्तमम्॥ ४१॥

नन्दिन्युवाच।

मायया सिंहरूपिण्या त्वं मयाऽसि परीक्षितः।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मुनिप्रभावान्मां राजन्ग्रहीतुं न क्षमोऽन्तकः ॥ ४२ ॥

नसाऽपि कुतोऽन्येषां मद्ग्रहेशक्तिरङ्गिनाम् । स्वशरीरस्य दानेन त्वं मां रक्षितुमुद्यतः

अतस्तेऽहं प्रसन्नाऽस्मि वृणीष्व वरमीप्सितम् ॥ ४३ ॥

राजोवाच ।

गुप्तं देहिनामन्तर्वर्तिन्वृत्तं भवादृशाम् । अतो जननि! जानासि वाञ्छितं ममदेहितत्

गधेश सुतायांमेवंशकर्तारमात्मजम् । प्रयच्छकिञ्चित्स्वच्छानांनासाध्यंहिभवादृशाम्

युक्त्वाऽञ्जलिमाधाय तत्पुरस्तस्थिवान्नृपः । तूष्णीं तदुत्तरापेक्षी तत्पुरो बद्धलोचनः

देवल उवाच ।

शम्येति वचस्तस्य भूपतेरिदमब्रवीत् । नन्दिनी पितृदेवर्षिनरभूतार्थसाधिका ॥ ४७॥

नन्दिन्युवाच ।

पुत्र! पत्रपुटे दुग्ध्वा पयो ममपिबेप्सितम् । आश्रमे गुरुणाज्ञप्तः पुनःपास्यसि शेषितम्

भविता वंशकर्ता ते सुतः शस्त्रास्त्रतत्त्ववित् ॥ ४८ ॥

देवल उवाच ।

इत्युक्तःसौरभेय्या तामुवाच विनयेन सः ॥ ४९ ॥

दिलीप उवाच ।

तु ...तस्तवैव पास्यामि शेषं सर्वक्रियाविधेः । तृप्तोऽहं मातरासाद्य मिष्टंतेवचनामृतम्

न्यदिच्छामि सारङ्गः कादम्बिन्या यथा जलम् । तवशुश्रूषणान्मातरभवंसकलोद्भवः

मस्तजनपूज्याया विद्याया इव मूढधीः । तव मातामहीदत्तः शापोऽप्यासीद्वरो मम

मृते पुत्रलाभो मे कुतस्तव च दर्शनम् । वरायैव तथाप्यम्ब! समाराध्याभवादृशः ॥

नहि कश्चिद्द्विषाकाङ्क्षी महादेवात्त्रिवर्गदात् ॥ ५३ ॥

देवल उवाच ।

त्वेतितद्वचः सा गौः प्रसन्नासाधुसाध्विति । आभाष्यहिमवद्गर्भाद्ययौतेनसहाश्रमम्

धेनुरिव तत्राऽपि पूजिता राजभार्यया । प्रसन्नासावभौधेनुःकार्यसिद्धिरिवाऽङ्गभाक्

मुखं प्रसन्नमालक्ष्य मृगाक्षी सा क्षितीशितुः । अज्ञासीत्तंनिजंकार्यंसिद्धंयत्नस्तुयत्कृते

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अथ तौ दम्पती धेन्वा विधिवद्विहितार्चया। तया सह गुरोरग्रे कृतकृत्यस्य:
निरीक्ष्य तौ मुनिवरः प्रसन्नमुखपङ्कजौ। अतीन्द्रियज्ञाननिधिः प्रोवाचेदं प्र

वसिष्ठ उवाच।

राजञ्जानामि गौरेषा प्रसन्ना वामभूत्किल। अपूर्वा युवयोरद्य मुखकान्तिर्हि भवे
सुरभिः सुरशाखीचविश्रुतौकामपूरिणौ। तदपत्यंसमाराध्यसिद्धोऽर्थःस्यादि

यो ददाति निखिलं मनोरथं कीर्तितेयमनघाऽपि दूरतः।
श्रद्धया निकटएव सेविता किं पुनःसुरतरङ्गिणीव सा ॥ ६१ ॥
ज्ञानतो विदितमद्भुतं मया त्वत्कृतं यदनया परीक्षणम्।
भूपते! त्वमपि धर्ममात्मनो रक्षसिस्म च यथा तथा च तत् ॥६२॥
त्वय्यसौ मम मनोऽनुकूलता भावमात्मनि विबुध्यते तथा।
तुष्यतिस्म कमला यथा हरेः पार्वतीव गिरिशस्य सज्जने ॥ ६३॥
रात्रिरत्र सह भार्ययाऽनया धेनुपूजनपरेण नीयताम्।
भूप! भव्य भवता गमिष्यते श्वः समाप्तविधिना निजां पुरीम् ॥६४॥

देवल उवाच।

वैश्यैवं धेनुमाराध्य सभार्यः प्राप्तवाञ्छितः। प्रातर्युक्तरथःप्राप्य गुरोराज्ञामप
कतिचिद्वासरैस्तस्य दिलीपस्याऽभवद्रघुः। यस्य नाम्नारवेर्वंशःपृथिव्यांविश्रुतोऽम
यः पठिष्यति भूपस्य दिलीपस्य कथामिमाम्। धनंधान्यंसुतंवैश्य!लप्स्यतेसुखं

शरभवरसुताप्तये स्वबुद्धया सममनया परितोष्याऽऽशु गौरीम्।
त्वमपि कुलधरं गुणान्वितं सा सुतमनघं खलु दास्यते च तुभ्यम्।

शिवशर्मोवाच।

मुनिरितिचरितं दिलीपराज्ञो ललिततरं शरभाय पुण्यमुक्त्वा।
अभिमतगतिमात्मनः प्रपेदे विधिमुपदिश्य च पूजनेऽम्बिकायाः॥

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे कालिन्दीमा
दिलीपपुत्रप्राप्तिर्नाम त्र्यधिकद्विशततमोऽध्यायः ॥ २०३॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# चतुरधिकद्विशततमोऽध्यायः

भवैश्यद्वारास्वस्त्रियादेवलवचनात्पुनर्भगवतीपूजाकरणंप्रसन्नयातयासपत्नी-
कायवैश्यायेन्द्रप्रस्थतीर्थेस्नानकरणात्पुत्रप्राप्तिःकथनं शरभकृतगृह-
त्यागो राक्षसशरभसम्वादवर्णनम्

शिवशर्मोवाच ।

णुशर्मंस्ततो वैश्यः शरभःसहभार्यया । नीत्वा पूजोपकरणंययौ श्रीचण्डिकालयम्
ौ विधिवत्स्नात्वा सुमनोधूपदीपकैः । आनर्चतुर्भक्तियुक्तौ चण्डिकां पुत्रकाम्यया
यापूजिता ताभ्यां दिनैःसप्तभिरम्बिका । उवाचवाचा प्रत्यक्षं भूत्वा विशदमानसा

पार्वत्युवाच ।

ोवैश्य! प्रसन्नाऽस्मि भक्त्या सुदृढया तव । ददामि पुत्रंते साधोयदर्थे यत्नवानसि
गच्छ त्वं मा विलम्बस्व वनमैन्द्रं च खाण्डवम् ।
तत्र तीर्थं महापुण्यमिन्द्रप्रस्थाख्यमुत्तमम् ॥ ५ ॥
ोमोद्बोधकं तत्र तीर्थं निखिलकामदम् । वृहस्पतिकृतं तत्र स्नाहि त्वं सुतवाञ्छया
ष्यतिसुतस्तात तवस्नानेन तत्रहि । तत्रस्नात्वामयाऽप्यङ्ग! लब्धःस्कन्दः सुरारिहा

शिवशर्मोवाच ।

इत्याकर्ण्य वचो देव्याः पिता मम सह स्त्रिया ।
अत्राऽऽजगाम सत्तीर्थे सस्नौ च सुतवाञ्छया ॥ ८ ॥
स्करवतोर्थेनूर्द्विजेभ्यः प्रददौ शतम् । देवान्पितॄंश्च सन्तर्प्य यथाविध्यत्र बुद्धिमान्
ात्रमुषित्वा तु दम्पती यतमानसौ । जग्मतुः स्वगृहानिष्टलाभोत्फुल्लमुखाम्बुजौ ॥
सन्नेवाऽभवद्गर्भो मासि मातुर्ममाऽन्वहम् । व्यतीते नवमेमासि जातोऽहं दशमेशुभे
णुशर्मन्यदुक्तं ते पुरावृत्तमिदं मया । दशाब्दद्वयमेवैतच्छ्रुतं सर्वं पितुर्मुखात् ॥१२॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

एकदा क्षममालोक्य गृहकर्मणि मात्पिता । गृहंसमर्पयामास सविश्वाद्धैरा

मां चोवाच स धर्मात्मा गोविन्दासक्तमानसः ।

विनिन्दन्विषयासक्तिं विष्णुभक्तिं स्तुवन्मुहुः ॥ १४ ॥

पितोवाच ।

सुमते! वार्द्धकंप्राप्तंपलिताश्चिकुरा मम । गोविन्दचरणाम्भोजं सेविष्ये सा

तत्सेवया भवेत्स्वच्छं मनो यस्य च सुस्थिरम् ।

सपुमानात्मसन्तुष्टो न किञ्चिदभिवाञ्छति ॥ १६ ॥

निष्कामः सुखदुःखाभ्यां भुञ्जन्सुकृतदुष्कृते । प्राकृते तत्समाप्तौ च त्यजन्दे

तावद्द्रव्यगुणसुखं यावत्प्राप्तं न चित्सुखम् । तत्प्राप्तौ तद्भवेत्तुच्छंसुधायाश्चे

हरेर्मायाबलवती या मोहयति देहिनम् । हिताहितं न जानाति सयथा म

प्रवृत्तिं च निवृत्तिं च विद्ययाऽविद्यया च सः ।

करोति स्वेच्छया काले बाललीलो हि स प्रभुः ॥ २० ॥

वेदोदितं यदा कर्म क्रियते फलमिच्छता । प्रवृत्तिः सा परा तात तेषाम

यथानिर्दग्धबीजानि न प्ररोहन्ति यत्नतः । तथाकर्माणि विश्वेशेनिष्कामे

कर्मणां च लयो मोक्षः सुखदुःखप्रदायिनाम् ।

तदुत्पत्तिस्तु बन्धः स्यादित्यसौ शास्त्रनिर्णयः ॥ २३ ॥

अतोऽहं कर्म वेदोक्तं कुर्वन्नाभिलषन्फलम् । पर्यटिष्यामि तीर्थेषु हृदि भ

एवम्प्रारब्धकर्माणि भुञ्जन्नन्यान्यनजयन् । हनिष्यामि जगद्रोगं पीत्वासत्

शिवशर्मोवाच ।

एवमाकर्ण्य वचनं तस्याऽहं पितुरात्मनः । अवदं विष्णुशर्मस्त्वं तन्निशाम

अयं जनो दुराराध्यः कथयिष्यति नौयशः । दुष्टः कुटुम्बादुद्विज्य निःसत्य

इयं विष्णुपदी तात भुवनत्रयपावनी । स्मृता हरत्यघंदूरात्कस्मादेनां

पापकारी जनस्तात! म्रियतेमगधेतुयः । सोऽप्यस्थिपाताद्गङ्गायां स्वर्याति

पुत्राःषष्टिसहस्राणि सगरस्यमहात्मनः । कपिलक्रोधनिर्दग्धा गता यत्स्पर्श

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तामिमां त्रिदिवश्रेणीं मुक्तेरपि विधायिनीम् ।
मुमुक्षुसेवितां तात ! मुक्त्वा माऽन्यत्र गम्यताम् ॥ ३१ ॥
॰जानीहि सामीप्ये गङ्गां त्रिदशमानिताम् । यदिच्छसि महाभाग! सेविता साप्रदास्यति
॰श्चोऽपि विना ज्ञानाज्जले चेत्स्युर्गतासवः । भवेयुस्तर्हि ते ब्रह्म सा कथं त्यज्यते त्वया
शिवशर्मोवाच ।
॰म्यैतद्वचस्तातस्ततो मम ऋतप्रियः । उवास सदने सर्वविषयेभ्यः पराङ्मुखः ॥
॰षु कालेषु गङ्गायां प्रत्यहं स्नानमाचरन् । पुराणं स्याद्गृहे यत्र तत्र याति स नित्यशः
॰दाकर्णयन्धीरो यमुनातीर्थगौरवम् । तत्र शुश्राव माहात्म्यमस्य तीर्थस्य पुत्र सः ॥
॰मुक्तहरिद्वारप्रयागेभ्यश्च पुष्करात् । अयोध्याद्वारिकाकाञ्चीमथुराभ्यस्तथाऽन्यतः
॰तीर्थमयस्याऽस्य पुण्यं शतगुणाधिकम् । कथितं तेन विदुषा सुतेनाऽऽकर्ण्य मत्पिता
॰त्वा गृहमगादत्र तीर्थे सर्वैरलक्षितः । आवामिव महाभागो गोविन्दपदसेवकः ॥
अत्राऽऽगत्य महाभागो मत्पिता मोक्षवाञ्छया ।
निगमोद्बोधके तीर्थे त्रिकालं स्नानमाचरन् ॥ ४० ॥
॰सकतिचिन्मासानत्र तीर्थोत्तमे हि सः । कुर्वन्निजक्रियां धीमान्निःस्पृहोऽप्यजवेश्मनि
॰दा सहसा तस्य ज्वरोऽभूदतिदारुणः । महत्या पीडया तस्य मुमोह गतचेतनः ॥
॰र्तं स पितामुह्यस्तदवस्थो व्यतिष्ठत । पश्चात्समागतप्राणो व्यचिन्तयदिदं तदा ॥
॰ो मे कष्टमापन्नं दूरे पुत्रः स धार्मिकः । यो मां ज्वरवितप्ताङ्गमाश्वासयति बुद्धिमान्
॰म्यागमनं पापं कृतं यन्मे सुदारुणम् । प्रायश्चित्तं न तस्याऽपि कृतं कामे गतिर्भवेत्
आगमिष्यति पुत्रो मे तस्मै दास्यामि वस्विति ।
यन्मया गोपितं गेहे न दृष्टं च मयाऽपि तत् ॥ ४६ ॥
शिवशर्मोवाच ।
॰चिन्तयतस्तस्य पान्थो वर्षेण पीडितः । शीतार्तः कम्पितवपुरुटजं प्राविशत्तदा ॥
॰तं सन्निविष्टमालोक्य भूयो गत्वा तदन्तिके । मुनिरेष इति ज्ञात्वा ववन्दे शिरसाऽध्वगः
ऊचे च कस्मात्सुप्तोऽसि मुने ! सन्ध्या समागता ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

रविरस्तं प्रयात्येष न सुप्तेः काल एष ते ॥ ४६ ॥

इत्युक्तमात्र वचसि पथिकेन पिता मम । शरभोज्वरतप्ताङ्गस्तमाह कथमप्य

शरभ उवाच ।

श्रूयतां वचनं पान्थयद्वदामि पुरस्तव । श्रुत्वा मद्भाग्ययातेन त्वया साधो! विधीय

वैश्योऽहंशरभोनाम्ना कान्यकुब्जेगृहंमम । अत्राऽऽगतोनिषिद्धोऽपिजायामित्र

अस्य तीर्थस्य माहात्म्यं श्रुत्वा सूनुमुखेरितम् ।

मासास्तुकतिचित्साधो ! व्यतीता मयि चाऽऽगते ॥ ५३ ॥

दिनत्रयमतिक्रान्तं ज्वरितस्य ममाऽधुना । प्राणामे विगता आसन्नद्य भूयस्

कियानप्यायुषः शेषः साधो! मे खलु तिष्ठति । शमनस्य गृहं द्रष्टा यदहं पुनः

भाग्योदयेन केनापि ममाऽत्रत्वं समागतः । नय मां मद्गृहं मित्र द्रव्यं बहु

दास्याम्यपि गृहं गत्वा कृपां कुरु कृपानिधे !। इह भूभागउत्खायगृह्यतांमाम

शिवशर्मोवाच ।

इत्याकर्ण्य स दुर्बुद्धिर्ग्राम्यो विषयलम्पटः । उवाच धनलुब्धस्तं त्वदुक्तंसाधु

इत्युक्त्वाधनमुत्खायतस्माद्भूभागतस्तदा । अग्रतःस्थापयामास शरभस्याऽह

अध्वग उवाच ।

धनमेतद्विशां नाथ! तव भूभागतोमया । निष्कासितं प्रयच्छाऽऽशु शिबिका

यामारोप्य ज्वरार्तं त्वां नयामि तव केतनम् ॥ ६१ ॥

शिवशर्मोवाच ।

इत्युक्तस्तेन स तदा ददौ स्वर्णपलत्रयम् । सोऽपि नीत्वा पितुर्द्रव्यं ययौ

उषित्वा रात्रिमेकां तु शिबिकां सपरिच्छदाम् ।

सवाहामानयत्पुत्र ! दत्त्वा स्वर्णपलद्वयम् ॥ ६३ ॥

पलद्वयं गृहीतं तत्तेनैवाऽधर्मबुद्धिना । आरोप्य शिबिकां तं तु शरभं वैश्य

पान्थः स चलितो वाहांस्त्वरयन्कान्यकुब्जकम् ।

अस्य तीर्थवरस्याऽथ कमण्डलुजलं धृतम् ॥ ६५ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न्नल्पमल्पं तं तृषार्तं सोऽध्वगो ययौ । अथ ते सरसस्तीरउत्तीर्णाभोक्तुमध्वनि
स्नात्वा भुक्त्वा पुनस्तस्मात्स्थानाच्चेलुस्त्वरान्विताः ।
कियन्तीं भूमिमुल्लङ्घ्य तृषार्तास्ते कमण्डलोः ॥ ६७ ॥
पीत्वातृषार्ततं शरभं चाप्यपाययत् । अथ कश्चिन्महाभीमो विकटोनामराक्षसः
निर्जनेऽरण्ये गच्छतस्तानवैक्षत । तान्दृष्ट्वा स क्षुधाक्रान्तो वेगवान्विवृताननः
दुद्राव चरणाघातेनाकम्पयन्महीम् । आगत्य तरसा पार्श्वे तान्वाहान्पथिकंचतम्
शशु समादाय भ्रामयामास खेचरः । गतासून्भ्रामणेनैव भूतले तानपोथयत् ॥
पिशितं तेषां पपौ कोशाच्चशोणितम् । कुत्रयास्यतिरोगार्तोनरोऽयंपुरतो मम
भक्षयिष्यामिपश्चादम्बुपिबाम्यहम् । इतिकृत्वामतिंवारितीर्थस्यास्यकमण्डलोः
चिक्षेप स तदा रजनीचरपुङ्गवः । क्षिप्तमात्रे जले तस्य पूर्वजन्मभवा स्मृतिः ॥
स तु वधात्तस्य शरभस्य न्यवर्तत । पूर्वजन्मकृतं पापं तदपिस्मृतिमागमत् ॥
राक्षसभावस्तु भूतोविप्रोद्भवादपि । स्मृत्वा पादमुपेत्याऽऽशुसमीपेशरभस्य तु ॥
उवाच ज्ञानमापन्नो राक्षसः पितरं मम ॥ ७६ ॥

राक्षस उवाच ।

मनुष्यशार्दूल! कस्त्वं के च जनाअमी । भक्षिता ये मया घोररूपेणाऽधमरक्षसा
तीर्थवरस्येदं जलं यस्य प्रभावतः । पापिनोऽपि स्मृतिर्जाता पूर्वजन्मभवा मम

वैश्य उवाच ।

ऽहं राक्षसश्रेष्ठ! कान्यकुब्जे गृहं मम । तीर्थानि पर्यटन्निन्द्रप्रस्थेऽहं समुपागतः॥
समभवं दुःखी ज्वरेण विधियोगतः । ततो मे बुद्धिरुत्पन्ना गन्तुं गृहमसत्पथ ! ॥
कश्चित्समायातः पान्थोवर्षेणपीडितः । प्रार्थितः स मयाऽऽनीयशिबिकांमांगृहंनय
स चाऽयं शिबिकां पान्थः समुपानीय सत्वरः ।
मामारोप्य च तां धीरश्चलितो मद्गृहं प्रति ॥ ८२ ॥
न्थस्तेचशिबिकावाहाःसम्प्रतिभक्षिताः।त्वयाजलमिदंयस्यतीर्थस्याऽपिचतच्छृणु
य खाण्डववने यमुनाऽस्ति सरिद्वरा । तत्तीरेऽस्तिहरिप्रस्थं तीर्थंतीर्थोत्तमोत्तमम्

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सुराचार्यस्य तत्राऽस्ति तीर्थं सर्वार्थसाधकम् ।
निगमोद्बोधकं जाता स्मृतिस्ते यज्जलाशनात् ॥ ८५ ॥

एतत्ते सर्वमाख्यातं यत्पृष्टोऽहमिह त्वया । पृच्छामि त्वामहं किंचित्तद्वदाऽऽ
पूर्वजन्मकृतं कर्म स्मरसि त्वमिहाऽधुना । वद किं ते कृतं पापं येनजातो

राक्षस उवाच ।

पुराहमभवं विप्रः पुण्ये वेदविदां कुले । दुराचारो ह्यधर्मात्मा शृणु सर्वं सु
क्रीडता हि मया नित्यं द्यूतेन सह तद्विदैः । हारितं द्रविणं भूरि स्वकीयं
पित्रा निवेद्य भूपाय मामकं कर्म तज्जनैः । पुरान्निःसारितो निःस्वो गतोऽहं
तत्रासीन्मे सखानाम देवको ब्राह्मणोत्तमः । तेनाहं रक्षितो गेहे कुर्वता
वस्तुं तत्र सुखेनाऽहं तद्भार्यां रूपशालिनीम् । कामातुरोऽहमभजं बलान्मि

सा मृता तत्क्षणात्साध्वी भक्षयित्वा महाविषम् ।
तां दृष्ट्वा तमसायुक्ते निशीथेऽहं पलायितः ॥ ९३ ॥

पलायमानस्तरसा धृतोऽहं राजकिङ्करैः । चौरोऽयमिति खड्गेन चिच्छिदुः
मृतं मां यातनादेहमावेश्य यमकिङ्कराः । रौरवे निरये घोरे चिक्षिपुर्मा
षष्टिवर्षसहस्राणि तत्राऽहं तीव्रयातनाम् । भुक्त्वा तेनैव पापेन राक्षसत्वं
शतवर्षाण्यतीतानि राक्षसत्वे विशाम्पते ।। वदामि तमुपायं मे येनास्मान्मुक्ति
पुण्यं तदार्पिते साधो वदामि शृणु सादरम् । येन तीर्थवरस्येदं जलं मम मु
तत्रैव जन्मनि मया कृत्वा हरिदिने व्रतम् । संसर्गान्नेच्छया वैश्य! रात्रौ जा
द्वादश्यामथ संस्नात्वा भोक्तुमयि समुद्यते । मद्गृहे कश्चिदायातो वैष्णवो
क्षुधितोऽहं तमालोक्य दुर्वचोऽवदमग्रतः । क्व गच्छसि दुराचार दाम्भिक

इत्युक्तः स मया धीरस्तुल्यो मानापमानयोः ।
तूष्णीमेव निकेतान्मे निर्गत्य चलितो यदा ॥ १०२ ॥

तदाभिमुखमायान्ती पत्नी मम पतिव्रता । पतित्वा पादयोस्तस्य तं साधुं

मयाऽपमानितस्याऽपि न क्रोधोऽभून्महात्मनः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तयाऽऽहूतस्याप्यानन्दो यतः सोऽरिसुहृत्समः ॥ १०४ ॥
...येत्वा विधिवद्विष्टरे चोपवेश्य सा । भोज्यं भोजय जीवेश जयताद्भुवनत्रयम् ॥
...क्तोऽहं तयासाध्व्यान्यगदंतंमहाशयम् । म्लानवक्त्रःप्रसन्नास्यमुत्तिष्ठैशमयक्षुधाम्
...क्त्वा तस्य चरणौ नोदितस्तनुमध्यया । प्रक्षालयं पुनस्तं तु निवेश्यासन उत्तमे
...ं पात्रमन्नेन पूर्णं तस्मै विवेकिने । जलं च तत्करे साध्व्याप्रेरितोऽहं तया मुहुः
...ुज्य स धर्मात्मा स्वैरं विगतविक्रियः । हरेरामहरेकृष्णजपन्निति जगाम ह ॥
...पुण्यमिदं वैश्य! नोदितेन मया स्त्रिया । पूर्वजन्मनि येनेदं प्रापितं तीर्थवारि मे ॥

शिवशर्मोवाच ।

...गुशर्मन्निदं वाक्यमुक्त्वा तिष्ठति राक्षसे । पथिकःसचतेवाहाःप्राहुः खे दिव्यदेहिनः

पथिकवाहाऊचुः ।

...ोविशांपते साधोप्राप्ताअप्यपमृत्युताम् । त्वत्प्रसादादिदंवारिपीत्वादेवत्वमागताः
...सङ्गे धनलोभेन विट्पते चलिता यतः । विगता न धनाकाङ्क्षा मरणावसरेऽप्यतः
...राजजलस्याऽस्य तिष्ठतो जठरे हिनः । मरणे ह्यनुभावात्तु मैत्री प्राप्ता धनेशितुः ॥
...मस्त्वां वयं यामो धनेशनगरीं प्रभो !। विमानैस्तद्गणानीतैर्नानामणिविभूषितैः ॥
...हि माविलम्बस्व तीर्थे निगमबोधके । त्वमनेन समं साधो तारयैनमपि द्रुतम् ॥

शिवशर्मोवाच ।

...क्त्वाते गतास्तात दिश्युदीच्यांसमन्ततः । विमानकिङ्किणीनादैर्नादयन्तोऽथरोदसी
अथ वैश्यो मम पिता तमाह रजनीचरम् ॥ ११८ ॥

शरभ उवाच ।

...ष्ठ नयमामाशु तीर्थे निगमबोधके । ज्वरार्त्तेन मया पद्भ्यां तत्र गन्तुं न शक्यते॥
यो मां नयति तत्तीर्थं त्वदन्यो नास्ति कश्चन ॥ ११९ ॥

शिवशर्मोवाच ।

...ति तमथाऽऽश्वास्य वैश्यं स रजनीचरः । स्कन्धमारोप्य वेगेन तत्तीर्थंपावनंययौ
...ुत्तावुभौ तत्र विट्पतिः स च राक्षसः । कुर्वन्तौ स्नानमात्रं तु सर्वतीर्थोत्तमोत्तमे

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अथाऽहं पितुराकर्ण्य महतीं गुरुवेदनाम् । तं प्रति प्रेरितो मात्रा चलितो
अत्राऽऽगत्य मया दृष्टः स महाज्वरपीडितः । मूर्ध्ना च वन्दितस्तेन दत्ताशी

शरभ उवाच ।

किमर्थमिहभोस्तात! दूरमार्गे समागतः । दिनानि कतिचित्तिष्ठन्कुर्वन्नत्र मय
चिकटो नाम मे मित्रं राक्षसः समुपैति वै । उत्तिष्ठ वपुषाऽमुष्य दण्डवत्तनुर
न भेतव्यं त्वयाऽमुष्मात्त्यक्तहिंसादिकर्मणः । अधुना तीर्थमासाद्य सधिशं

शिवशर्मोवाच ।

इत्युक्तोऽहं तदा पित्रा शरभेण महात्मना । उत्थाय पतितस्तस्य पादयो

दोर्भ्यामुत्थाप्य मां सोऽथ गाढमालिङ्गय राक्षसः ।
स्वागतं मित्रपुत्रेति जगादाऽऽशिषमीरयन् ॥ १२८ ॥

राक्षस उवाच ।

भाग्यवानसि भोस्तात! यत्त्वमत्रसमागतः । पितुर्धर्मात्मनः श्रुत्वाज्वरपीडां

पितुरानृण्यमाप्नोषि तीर्थे कृत्वा तिलोदकम् ।
स्नात्वा कुरु क्रियाः स्वीयाः पूर्वजन्म स्मरिष्यसि ॥ १३० ॥

शिवशर्मोवाच ।

एवमुक्तस्तदा तेन स्नातुं तीर्थे वराम्भसि । प्रविष्टोऽहं स्मरंस्तात! पूर्वजन्म
स्नात्वा विधिवदत्रैव पितुरन्तिकमागतः । अपृच्छं रक्षसोवृत्तं कुतोऽयं धर्मं
पित्रोक्तं रक्षसोवृत्तं वाहानां पथिकस्य च । श्रुत्वाऽहं तीर्थराजस्यस्तुतिम
पिता मे रोगनिर्मुक्तो भविष्यति यदा तदा । यास्यामि गृहमित्यत्र दशोऽपि
दशाहाभ्यन्तरे तात तातस्य मरणं मम । अभूदर्धजले ह्यस्य तीर्थराजस्य
अथो गरुडमारुह्य वक्षसा धारयञ्छ्रियम् । आजगाम स्वयं विष्णुर्नवीन
पीतवासाश्चतुर्बाहुः पङ्कजारुणलोचनः । ब्रह्मेन्द्रादिभिरादित्यैः सनाथैर
सेव्यमानो गुणग्रामान्गायद्भिः किन्नरैः सह । हाहाहूहूप्रभृतिभिः स्तूयमान
दत्त्वा स्वकीयसारूप्यमारोप्य गरुडं तदा । पितरं मम ब्रह्माद्यैर्वृतो वैकुण्ठ

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पितुः सारूप्यमालोक्य विष्णोरहमचिन्तयम् ।
इतिचित्ते तदालोक्य जाततत्त्वोदये तदा ॥ १४० ॥

हि वर्णयितुं शक्यो ह्यस्यतीर्थशिरोमणेः । महिमा यज्जलार्द्रस्यान्मृतोजन्तुश्चतुर्भुजः
मया सर्वथा त्याज्यं तीर्थराजमिदं ननु । अञ्जसा दृढमाहात्म्यं धनरोगादितृष्णया
नुरत्रोटजे तावत्स्थातव्यं हि मया मम । यावत्तु कर्मणां भुक्तिःप्रारब्धानां महीतले ॥

एवं तु चिन्तयित्वा च पितुः कृत्वा तु सत्क्रियाम् ।
रक्षसा तेन सहितः स्थितोऽहं मोक्षवाञ्छया १४४ ॥

श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे कालिन्दी-
माहात्म्ये शरभवैश्यस्येन्द्रप्रस्थमाहात्म्येन विष्णुसारूप्यवर्णनं नाम
चतुरधिकद्विशततमोऽध्यायः ॥ २०४ ॥

---

# पञ्चाधिकद्विशततमोऽध्यायः

## शरभमित्रस्यराक्षसस्यइन्द्रप्रस्थेसमुद्धारवर्णनम्

शिवशर्मोवाच ।

दाऽत्र महातीर्थे पङ्के मग्नां पयस्विनीम् । दृष्ट्वा स राक्षसश्रेष्ठस्तामुद्धर्तुं विवेश ह॥
क्षणं महान्धर्मो रक्षितुः स्वर्गतिर्भवेत् । चिन्तयन्निति मध्येतु सगृहीतोऽम्बुहस्तिना
स्तु वारिणोऽधस्ताज्जलपूर्णोदरस्तदा । तत्याज जीवितं सद्यस्तेन पीडितविग्रहः
यरूपं समास्थाय विमानमपि ढौकितम् । गणेन प्रहितेनाऽथ देवैरिन्द्रपुरोगमैः ॥
छन्निति मया पृष्टः स निशाचरपुङ्गवः । मुक्तिर्देऽत्र महातीर्थे मृत्युं प्राप्य सुदुर्लभे ॥
देवपदप्राप्तिर्जाता तव महामते !। इत्युक्तो मामुवाचेदं वाञ्छाऽऽसीदत्र मेऽनघ!॥
मन्याते पुण्यजने स्वर्गं पुण्यवतां पदम् । एकाकिनामयाविष्णुःसद्गतिःप्रार्थितस्तदा

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

गच्छंस्तिष्ठन्स्वपञ्जाग्रत्स्नानं कुर्वंश्च नित्यशः ।
तमेव पुण्डरीकाक्षमहं दध्यावनन्यधीः ॥ ८ ॥

हरे! तव पदाम्भोजमहं शरणमागतः । ब्रह्मत्वे च महेशत्वे नेन्द्रत्वे मम मा
प्रार्थयन्नित्यहं तात! तमेव पुरुषोत्तमम् । उषितोऽत्र महातीर्थे कृत्वा नि

विष्णुशर्मोवाच ।

वसतोऽत्र महातीर्थे मरणं चेत्तवाऽभवत् । कथं जन्म पुनः प्राप्तं त्वयेति
मर्यादां यस्य तीर्थस्यत्यक्त्वाऽपिधनलोभतः । राक्षसान्मरणंप्राप्ताःपथिकास्
यस्य तीर्थवरस्याऽस्य जलपानाद्दिवंगताः । तथैव राक्षसोऽप्यस्मिन्नपमृत्
नक्तः स्वेच्छया स्वर्गं जगाम तव पश्यतः । न नूनं तत्र मरणं जातं य

नारद उवाच ।

शिवे! निशम्य पुत्रस्य शिवशर्मा शुभं वचः । उवाच पूर्ववृत्तान्तं कारणं नि

शिवशर्मोवाच ।

विष्णुशर्मञ्छृणुष्वेदं कारणं मम जन्मनः । कथयामि तवाग्रेऽहं श्रुत्वा नि

एकदा विष्णुपूजायां मयि ध्यानं समास्थिते ।
दुर्वासाः प्रकृतिक्रोधी ममाऽऽश्रममुपागतः ॥ १७ ॥

तमागतमविज्ञाय विष्णुध्यानपरायणः । तस्थिवांस्तदवस्थोऽहं चिरं त
स मुहूर्तं मुनिः स्थित्वा ममाग्रे क्रोधमूर्च्छितः । आत्मनात्मानमाहेदमुच्चै

दुर्वासा उवाच ।

अहो! अत्रेरहं पुत्रोऽनसूयागर्भसम्भवः । शिवांशो मानुषेणाऽलमवज्ञातोऽ
त्रिलोकी राज्यतः शक्रोमयायेन प्रपातितः । तं मामपि मनुष्योऽयमन्
योबिभेतिन कःसोऽस्ति मत्तःकालानलादिव । मुक्त्वादेवत्रयीं लोकेयत

यामसौ ध्यायते मूढो देवतां ध्यानमास्थितः ।
न कथं बोधयत्येनं सेति मूर्ध्नि स्थितो मम ॥ २३ ॥

नूनं नारायणं देवं ध्यायत्येष जगद्गुरुम् । यद्ध्यानामृततृप्तो हि न बा

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

हरिं वा ब्रह्म वा शम्भुमन्यं वा ध्यायतीमयम्।
मयाऽयं सर्वथा दण्ड्यो मदवज्ञाकरो ह्ययम्॥ २५॥

शिवशर्मोवाच।

...विचिन्त्य स मुनिःसुमतिं मामबोधयत्। शशाप च विबुद्धंमामिति क्रोधारुणेक्षणः
...वज्ञाय यश्चित्ते ध्यानकाले मनोरथः। कुतस्तेन भवे ह्यस्मिन्भविष्यति हि सर्वथा
...त्वा स यदा तात! चलितो मुनिरत्रिजः। तदा मया चरणयोर्गृहीतो भयभीरुणा

इत्युक्तश्च मुनिश्रेष्ठ! क्षम्यतां रुड्विमुच्यताम्।
मादृशा न विजानन्ति सम्यक्कर्म भवादृशाम्॥ २६॥

... त्वं दत्तवान्घोरं साम्प्रतं मे निरेनसः। प्रसीद मम नम्रस्य शापान्ते कुर्वनुग्रहम्
...क्तः कोपमुत्सृज्य दुर्वासाः शीतलोऽभवत्। किमेतन्नोचितं तात! स यतश्चन्द्रशेखरः
...चेतिसमांश्रीमांस्तं भूत्वाब्राह्मणोत्तमः। अत्रैवमरणं प्राप्य न भूयो जन्म लप्स्यसे
मामनुगृह्याऽथ स जगाम दिगम्बरः। उषित्वा तद्दिनं तात! मया सत्कारपूजितः
...र्भाषितं मिथ्या चिन्तयित्वाऽहमित्यपि। जगामस्वगृहं चित्ते पश्चात्तापं वहन्निति
... मे ध्यायतो नित्यं सतीर्थाश्रमिणस्तथा। दर्शनं दुर्लभं जातं श्रीपतेरिह जन्मनि
...कस्येव मेघस्य शुचौ सन्तापकारिणि। कुतोऽयमागतो मह्यं वैकुण्ठगतिरोधकः॥
...स्यप्रस्थितस्येव जलदोऽकालवारिमुक्। नदोषोऽस्ति मुनेर्नूनं तस्यैवेच्छाहरेःखलु
...र्शनं हि दत्त्वाऽपि मम जन्मान्तरं कृतम्। मया संसारभीतेन ग्राह्यं पादाम्बुजं हरेः
...घातपतप्तेन पथिकेनैव पादपः। किं धनापत्ययोषिद्भिरनित्यैश्चाऽन्यबन्धुभिः॥
...विन्दपरमानन्दरामेति मम जल्पतः। उदासीनवदासीनः कुटुम्बेषु हरिं भजन्॥४०॥
...श्यमेव भोक्ष्यामि कर्माण्यन्यान्यतर्जयन्। चिन्तयन्नित्यहं तात! कियद्भिर्वासरैरहम्
...वान्स्वगृहं स्नात्वा हरिपादोदकान्तरे। पितुर्मरणमाख्यातं मात्रेबन्धुभ्य एव च॥

श्रुत्वा तेऽपि शुचं चक्रुर्नाविन्दन्निममस्थिरम्।
सत्यलोकादिलोकेषु निःस्पृहोऽहं गृहे वसन्॥ ४२॥

... प्राप्तवान्कूले गङ्गाया मुनिसेविते। मुनेर्दुर्वाससः शापाज्जातोऽहं वैष्णवे कुले॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मरणं चाऽत्र सत्तीर्थे लब्ध्वा प्राप्स्ये हरेः पदम् ॥ ४९ ॥

नारद उवाच ।

एवं सुराचार्यविनिर्मिते तदा तीर्थेमहाभागपुराकृतानि तौ। प्रस
द्विजोत्तमौ प्रोच्यमिथः सुतस्थतुर्विचिन्तयन्तौ हरिपादपल्लवम्।
विचिन्तयन्तौ हरिमब्जलोचनं चतुर्भुजं नीरदनीलविग्रहम्।
निजायुधालङ्करणावभासितं स्मृत्वाऽत्र सारूप्यमवापतुर्हरेः।
यस्य क्षेत्रमिदं पुण्यमिन्द्रप्रस्थाख्यमुत्तमम्।
तस्योपाख्यानमाख्यातं फलमस्य शिवे! शृणु ॥ ४८ ॥

गङ्गास्नानेन यत्पुण्यं कन्यादानोद्भवं च यत्। श्रवणादस्य तत्पुण्यं श्रद्धया
पुत्रे जाते तु गोदानात्सिहगे च बृहस्पतौ। गोदावरीजले स्नानाद्यत्फलं
तत्फलं श्रवणादस्य जायतेनाऽत्रसंशयः। अतस्तीर्थोत्तमादन्यत्तीर्थंनास्त
यस्मिन्मरणतो नूनं तिर्यञ्चोऽपि चतुर्भुजाः ॥ ५१ ॥

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे
माहात्म्ये निगमबोधोपाख्यानं नाम पञ्चाधिकद्विशततमोऽध्यायः ॥

---

## षडधिकद्विशततमोऽध्यायः

### काम्पिल्यनगरस्थब्राह्मणेननगरवधूनांसमुद्धारः

सौभरिरुवाच ।

धर्मराज! शिबिः श्रीमानाकर्ण्य तद्वचो मुनेः। नारदस्याऽब्रवीत्प्रीतमना

शिबिरुवाच ।

मुनेतीर्थत्रयस्याऽस्य निगमोद्बोधकस्यते। माहात्म्यं वर्णितं सम्यक्

इन्द्रप्रस्थेऽत्र शतशः सन्ति तीर्थानि वै मुने!।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अन्यस्याऽपि समाचक्ष्व माहात्म्यं यदि विद्यते ॥ ३ ॥

नारद उवाच ।

प्रस्थान्तरावर्तिन्येषा या द्वारकानृप!। अस्यां पुरा हि यद्वृत्तं तत्ते वच्मिशृणुष्वमे

काम्पिल्येऽथ द्विजः कश्चित्पुष्पेषुर्मूर्तिमानिव ।

सर्वासां योषितां चित्तहारी हास्यादिविभ्रमैः ॥ ५ ॥

तविद्याकुशलः कोकिलामधुरध्वनिः । एकदा स करे वीणां धारयन्वादयन्मुहुः॥

ेन कोकिलालापमधुरेण नराधिप ! । गायन्बभ्राम नगरे प्रतिरथ्यं महामतिः॥७॥

गीतध्वनिंश्रुत्वा मूर्छनातानसंयुतम् । त्यक्त्वास्वगृहकार्याणि तमीयुःपौरयोषितः

ेतास्तस्य रूपेण कामवेगंनसेहिरे । जातास्खलितवीर्यास्ता गीतं श्रुत्वा समक्षतः

णो मानसं येन लोभितंभारतीम्प्रति । शिवस्याऽर्द्धशरीरं च पार्वत्यै येन दापितम्

ताभ्यामन्यो जनो लोके वशी वा ज्ञानवानपि ।

यः स्मरन्तं क्षमो जेतुं स्त्रियः प्रकृतिचञ्चलाः ॥ ११ ॥

स्मरावेशमासोढुंनसाध्व्योऽपिविषेहिरे । वक्तव्यमिति किंराजँल्लोकेकामोहिदुर्जयः

तास्तत्र तत्रेयुर्यत्र यत्र व्रजत्यसौ । प्रगायन्कण्ठवीणाभ्यां प्रगायन्स्वरमोहितः ॥

तासां पतिसुतभ्रातृपितरोऽथ नराधिप ! ।

आगत्य भर्त्सयित्वा ता निन्युः स्वान्स्वान्गृहान्प्रति ॥१४ ॥

न्विष्य पुनस्तास्तु जग्मुः सर्वास्तदन्तिके । यदा तदा पौरजना वृत्तं तत्प्राहुरीश्वरे

ाऽपि तं समाहूयपप्रच्छ रहसिद्विजम् । केन मन्त्रेण भो विप्र मोहितास्ताःपुरस्त्रियः

तन्ममाऽऽचक्ष्व विप्रेन्द्र ! दास्यामि बहु ते धनम् ।

नो चन्निष्कासयामि त्वां निजराज्यान्न संशयः ॥ १७ ॥

नारद उवाच ।

ेति नृपतेर्वाक्यं नृपतिं स द्विजोत्तमः । उवाच सत्यं तस्याऽग्रे वचोरूपगुणार्णवः

द्विज उवाच ।

न्त्रो नौषधं राजन्विद्यते मयि भिक्षुके । किन्तुते नगरे सर्वा योषितोह्यजितेन्द्रियाः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

रूपं मम समालोक्य श्रुत्वा गीतध्वनिं तथा । स्मरवेगं सहन्ते न राजंस्तव
किं करोमि महाराज! कोऽपराधोऽस्ति मे विभो !! पुराकृतमिवोल्लङ्घ्यशासनं

नारद उवाच ।

उशीनरशिबेः राजन्नेवं कथयति द्विजे । सर्वे पौराः समेत्याऽथ प्रावदन्निति

पौराऊचुः ।

राजन्ननेन विप्रेण मोहिताः पौरयोषितः । गृहेषु नहि तिष्ठन्ति ह्यस्माभिरप
यद्ययं मोहनः स्त्रीणां नगरे वत्स्यति प्रभो !! तदा देशान्तराण्येव यास्यामः
गतोऽस्माकं वृषो देवो हव्यकव्यक्रियात्मकः ॥ २५ ॥
तमनुप्रस्थितात्क्षेत्राद्गौरियं पापिनामिव । विना तं शरणं यातं त्यक्तश्रीमि
अथैनमनुयास्यन्ति वासिताभिर्वृषं यथा । शून्यालये कथं लक्ष्मीर्यततोऽप्येवं
धर्मोऽर्थश्च गृहं चैतत्त्रयं स्त्रीवशगं यतः । कान्ताधर्मधनाधीना तयोर्नाशेन

नारद उवाच ।

एवं वदत्सु पौरेषु स्त्रियस्तेषां समागताः । राजान्तिक उपाविष्टाइत्यूचुस्ता

पौरस्त्रियऊचुः ।

कामं वामाकृतिं विप्रमेनं प्राप्य मनांसि नः । उल्लसन्ति दिवाधीशंकमलानीव
सकुचन्ति विना तेन कुमुदानि यथेन्दुना । आगच्छन्त मिलित्वैनंधारयामो
अवध्योऽयं वयं चाऽस्य किं करिष्यति भूपतिः ॥ ३० ॥

नारद उवाच ।

इत्युक्त्वातास्त्वरावत्यो जगृहुस्तं द्विजोत्तमम् । पश्यतांनिजभर्तृणां राज्ञश्च
ऊचुश्चैनं मनोनाथ ! गृहानागच्छ हृच्छयम् ।
शमयाऽऽशु विनाऽद्य त्वां स्थातुं नैव च शक्नुमः ॥ ३२ ॥
इत्याकर्ण्य वचस्तासां स विप्रः प्रत्युवाच ह ॥ ३३ ॥

विप्र उवाच ।

भवतीनामहं पुत्रो भवत्यो मातरो मम । गृहान्किमर्थमुत्सृज्य भवत्यः पर्यटेथ

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

राधयत नाथान्स्वान्यतो लोकद्वयं ध्रुवम् । आराधितेषु पतिषुविष्णुः सर्वसुरेश्वरः
न्नो भवति त्वत्र प्रसन्ने किमुदुर्लभम् । यास्त्रीस्वपतिमुत्सृज्य सेवतेऽन्यंसुखेच्छया
वादमवाप्नोति याति घोरां च दुर्गतिम् । उषित्वा तत्रकल्पान्तेयावत्सापतिवञ्चना
स्तस्माद्विनिर्गत्य स्थावरत्वं प्रपद्यते । तस्मादपि पशुत्वं सा लभते बहुजन्मसु ॥
ततो मुक्ता मनुष्यत्वे व्यङ्गा भवति तत्र सा ।
एवं पापगतिं ज्ञात्वा निवर्तध्वमतो जनात् ॥ ३९ ॥
ायास्यथ देहान्ते नरकं भृशदारुणम् । यदिच्छन्ति भवन्त्योमेसुखंतन्नेह लप्स्यथ
पापमेव हि युष्माकं यतोऽधःपतनं नृणाम् ॥ ४० ॥

नारद उवाच ।

वं वचनं तस्य दृष्ट्वा भर्तृसुखानि च । लज्जया नम्रमुख्यस्ता लता वातहता इव ॥
ां तु पुरनारीणां स्मराग्निर्भृशदारुणः । शशाम तस्य शीतेन वटोर्वचनवारिणा ॥
ाय चेलुः सर्वास्ता विनिन्दन्त्य इतिस्मरम् । ब्रह्मशक्रादिदेवानामपिमोहकरं नृप!

स्त्रियऊचुः ।

ोमं पापकर्माणं शीलदारुकुठारकम् । कामं वामदृशां प्रीत्यै धन्योयेन हतः स्मरः
किं वदेम जगत्पूज्यां रुक्मिणीं जठरे यया ।
धृतः प्रद्युम्ननाम्नाऽसौ राहुः स्त्रीशीलचन्द्रभुक् ॥ ४५ ॥
ाधम आयाति यदि नो दृष्टिगोचरम् । भूयो ध्यानकृतेशानदृगग्नौ तं क्षिपामहे॥
ऽयंजनितःपापो ह्यात्मारामेण विष्णुना । कृतःषोडशसाहस्रस्त्रीप्रियःका हि नःकथा
विनिन्द्य तं कामं तुष्टुवुस्तं द्विजोत्तमम् । शीलंस्वस्यचतासांच रक्षितंयेन भूपते!
ा साऽमुष्य जननी ययाऽयं ब्राह्मणोत्तमः । स्मरजिन्निर्मितोलोकेपरधर्मस्यरक्षकः
धिगस्तु नो राजलोकैर्हसिताः स्मरनिर्जिताः ।
याभिर्वाक्यमनोभ्यां च जनितं पापमुल्बणम् ॥ ५० ॥

नारद उवाच ।

षिचिन्तयन्त्यस्ताऐकमत्ययुताःस्त्रियः । जग्मुःस्वंस्वंगृहंसर्वाद्विजवाक्येनबोधिताः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अथ राजाऽपि काम्पिल्यस्तं द्विजं वस्त्रभूषणैः। सम्पूज्य प्रेषयामास सद्गृहे सं
अथागच्छति काले तु कारूषाधिपतिर्बली। काम्पिल्याधिपतिं सैन्यैर्नगरं रु
तयोर्युद्धमभूद्घोरं तेन युद्धे स घातितः। नगरं लुठितं सर्वं हताः शूराश्च सर्व
ताःस्त्रियः कालकूटं तु खादित्वा मरणंगताः। प्रायश्चित्तंतु न कृतं ताभिःपाप
येनपापेन ताःसर्वा भीषणाख्यस्यरक्षसः। राक्षस्यो नगरे जाता महाकाया
तत्र ता निहिताः सर्वाः पुरनार्यो हनूमता। यज्ञांश्चरिष्यतो जिष्णोस्तिष्ठता
पुनस्ता एव राक्षस्यो बभूवुर्मारवेऽध्वनि। क्षुधार्ताश्च तृषार्ताश्च दर्शनेन भ
एवं तेन तु पापेन वाङ्मनोविहितेन तु। ताभिर्जन्मद्वयं प्राप्तं राक्षसीयोनि
पापेन नाशितं तासां सनृपं नगरद्वयम्। अतएव न कर्त्तव्यं परकान्तनिषेव

नारीभिः पापभीताभिर्वाङ्मनोभ्यामपि प्रभो!।
रोगी जडो दरिद्रो वा मित्राभ्यां वर्जितोऽपि वा॥
न त्याज्यः स्वपतिः स्त्रीभिरिच्छन्तीभिस्तु सद्गतिम्॥ ६१॥
कथितमिदं मया मनोवचोभ्यां जनितमघं च यदन्यकान्तभक्त्या
फलमपि च यदेव लब्धमाभिस्तदपि शिवे! बहुविस्तरेण तुभ्यम्
इन्द्रप्रस्थगता हि चेयमनघा या द्वारका दृश्यते-
तास्तस्या जलबिन्दुदेहपतनात्पौरस्त्रियो रेमिरे॥
स्वर्गे चित्तवचोऽन्यकान्तभजनाज्जातं विमुच्योल्बणं-
क्रव्यादत्वमवाप्य देववनिताभावं सुराह्लाददम्॥ ६३

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे
माहात्म्ये द्वारकावर्णनं नाम षडधिकद्विशततमोऽध्यायः॥ २०६॥

---

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# सप्ताधिकद्विशततमोऽध्यायः

## सौभरियुधिष्ठिरसम्वादे नारदशिविवार्त्ताप्रसङ्गेन विमलब्राह्मणकथानकवर्णनम्

सौभरिरुवाच।

धर्मात्मजनिशम्यैतद्वचस्तस्यमहात्मनः। नारदस्यशिवीराजाप्रोवाचेदंविनीतवत् ॥१॥

शिविरुवाच।

तिष्ठन्त्योमरुमार्गे ता राक्षस्यो मुनिपुङ्गव!। एतस्याद्वारिकायास्तु लेभिरे सलिलंकुतः

नारद उवाच।

शृणु राजन्कथां दिव्यां पूतां पापप्रणाशिनीम्।

विमलाख्यस्य विप्रस्य हिमवद्द्रोणिवासिनः ॥ ३ ॥

एकस्तु हिमवद्द्रोण्यां विमलो नाम भूसुरः। देवर्षिपितृवह्नीनां पूजकोऽतिथिपूजकः॥

हरिपादार्च्चनरतो वेदवेदाङ्गधर्मवित्। वासुदेवगुणग्रामपुराणश्रुतिमानसः ॥ ५ ॥

वार्द्धके तस्य पुत्रोऽभूत्प्रसादाच्चक्रपाणिनः। चकार हरिदत्तेति नाम्ना तं जनकस्तदा॥

विधिवद्विदधेचाऽस्य क्षौरकर्मादिकंचतत्। गुरोः सकाशाज्जग्राह च्छन्दांसिहरिदत्तकः

अधीत्य विधिवद्वेदान्दत्त्वा च गुरुदक्षिणाम्। प्रवव्राज विरक्तः सन्समूलं चाश्रमद्वयम्

ज्ञात्वा तत्कर्म तन्माता व्यलपत्पुत्रवत्सला। स्नापयन्ती कुचद्वन्द्वं पुत्रविश्लेषजाश्रुभिः

मातोवाच।

मामनाथां परित्यज्य तात! यातोऽसि कुत्र वै। पितरं च जराग्रस्तं षट्पदोबल्वजाविव

वार्द्धके त्वं मया प्राप्तः श्रीपतेः पादसेवया। मां विहायाऽभजस्त्वंवै चरणंतस्य मुक्तये

अहं मूढा ध्रुवं तात! ध्रुवमाराध्य यद्धरिम्। अध्रुवं वाञ्छितवती भवन्तं सुखलब्धये॥

त्वंसुधीर्वत्स! सर्वार्थं यद्विष्णुंभजसेस्वयम्। अध्रुवंजगदेतद्वैमत्वाऽऽसीस्त्वमपिध्रुवम्

किंकरोमिक्वगच्छामि मायाज्ञानंछिनत्तिमे। सुफलोत्पादकं शस्त्रीरम्भामूलमिवोल्बणा

धन्यो दशरथो राजा यो मृतो रामशोकतः।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

धिङ्मां पुत्रस्य विश्लेषाद्धारयन्तीं स्वजीवितम् ॥ १७ ॥

आगच्छ दर्शनं देहि तात ! मां परितारय । वद वेदमयीं वाणीं पितुरग्रे गुणा

नारद उवाच ।

एवं विलप्य तन्माता राजन्सा पतिता भुवि । दलनाद्राहुदन्तानां लेखा चान्द्रमसी

अथाऽऽजगाम विप्रर्षिर्विमलो नृपसत्तम ।

दृष्ट्वा तां पतितां भूमौ किं किमित्यभ्यभाषत ॥ १८ ॥

कस्मादियं कीर्णकेशा व्यस्तवस्त्रविभूषणा । पतिता भुवि कल्याणं हरिदत्तस्

तस्या वयस्यास्ताः सर्वाः प्रोचुस्तं विमलं नृप ! ॥ १९ ॥

वयस्या ऊचुः ।

अधीत्य वेदांस्ते पुत्रो दत्वा च गुरुदक्षिणाम् । नारायणपरो भूत्वा प्राव्रजद्वनभिक

तस्यविश्लेषशोकेन पतितेयं धरातले ॥ २१ ॥

नारद उवाच ।

इत्याकर्ण्य वचस्तासां विमलो बुद्धिमत्तरः । प्राबोधयन्निजां भार्यामिति वागमृतै

विमल उवाच ।

उत्तिष्ठ जाये ! शृणु वाक्यमीरितं मया किमर्थं पतिता विषीदसि ।

धन्यः सुतस्ते य इमं विनश्वरं विज्ञाय भेजे हरिपादपल्लवम् ॥ २३ ॥

धन्या त्वमप्यस्य जनिप्रदायिनी यस्याः सुतस्ते हरिपादभागभूत् ।

संतारयिष्यत्यपि मामसंशयं कुलं कुलोत्थानपि पूरुषाञ्छुभे ! ॥ २४ ॥

क्व विश्वमेतच्च पतच्च चञ्चलं क्व सेवनं शाश्वतलोकदं हरेः ।

मत्वेति भेजुर्भरतादयो नृपा यथा हरिं साध्वि ! तथैव ते सुतः ॥ २५ ॥

दाराधनागारशरीरबान्धवा एते भवन्ति प्रतिजन्मदुःखदाः ।

तावन्न यावद्धरिपादपल्लवं भजेत धीरोऽखिलकामवर्जितः ॥ २६ ॥

नारद उवाच ।

एवं प्रबोधिता तेन धीरेण धरणीतलात् । उत्थाय निजभर्तारमब्रवीद्दीनया गिरा

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भार्योवाच ।

जानाम्यहं कान्त! यत्त्वया साधुभाषितम् । कुलधुर्यंनपश्यामियतस्तप्यामिवैभृशम्
सति महत्तीर्थे किं वा केशवसेवया । गृहएवाऽऽवयोर्मृत्युश्चेत्स्याल्लोकद्वयं तदा॥
त्रोत्पादने यत्नः कर्त्तव्यः खलु मानवैः । तारयन्ति पितॄन्पुत्रा यतः संसारवारिधेः
रं सर्वजन्तूनां धातारं पुत्रकाम्यया । भज वाञ्छसि चेत्पुत्रं कुलधुर्यं महामते ! ॥

नारद उवाच ।

कर्ण्य वचस्तस्याः प्रत्याह विमलो द्विजः । ब्रह्मक्षेत्रं प्रयागं हि याम्यहं पुत्रकाम्यया

इत्युक्त्वा चलितः सोऽथ हरिद्वारमगाद्द्विजः ।
स्नात्वा तत्राऽपि विधिवदिन्द्रप्रस्थमथाऽगमत् ॥ ३३ ॥

भिर्वासरैर्वीर सायंकालेऽखिलार्थदे । स्नात्वाभुक्त्वा निशायां स सुष्वापयमुनातटे
थे स्वपतस्तस्य विमलस्याऽन्तिके विधिः । हंसमारुह्य देवेशस्तीर्थैः सर्वैरनुद्रुतः ॥
त्योत्थापयामास विमलं पुत्रवाञ्छकम् । उवाच च सुरश्रेष्ठो वचनं मधुराक्षरम् ॥

ब्रह्मोवाच ।

समीहितं विप्र! त्वदीये मनसि स्थितम् । न तत्पूरयितुं कल्पो यतस्तत्कारणं शृणु
मेरुशिखरे मिलिताः सर्वदेवताः । तुष्टुवुर्मद्वमुखा माधवं कार्यसिद्धये ॥३८॥

स्तुतोऽस्मदादिविबुधैः कृपया भगवान्हरिः ।
प्रसन्नोऽभूत्तदा विष्णुर्वृणुध्वमिति चाऽब्रवीत् ॥ ३९ ॥
इत्युक्तास्तेन ते देवा यथाभिलषितं वरम् ।
श्रीपतेः प्राप्य ते जग्मुः सर्वे स्वं स्वं निकेतनम् ॥ ४० ॥

कमिति देवेश! देहि मे वरमुत्तमम् । प्रयागं नाम मे क्षेत्रं भवत्वखिलकामदम् ॥
तगुणं भूयाद्द्वितीयं क्षेत्रकं मम । इन्द्रप्रस्थगतं सम्यग्वृत्तं त्वत्तो मयाऽनघ !॥
कर्ण्य वचो मह्यं भगवानाह मां तदा । तथाऽस्त्विति पुनर्वाचमुवाच श्रूयतां वचः

भगवानुवाच ।

, खाण्डवारण्य इन्द्रप्रस्थाभिधं शुभम् । क्षेत्रंकलिन्दजातीरे मत्तुल्यास्तत्र येमृताः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विरिञ्चे! रचितातत्र स्वकीयाद्वारकापुरी। मया शतगुणाम्भोधिनीरस्थाया:
तामुल्लङ्घ्य नरो यस्तु तीर्थमन्यन्निषेवते। न तीर्थफलमाप्नोति स पुमान्
सर्वतीर्थोदितं पुण्यं शक्रतीर्थे लभेन्नरः। द्वारका च पुरी माया तीर्थमन्य
यो निमज्ज्याऽन्यतीर्थेषु कृत्वा च विविधां क्रियाम्।
अत्रैष्यति फलं तेभ्यः फलं प्राप्स्यति स ध्रुवम् ॥ ४८ ॥
इत्युक्त्वाऽन्तर्दधे विष्णुरहमप्यगमंस्वकम्। लोकंद्विजेन्द्रवैकुण्ठादधो भागे
प्रयागान्मामकात्क्षेत्रात्काशी शतगुणा स्मृता।
काश्याः शतगुणे?(णं) तीर्थं निगमोद्बोधकं तथा ॥ ५० ॥
तीर्थसप्तकमेतत्तु त्रयं तुल्यफलं स्मृतम्। एतत्त्रयमनुल्लङ्घ्य यो गच्छति सित
तस्याऽहं वाञ्छितं विप्र! ददामि खलुनान्यथा। केचिदाहुः सप्तपुरी समपुण्
अयोध्याद्याः शतं ताभ्य इन्द्रप्रस्थं प्रचक्षते। त्वमत्राऽऽगत्यविप्रेन्द्र सर्वका
तीर्थे श्रीद्वारकाख्ये हि कुरुस्नानं सुतेच्छया। यावन्ति सर्वतीर्थानि ब्रह्माण्ड
तेभ्योऽपरिमितं पुण्यं शतनामनि कीर्तिते। सुतं ते कुलधौरेयं तीर्थमेतत्
स्नानाच्च तव गोविन्दः प्रसन्नात्मा भविष्यति ॥ ५५ ॥

नारद उवाच।

इत्युक्त्वा देवदेवेशो ब्रह्मा तत्र तिरोदधे। विमलोऽपि तदा स्नात्वा देवार्च
इत्युवाच स धर्मात्मा द्वारके कृष्णवल्लभे !। सुतं वंशकरं देहि मह्यं भक्ता
इत्युक्ते तेन विप्रेण देववागभवत्तदा ॥ ५८ ॥

देववागुवाच।

पुत्रस्ते धर्मतत्त्वज्ञो वंशकर्त्ता भविष्यति। प्रसादादस्य तीर्थस्य सर्वतीर्थ
याहि गेहं विलम्बो मा सुकृतं तेन मज्जनम् ॥ ५९ ॥

नारद उवाच।

इत्याकर्ण्य स तांवाणीं विश्वस्तःपुत्रजन्मनि। चचाल जलमादाय द्वारकाया
मार्गे तस्य सखा विप्रो मलयाचलकेतनः। मिलितश्चलितो गेहं कृत्वा तीर्थ

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तस्मै स्ववृत्तमाख्यातं ब्रह्मसम्वादकात्मकम् ।
यद्भूतं द्वारकातीर्थे श्रुत्वा सोऽपि विसिष्मये ॥ ६२ ॥

वाच सच धर्मात्मा सखे! मम वचः श्रृणु । यावन्ति भारतेक्षेत्रे तीर्थानि विहितानिमे
वन्ति कर्तुमिच्छामित्वदुक्तं तीर्थमुत्तमम् । नीत्वामांदर्शयसखे! तत्तीर्थं सर्वकामदम्
खायस्ते वरा भूमावुपकुर्वन्ति ये सखीन् । न तैर्ननुसमो लोके पिता माताऽथवासुतः
र्द्धनंपुरुषं लोके सर्वेमुञ्चन्ति बान्धवाः । नमुञ्चन्ति सखायस्तु तस्य दुःखेन दुःखिताः
सारार्णवनिर्मग्नान्सखीनुद्धरते सखा । उपदिश्य हरेर्भक्तिमार्गं जन्मेन्धनानलम् ॥६७
तस्त्वं मे सखाश्रेष्ठ ! उपकारं विधेहि मे । दर्शयैतद्वरश्रेष्ठं तीर्थाख्यं द्वारकां द्विजः॥
ति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे कालिन्दीमाहात्म्ये
द्वारकावर्णनं नाम सप्ताधिकद्विशततमोऽध्यायः ॥ २०७ ॥

---

# अष्टाधिकद्विशततमोऽध्यायः

वेमलब्राह्मस्यस्वमित्रब्राह्मणेनसहइन्द्रप्रस्थस्थद्वारकातीर्थयात्राकरणंविमलमित्र-
ब्राह्मणेनप्रतिनिवृत्त्यराक्षसयोनिमापन्नानांनगरवधूनांद्वारकास्थजलेन-
स्वकमण्डलरक्षितेनसमुद्धारकरणम्

नारद उवाच ।

विमलस्तंद्विजंनीत्वा द्वारकायामिहाऽऽगतः । पुनस्तौसस्नतुर्धीरौ श्रीपतेर्भक्तिकाम्यया
भूयः खे मेघगम्भीरा वागासीदिति भूपते ! ॥ १ ॥

आकाशवागुवाच ।

शृणुतं द्विजशार्दूलौ! हरेस्तीर्थमिदं शुभम् । एतत्तीर्थप्रसादाद्वां विष्णुभक्तिर्भविष्यति॥
यया जहाति लोकोऽयमविद्यामोहमुल्बणम् ॥ २ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नारद उवाच ।

निशम्येति द्विजश्रेष्ठौ तां वाचमशरीरिणीम् । प्रसादोऽयं हरेरासीदित्यूचाते प

स्नात्वा तौ विधिवत्तत्र लब्ध्वा भक्तिं हरेः पराम् ।
चेलतुः प्रणिपत्येदं भाषमाणौ मिथस्तदा ॥ ४ ॥

द्विजावूचतुः ।

यथावयोर्हि संयोगः पथि जातोऽविचारितः । यथा गृहकलत्रादिसंयोगो भुवि
साम्प्रतं विरहोभावीयथानौ मार्गवर्तिनोः । तथादारसुतादीनां कालव्यालास्य
धन्यःस पुरुषोलोके यो दारसुतसङ्गमम् । विज्ञाय क्षणिकं नित्यं संश्रयेच्छ्रीप

नारद उवाच ।

स्मरणं करणीयम्मेदासोऽहंत्वत्पदाश्रयः । सन्देशःप्रेषणीयो मामित्युक्त्वा स्व
श्रृणुराजन्यथा तेन मित्रेण विमलस्य तु । मोक्षणं राक्षसीनां तु विहितं पथि
व्रजन्स ब्राह्मणःप्राप्तस्तं देशं जलवर्जितम् । यत्र ताःपापविप्लुष्टा राक्षस्यःक्षुत्तृ
अथ ताःपथिगच्छन्तं दूराद्दृष्ट्वाद्विजोत्तमम् । सुजलामत्रहस्तं तंमिथस्त्विति

राक्षस्यऊचुः ।

आयातिपथिकः कश्चिज्जलपात्रं करेदधत् । अस्माकंक्षुत्तृषोः शान्तिर्मनागपि

एनं सम्भक्षयिष्यामः पास्यामोऽस्य करे स्थितम् ।
पात्रं जलं वयं तृष्णाक्षुधार्ताः शतवर्षतः ॥ १३ ॥

नारद उवाच ।

काचिदाहेत्यहं पूर्वमस्योष्णं कालखण्डकम् ।
भक्षयित्वा ततो रक्तं पीत्वा यास्यामि जीवितम् ॥ १४ ॥

अन्या प्राह कियद्द्रव्यं विद्यतेऽस्यगजानने । मम व्याघ्राननायास्तु पानायाऽपि
अन्या वै रथचक्राख्या श्रूयतां वचनं मम । करिष्येकुण्डलमहं केनाऽन्त्रैरस्य
अन्याऽवददहं दन्तैरैकतः श्यामलीकृतैः । रमे षोडशभिर्द्यूतशालायां तद्विशा
इत्युक्त्वा ता मिथः सर्वास्तंद्विजंप्रतिदुद्रुवुः । विवृतास्या ललज्जिह्वाःप्रद्योतै

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

आयान्तीस्ताः समालोक्य ब्राह्मणो भयविह्वलः ।
आत्मानमभितश्चक्रे रक्षां वेदोदितां नृप ! ॥ १९ ॥
आगत्य स्थितादूरं राक्षस्यो भीमविक्रमाः । तेजसातस्यमन्त्रैश्च प्रत्यादिष्टानराधिप!
ऊचुश्च को भवानत्र कुतःप्राप्तोऽसितद्वद । त्वद्दर्शनान्मनोऽस्माकं प्रसादमधिगच्छति
त्वत्पादस्पर्शनात्किं नो न विप्र! भविताफलम् । अतोमूर्द्धसुनोदेहिस्वकीयं पादपङ्कजम्

नारद उवाच ।

इत्याकर्ण्य वचस्तासां जगाद हरिदत्तजः ॥ २३ ॥

द्विज उवाच ।

कृत्वा पवित्रतीर्थानि ब्राह्मणोऽहं समागतः । साम्प्रतं पुष्करंयामिभवतीभिःकिमिष्यते
यतस्तत्प्रार्थ्यतां दातुं शक्तो दास्यामि चेत्तदा ॥ २४ ॥

राक्षस्यऊचुः ।

येषु तीर्थेषु विप्रेन्द्र! त्वया स्नातंवदस्व नः । तानिसर्वाणिपुण्यानिमोचयाऽतःकुजन्मनः
अस्मानतितरां तृष्णाक्षुद्भ्यां दारुणदुःखितान् (ः ?) ॥ २५ ॥

ब्राह्मण उवाच ।

अवन्तीमाश्रमात्पूर्वमहं हरिपुरीमितः । गतोऽहं द्वारकां तस्मात्स्नात्वा सोमोद्भवाजले
ततः प्राप्तः प्रभासाख्यं तीर्थं नीरधितीरगम् । तस्मात्सेतुनिबन्धेऽहं स्नातःपरमपावने॥
तस्मादहं महापुण्यां किष्किन्धां समुपागतः । हतो यत्र तु रामेण वालीकपिगणेश्वरः
तस्मान्मठं सरस्वत्या नर्मदातीरसंस्थितम् । समागतोऽहं यत्राऽस्तिभारतीसर्वसेविता
ततोऽहमविशंवेणीं तांनत्वादक्षिणापथे । शिवकाञ्चीविष्णुकाञ्च्यौ दृष्टे तत्रमयापुरौ
ययोर्मरणतो जन्तुःशिवो विष्णुश्चजायते । ततोऽहमुत्कलं प्राप्तो यत्राऽस्तिहरिरीश्वरः
चतुर्वर्गप्रदः साक्षाद्भक्तानामपि काङ्क्षितम् । तमर्चयित्वा विधिवद्भक्षयित्वा निवेदितम्
प्रसादभूतं तस्यैव गङ्गासागरसङ्गमम् । तत्र देवानृषीन्पितॄंस्तर्पयित्वा यथाविधि ॥
यत्रगङ्गाशतमुखी जाता तत्राऽहमागमम् । ततोगयामुपागत्य पिण्डान्दत्त्वायथाविधि
पितृभ्यस्तुलसीपुष्पचन्दनोदकपूजिताम् । कोशलां शरयूवारिकर्णधारनभस्वता ॥३५

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पवित्रिताखिलजनां स्पर्शनेनाऽहमागमम् । तत्राऽस्तिगोप्रताराख्यं तीर्थं त्रि
तत्र स्नानादिकं कर्म निशाचर्यः! कृतं मया । ततः काशीमहं प्राप्तो राजधानी
नत्वा विश्वेश्वरंदेवं बिन्दुमाधवमेव च । स्नातं मणिकर्णिकायां ज्ञानवाप्यां
त्रिरात्रमुषितस्तत्र प्रयागं पुनरागमम् । पौषशुक्लचतुर्दश्यां साक्षाद्यत्र प्रजाप
एकस्मिन्माघमासे तु स्नानं कृत्वाऽरुणोदये । पुनस्तस्मात्समायाते नैमिषं

यत्र तीर्थानि सर्वाणि वसन्ति च स्वमायया ।
ततोऽहं मथुरां प्राप्तो यत्र विश्रान्तिसंज्ञकम् ॥ ४१ ॥

तीर्थं तत्सन्निधौ पुण्यमसिकुण्डाख्यमुत्तमम् । कृष्णगङ्गाध्रुवाक्रूरकेशिकाली
यमुनाऽस्ति महापुण्यायत्र सर्वार्थदायिनी । उभयोःकूलयोस्तस्या वनानि द्वा

राजमानानि खेचर्यः समस्तार्थकराणि च ।
सन्ति तेषु नरः स्नात्वा पीत्वा भूयो न जायते ॥ ४४ ॥

ततोऽहमागमं पुण्यं हस्तिनापुरमुत्तमम् । यत्र श्रीपतिपादाब्जजाता गङ्गा स
ततो नारायणस्थानं हिमवद्भूमिसंस्थितम् । आगत्य माधवं दृष्ट्वा केदारम
तत्र सम्पूज्य विश्वेशं पीत्वाऽहं सोदकं पुनः । हरिद्वारं महापुण्यमागमं जा

तत्र स्नात्वा पितॄन्देवानृषीन्सन्तर्प्य चाऽप्यहम् ।
समागतः कुरुक्षेत्रे यत्र प्राची सरस्वती ॥ ४८ ॥

तत्राऽप्यहं क्रियाः सर्वाः कृतवान्नियतेन्द्रियः । अर्चयित्वाचपादाब्जंश्रीपतेःपु
चलितो मार्गमध्येतु विमलोनाममेसखा । मिलितो मां व्रजन्तोहमिन्द्रप्रस्था
नीतोऽहं तेन राक्षस्यः! पुनस्तत्र द्विजन्मना । तीर्थोत्तमे परावृत्य शक्रप्रस्थे

तत्राऽस्ति द्वारका पुण्या निर्मिता विष्णुना स्वयम् ।
तत्राऽवलोकितः साक्षाद्विष्णुर्वाक्यान्न रूपतः ॥ ५२ ॥

तत्राऽहं सचसंस्नातौ विष्णुभक्तिप्रलब्धये । दत्ता सा विष्णुना मह्यंतस्मैचक
श्रुत्वा(ता)तत्र हरेर्वाणीन रूपंवै विलोकितम् । भक्तिर्लब्धाततःस्थानाद्यमहंपु
तस्य तीर्थाधिपस्येदं द्वारकाख्यस्यवैजलम् । कमण्डलुगतं पुण्यं निशाचर्यो

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वतीभिरहं पृष्टो यत्तदाख्यातमेव मे। दृष्ट्वा वो दुर्दशामेतां कृपा मे जायते हृदि॥
च्यतां किं करोम्यद्यभवतीनांवशोह्यहम्। ज्ञानं भवतुयुष्माकमितिताःसिषिचेऽम्भसा
स्तज्जलाभिमर्शात्तु सर्वेषांजन्मकर्मणाम्। संस्मृत्यतत्यजुश्चैव राक्षसं देहमुल्वणम्
ासाद्य देवतादेहं विमानशतमागतम्। आरुह्याऽप्सरसो भूत्वा ताः प्रणेमुर्द्विजन्मने॥
चुश्च भो द्विजश्रेष्ठ! द्वारकाजलसंगमात्। राक्षसत्वाद्वयं मुक्ता गच्छामस्त्रिदशालयम्
न्द्रप्रस्थान्तरावर्तिन्येषा या द्वारका द्विज!। नातः परतरं लोकेऽन्यत्तीर्थमखिलार्थदम्

नारद उवाच।

त्युक्त्वा ताः समारूढा विमानेषु महीपते!। जग्मुः प्राचीं दिशंतेनदत्ताज्ञावैद्विजन्मना
मुनातीरवर्तिन्या द्वारकाया महीपते!। शृण्वन्माहात्म्यमेतस्या नरः पापैः प्रमुच्यते॥
दज्ञानां ब्राह्मणानां शतस्येच्छासुभोजनात्। यत्फलं श्रवणादेतन्महिम्नस्तत्प्रजायते॥

गोविन्दाराधने सम्यग्यथा वै सौख्यमिन्द्रिये।
माहात्म्यश्रवणादस्या द्वारकायास्तथा नृप!॥ ६५॥

सूर्येन्दुग्रहणे दानात्सुवर्णपलविंशतेः। यत्फलं शृण्वतैतस्य माहात्म्यं तदवाप्यते॥
वेमलस्य सुतप्राप्तिं श्रुत्वा सुत! इहाऽऽप्यते। तत्सख्युर्भक्तिलाभंच लभ्यतेभक्तिरुत्तमा
ाक्षसीनां विमोक्षं यः शृणोति श्रद्धयान्वितः। स यातिताइवश्रेष्ठंविमानेन सुरालयम्

नृपवर! महिमा ते वर्णितो द्वारकायास्त्रिभुवनजनसेव्ये शक्रतीर्थे स्थितायाः
किमपरमतिपुण्यं वर्णयामि त्वदग्रे कथय नहि विधेयः श्रेयसि स्वे विलम्बः

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे कालिन्दी-
माहात्म्ये द्वारकाख्यानं नामाष्टाधिकद्विशततमोऽध्यायः॥ २०८॥

---

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

## नवाधिकद्विशततमोऽध्यायः

अयोध्यामाहात्म्यप्रसङ्गे राजचौरनापितेनविप्रमुकुन्दस्यतस्यगृहेचौर्यं
वधकरणम् तन्मातृवधूबान्धवैर्विलापकरणं तेभ्योवेदायनतपस्वि
दृश्यजगतोमिथ्यात्वम्प्रतिपाद्यतत्त्वज्ञानप्रदानम्

युधिष्ठिर उवाच ।

सौभरे! कस्य तीर्थस्य माहात्म्यं नारदोमुनिः । वर्णयामासशिवये शक्रतीर्थं
अतस्तु मम शुश्रूषा जायते मुनिपुङ्गव ! । शिविनारदसंवादं ब्रूहि पुण्यं नत

सौभरिरुवाच ।

धर्मराज! शिवी राजा श्रुत्वा नारदवर्णितम् । द्वारकायास्तुमाहात्म्यंतमेवाऽपृच्छा

शिबिरुवाच ।

ब्रह्माङ्गज सुरश्रेष्ठ ! श्रुतं माहात्म्यमुत्तमम् । इन्द्रप्रस्थतटस्थाया द्वारकाया म

अयोध्यायां यदि मुने ! किञ्चिदस्ति पवित्रकम् ।
चरितं मम तद्ब्रूहि पिपासोस्त्वद्वचोऽमृतम् ॥ ५ ॥

नारद उवाच ।

अस्त्यत्र चरितं पुण्यं महापातकनाशनम् । नापितस्याऽघयुक्तस्यमुकुन्दस्य
ब्रह्महा नापितोराजन्नपमृत्युं गतो द्विजः । प्रसादात्कोशलायास्तु द्वावपि स्व
चन्द्रभागानदीतीरे पुरी सा च निवेशिता । तत्राऽस्तिनापितःपापश्चण्डकोना
चौर्येण परवित्तानामपहर्ता स पापकृत् । घातकः शस्त्रपाशाद्यैः पान्थानामव
द्यूतमद्यरतो नित्यं परस्त्रीलम्पटेन्द्रियः । भित्त्वा देवालये भित्तिमिष्टिकाश्चाव
स तस्योद्वसिताभ्यासे ब्राह्मणोवसतिश्रिया । संयुक्तो ब्रह्मकर्मज्ञो मुकुन्दो ना

स एकदा समालिङ्ग्य तरुणीमात्मयोषितम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सुष्वाप सुरतायासश्लथाङ्गो निशि निर्भयम् ॥ १२ ॥

चण्डको निशीथेऽथ प्रविवेशतदालयम् । मुकुन्दस्य समाहर्तुंहर्म्ये भूषादिवस्तु यत्

उपकार्या बहिःस्थं यत्तद्गृहीत्वाऽगमद्गृहम् ।

स्वकीयं च पुनस्तस्य ब्राह्मणस्याऽविशद्गृहम् ॥ १४ ॥

टोत्पाटनार्थी तु रत्नेनमहताऽभवत् । लोहयन्त्रावरुद्धश्च स नोद्घाटयितुं क्षमः ॥

रुरोह तदा तस्य ब्राह्मणस्याऽविशद्गृहम् । प्रविश्यतद्गृहंक्रूरःकृपाणंपाणिनादधत्

लिकां स पापिष्ठो नापितस्तस्करक्रियः । तत्राऽपश्यत्प्रसुप्तौतौदम्पतीरतिविह्वलौ

ाम च तयोः पार्श्वे हेमभूषाजिघृक्षया । शय्याया एकदेशस्थं गृहीत्वा भूषणं बहु॥

तदङ्गतो हस्तं प्रससार स नापितः । तस्करस्पर्शतो विप्रो जजागार भयातुरः ॥

किञ्चिदूचे संमील्य नेत्रे तत्रैव संस्थितः । यदा स तस्करःपापो गृहीत्वादेहभूषणम्

लेतः स तदा तेन दोर्भ्यामात्तो द्विजेन हि । पश्चादागत्यवित्तस्यसहमानेन संक्षयम्

ऽपि नृपचौरेण कृपाणेन हतो द्विजः । विदीर्णोदरमध्यस्तु तातमातरितीरयन् ॥

वदन्तः किंकिमित्येतत्पार्श्वं तस्याऽऽययुर्जनाः ।

ददृशुस्तं निःसृतान्त्रं रुधिरालिप्तविग्रहम् ॥ २३ ॥

च्छुश्च मुकुन्देदं कर्म केनेदृशं कृतम् । सोऽपि कृच्छ्रेणमहता प्रोवाचेदंस्वबान्धवान्

मुकुन्द उवाच ।

व परिपाकोऽयं पूर्वोपार्जितकर्मणाम् । न कश्चित्सुखदुःखस्यदाताकस्याऽपिदेहिनः

धर्मोऽधर्मश्च तावेव तेषां मूलं पुरा कृतौ ॥ २५ ॥

नारद उवाच ।

युक्त्वा स तु भूयस्या पीडयागाढपीडितः । तत्याज भूपते!प्राणान्पश्यतां सुहृदां तदा

ललाप तदा तस्य माताद्विजसतीनृप !। निधायतच्छिरःस्वाङ्केकुण्डलाभ्यामलङ्कृतम्

मातोवाच ।

हताऽस्मित्वया वत्स! दशामन्त्यांचगच्छता । दिनश्रीरिवसूर्येणपश्चिमाचललम्बिना

चन्दनालेपयोग्यं तव महामते ! । मां मज्जयार्तिशोकाब्धौ तदिदं धूलिधूसरम् ॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ताम्बूलचर्वणेऽभ्यासो यस्त्वया विहितस्त्वसौ। स एवरुधिरोद्गारमिश्रेणा
तव ये लोचने पूर्वं जिग्यतुः कमलश्रियम्। ते एव साम्प्रतं जाते तिमिरो
उत्तिष्ठोत्तिष्ठ वत्स!त्वं शिष्यानध्यापयात्मनः। यथावद्वैश्वदेवान्ते पूजया
द्वारि स्थिता वयस्यास्ते त्वाह्वयन्ति प्रयाहि तान्।
दातव्यं यद्ददस्तेभ्यो ग्रहीतव्यं गृहाण तत् ॥ ३३ ॥
हाहा देहि प्रतिवचः पतामि तव पादयोः। नोचेदहं विमोक्ष्यामि प्राणांस्त

नारद उवाच।

इत्युक्त्वा मूर्च्छितातस्य मुकुन्दस्यप्रसूस्तदा। भार्यातस्यशिरःस्वाङ्केविधा

भार्योवाच।

नाथ! भो गुणपाथोधे मदीयं वचनं शृणु। रुष्टोऽसि चेत्समं मात्राकुतोवद
न कदाचित्त्वया साधो मौनमीदृक्कृतंपुरा। केनाऽपि लघुनाभ्रात्रा ह्यपमा
शुकोऽयं पञ्जरस्थस्ते नान्नमत्ति त्वया विना।
भोजयैनंसुसिद्धान्नंकलवाचंचसारिकाम् ॥ ३८ ॥
रामरामहरेकृष्णविष्णोनामावलीमिति। पाठयोत्तिष्ठ निपुणौ द्वावेतौ सा
अपराद्धं मया किं ते यत्त्वं मांनाभिभाषसे। यत्त्वया मे धनं दत्तं तन्मयास
अर्पितं यत्त्वया नाथ निजतेजो ममोदरे। सूतिकालमहं तस्य नाऽपेक्षे त्व

नारद उवाच।

एवं विलप्य सा तस्य मुकुन्दस्य प्रिया तदा। न रुरोद स्वभर्तारमनुगन्तु
अथ तस्य मुकुन्दस्य गुरुर्वेदायनाभिधः। संन्यासी पर्यटन्पृथ्वीं तस्य वेश्म
मुकुन्दः क्व गतो माता भार्यातस्य च धीमतः। न दृश्यते तदा तेन पृष्टेत्या

चेटिकोवाच।

स्वामिन्केनाऽपिचौरेण मम स्वामी हतो निशि। स्नुषायाभूषणंनीतंदुकूला
स मृतः पतितो भूमौ हर्म्यस्योपरितिष्ठति। तस्य माता वधूश्चैव भ्रातर
विलपन्ति महाशोकसागरे पतिता गुरो! ॥ ४६ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नारद उवाच ।

[इत]याकर्ण्य परिव्राट् स वचनं चेटिकोदितम् । आरुह्य हर्म्यमद्राक्षीदात्मान्तेवासिनंमृतम्
[त]दन्तिके समालोक्य बन्धूनाक्रन्दतो भृशम् । उद्धरिष्यन्निदंधीरःशोकाब्धेस्तानुवाचह

वेदायन उवाच ।

[क]मुद्दिश्य वाऽऽत्मानं शोकोऽयंक्रियतेत्वया । मातः कथयसत्यंमेनोभयोर्युज्यतेहिसः
[दे]होऽयं भूतसंघातः प्रारब्धैः समुपार्जितः । तेषु क्षीणेषु भूतानां पृथक्त्वमुपजायते ॥
[ए]कीभवनं तेषां कर्मभिर्जन्म तन्नृणाम् । तन्नाशे तत्पृथक्त्वं च तदेव मरणं स्मृतम्
[ऐ]क्यं पृथक्त्वं भूतानां कर्माधीने यतो बुधैः । अतो देहेन कर्तव्यः शोकः परवशे जडे
[अ]नाद्यविद्यया जीवे दृष्टे मरणजन्मनी । देहस्याऽऽत्मन्यहंबुद्ध्या मन्यते नहि तत्र ते
[नि]वृत्तौ सतद्ब्रह्म यच्छुद्धं रूपवर्जितम् । स्वप्रकाशं जगद्धेतु हेत्वतीतं गुणोर्जितम्
[स]त्यं विज्ञानमानन्दस्वभासाभासयज्जगत् । न जिह्वालेढितच्चक्षुर्नपश्यति शृणोति न॥

श्रुतिर्जिघ्रति न घ्राणं नत्वक्स्पृशति कर्हिचित् ।
अतीतमिन्द्रियेभ्यस्तत्स्वप्रकाशकमात्मदृक् ॥ ५८ ॥

[अ]विषयं मनो दूरं बुद्धेरपि न गोचरम् । तस्याऽवतारूपाणि शुद्धसत्त्वानि देवताः ॥
[म]न्ते तन्न जानन्ति रूपं यत्सदसत्परम् । एवं स्वरूपमात्मायस्तं समुद्दिश्यकःकुधीः

क्रोधं कुर्याद्यतस्तस्य नोत्पत्तिर्नैव संक्षयः ॥ ५६ ॥

[इ]ति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे कालिन्दी-
माहात्म्ये नवाधिकद्विशततमोऽध्यायः ॥ २०६ ॥

---

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# दशाधिकद्विशततमोऽध्यायः

## पटसम्पुटितमुकुन्दास्थ्नांश्वद्वारेन्द्रप्रस्थस्थितकोशलपुर्यांपातनंततस्त...
## गन्तुंसज्जस्यमुकुन्दस्यमृत्योरनन्तरंस्वगुरवेवातायनाय-
## गतिवर्णनं तस्यस्वर्गतिप्राप्तिश्च

नारद उवाच ।

एवं प्रबोध्य तान्सर्वान्वचोभिः पारमार्थिकैः ।
स हंसः कारयामास क्रियास्तस्याऽऽत्मसंभवाः ॥ १ ॥

अन्तर्वत्नी मुकुन्दस्य निर्बन्धं कुर्वती वधूः । अनुगन्तुं स्वभर्तारं विदुषा तेन
तस्याऽस्थीनि समादाय तेन संन्यासिनासमम् । तद्भ्रातापययौगङ्गाजलेषु
विप्रसंन्यासिनौ तौ हि कतिभिर्वासरैर्नृप !। सार्थलोकवशात्प्राप्ताविन्द्रप्रस्थे
इन्द्रप्रस्थान्तरावर्तिन्येषा या कोशलानृप !। अत्र सुप्तौ निशायां तौ यमुना
आत्मनोरुभयोर्मध्ये न्यस्याऽस्थिपटसम्पुटम् । मार्गखेदपरिक्रान्तौदशांसौ
निशीथेऽथ प्रसुप्तेषु सार्थलोकेषु कश्चन । एकः श्वा तत्र सम्प्राप्तः पक्वान्नादि
बभ्राम सर्वशिबिरे जिघ्रन्पाकस्थलीं मुहुः । भाजनानि लिहन्मूर्ध्नि कचदण्ड
केनचित्ताडितो मूर्ध्नि निःशब्दंविद्रुतस्ततः । क्षतिकर्तुमशक्तस्तुस्त्रीजितःस्व
यत्रावकण्डितः स श्वादण्डग्रावेष्टकादिभिः । पुनर्विवेश तत्रैव सोऽल्पपात्र
भोगेच्छया यथा वेश्याः स्नेहवान्निर्द्धनो जनः । भ्रमन्नेवंसचाऽत्रापिप्रसुप्तौ
सारमेयस्तयोर्मध्याज्जहे स पटसम्पुटम् । नीत्वा स कियतीं भूमिं दन्तैस्त

विदार्याऽस्थीनि तत्स्थानि निर्मांसान्यवलोक्य सः ।
एतस्याः कोशलायास्तु जलमध्ये समाक्षिपत् ॥ १३ ॥

क्षिप्तमात्रेषु तेनाऽस्थिष्वेतदम्बुनि भूपते !। दिव्यं विमानमास्थाय मुकुन्दो

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ा गुर्वनुजौ सुप्तौ शनैः प्राबोधयत्तदा । उवाच च नमस्कृत्य गुरुं दिव्याकृतिर्नृप !॥

मुकुन्द उवाच ।

ायन गुरो तुभ्यंनम आशीस्तवाऽनुज !। प्रसादाद्वां ममाऽस्थीनितीर्थेऽत्रपातितानिवै
ममृत्युमहं गत्वा निरयं प्राप्य तत्फलम् । एतत्तीर्थप्रसादेन दैवी लब्धा मया गतिः
ं गुरुं तीर्थभूतं तु नमस्कर्तुमिहाऽऽगतः । अहं गच्छन्विमानेनदिव्येनत्रिदशालयम्
स्कृतो भवानेतत्तीर्थं चाऽयं सहोदरः । हृष्टो मामनुजानीहि यामि स्वर्गं सुखोदयम्

नारद उवाच ।

त्वैवं वचनं तस्य मुकुन्दस्य गुरुस्तदा । वेदायनो विमानस्थं तमूचे गतविस्मयः ॥

वेदायन उवाच ।

मुकुन्दाऽऽख्याहि मे सत्यं लब्ध्वा यन्मरणं भवान् ।
कस्मिँल्लोके गतस्तात ! यतो यात्यधुना दिवम् ॥२१ ॥

वृत्तं तत्र ते तात तस्य लोकस्यकोऽधिपः । कीदृशीचप्रजाकीदृग्धर्मस्तत्राऽखिलंवद

मुकुन्द उवाच ।

थयामि गुरो तुभ्यं यद्वृत्तं मरणादनु । तीर्थस्याऽस्य प्रसादेन स्मृतिर्मे जायतेऽधुना
दाऽऽहं तेन निहतश्चण्डकेन दुरात्मना । नापितेन तदाऽऽजग्मुर्यमभृत्याः सुदारुणाः
ङ्गाक्षा रक्तकेशाश्च श्यामदेहनखाधराः । वामनादीर्घचरणा ह्रस्वनासाश्च दन्तुराः ॥
यतां नीयतामेष धर्मराजस्य शासनात् । पुरीं संयमनीमेवमूचिरे ते परस्परम् ॥
त्युक्त्वा यातनादेहे मां निवेश्य महारुषा । निबध्यदारुणैः पाशैर्जघ्नुर्लोहस्य मुद्गरैः॥
रहं नीयमानस्तु मार्गेह्युत्तप्तवालुके । अरुदं भृशदुःखार्तस्ताडितोऽहं पुनश्च तैः ॥
प्रोचुश्च ते भ्रुवं कृत्वा निर्भर्त्स्यैति च मां बहु ॥ २८ ॥

यमदूताऊचुः ।

या लुप्तो गुरुर्यस्माद्वदता ब्रह्म निश्चलम् । किं करोषि यमस्याऽग्रेद्रष्टव्यंदारुणंमुखम्
स्य पापस्य भोक्तव्यं दारुणस्यफलं त्वया । तेनैव पाप्मनापापिन्नपमृत्युं गतोभवान्
त्युक्त्वा मां मुहूर्तेन बहुयोजनसंस्थिताम् । पुरीं संयमनीं निन्युर्यत्र राजा स्वयंयमः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रणम्य धर्मराजं ते स्थापयित्वा तु मां पुरः ।

आनीतोऽयं द्विजः पाप इति मां ते न्यवेदयन् ॥ ३२ ॥

दृष्ट्वा मां धर्मराजोऽथ प्रोवाच स्वसभासदः ॥ ३३ ॥

यम उवाच ।

भोःसभ्यामामकींवाचंशृण्वन्तुसुसमाहिताः । यदाऽहंब्रह्मणाह्यस्मिन्नधिकारे

तदा मामित्युवाचाऽसौ ब्रह्मा लोकपितामहः ॥ ३४ ॥

ब्रह्मोवाच ।

अधर्मिणां नराणां त्वं शास्ता संयमनीपतिः । यथापराधमाधत्स्व दण्डंचण्ड

पित्रोरपोषको यस्तु समर्थो गुरुध्रुक्तु यः । एतौ महापातकिनौ निपात्यौ

सर्वेषु यावद्वर्षाणां प्रत्येकमयुतं भवेत् । एतयोर्न त्वया कार्या दया जातु क

यम उवाच ।

इत्यहं ब्रह्मणोवाक्यात्स्वगुरुद्रुहिमानवे । न करोमि क्रियां सभ्यास्तथा पित्रो

ब्राह्मणोऽयं गुरुद्रोहीतद्‌द्रोहादपमृत्युताम् । प्राप्तो मच्छासनाद्भृत्यैरानीतोऽ

भो भृत्याःप्रथमंघोरेरौरवेवत्सरायुते । पात्यतां च पुनस्तस्मान्निःसार्यान्यत्र

तावन्तमेव कालं वै पापोऽयं गुरुलोपकः । नरकेष्विति सर्वेषु यथाकालं

मुकुन्द उवाच ।

वेदायनगुरोस्वामिन्भृत्यास्तेयमशासनात् । नीत्वामांरौरवेघोरैपाशैर्बद्ध्वा

तत्राऽहं तां व्यथां गुर्वीं लब्धवानतिदारुणाम् ।

यथैकोऽपि क्षणस्तात नीतो मे युगवत्तदा ॥ ४३ ॥

त्रिंशद्दिनानि तन्नीतं दुःखं मे तत्र तिष्ठता । एकत्रिंशत्तमे ह्यस्मिन्दिनेऽहं निर्ग

पतितेष्वस्थिखण्डेषु तीर्थेऽस्मिन्नुत्तमोत्तमे । गुरुलोपोद्भवं पापं सद्यो नष्टं मम

तीर्थस्याऽस्य प्रसादेनलब्धाचस्वर्गतिर्मया । सुखं स्वर्गेनिवत्स्यामि यावदिन्द्रा

यमस्य नगरे तस्मिन्याः प्रजा निवसन्तिवै । पापिनांभयदायिन्योधर्मिणांता

सिंहास्या गजकोलास्या महादंष्ट्रोन्नतोदरीः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विडालास्याः पिङ्गकेश्यो भामिन्यो दीर्घपत्कराः ॥ ४८ ॥

...स्याऽस्य प्रसादेन निष्पापोऽहंयदाऽभवम् । तदामयाप्रजाद्दृष्टादिव्यरूपा यमालये

सर्वास्ताः सत्यवादिन्यो विनयाचारसञ्चिताः ।

दिव्याभरणधारिण्यो दिव्याम्बरविभूषिताः ॥ ५० ॥

...तत्कथितं तात यत्पृष्टोऽहं त्वयाऽनघ !। अनुजानीहि मां गन्तुममरेशपुरीं प्रति ॥

नारद उवाच ।

...ाकर्ण्य स संन्यासी स्वशिष्योक्तंवचस्तदा । भूयःपप्रच्छधर्मात्मामुकुन्दंतंद्विजंनृप

वेदायन उवाच ।

...यावधि गुरुस्नेहं मत्तोऽधीतं त्वयाऽखिलम् । शब्दशास्त्रसमेतश्चवेदस्तु सपदक्रमः

...हिता मम शुश्रूषा भावेन भवतोत्तमा । त्वयि सन्ति सतांसाधोगुणाः शमदमादयः

...लोपकृतं पापं कथं ते समजायत । एतदाख्याहि मे तात यथा जानामि तत्त्वतः ॥

मुकुन्द उवाच ।

...मोपवीतकन्यानां दातारो निगमस्य च । यज्ञोपवीतदातुश्च नाज्ञाभङ्गः कृतो मया

...भ्रूश्वशुरयोः सेवा भृत्येनेव कृता मया । तवाऽपि शास्त्रदातुश्च नाज्ञाभङ्गः कृतो मया

...धा यः कुलाचार्यो वेदवेदाङ्गपारगः । तस्याऽपराद्धं किञ्चिन्मे तत्र त्वं श्रोतुमर्हसि

...स्माकं कुले पुत्रो जायते धर्मकोविदः । तदा पुरोधसे धेनुमेकांवातस्यदक्षिणाम्

...या संछिद्यतेनालमितिवंशस्यनःस्थितिः । पुरा ममैवपुत्रे तु जातमात्रे शुभेऽहनि ॥

...क्रिया मया तात! न कृता मूढबुद्धिना । तस्याश्चाकरणेनैव गुरुलोपकरोऽभवम् ॥

...वेदितमिदं सर्वं गुरुलोपाद्यथा मम । पापमासीदनुज्ञां मे देहि यामि सुरालयम् ॥

वेदायन उवाच ।

...प्रस्थान्तरावर्तिन्येषा या कोशला शुभा । स्मृतिरस्याः प्रसादेन दृश्यते पूर्वजन्मनः॥

...पुण्येनतीर्थेऽस्मिन्नस्थीनिपतितानिते। मुकुन्दाऽऽख्याहिचैतस्यस्मृतिरस्तितवाऽनघ

मुकुन्द उवाच ।

...स्तु ब्राह्मणःकश्चित्सायं मद्गृहमागतः । तस्मैस्थानं मयादत्तं भोजनंचयथाविधि

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सोऽपिभुक्त्वा यथा कामं सुष्वापशयने शुभे । निशीथेतस्यसर्वाङ्गेज्वरोऽभू
तेन पीडितसर्वाङ्गो निद्रांलेभे न स द्विजः । प्रभात एव तत्याज प्राणान्मृत्यु
तस्य दाहादिकर्माणि विहितानि मया गुरो ! ।
तदस्थीनि च गङ्गायां पातितानि विधानतः ॥ ६८ ॥
तेनपुण्येन मेऽस्थीनि पतितानि शिवप्रदे । तीर्थेऽस्मिन्कोशलेनाम्नि

नारद उवाच ।

स्वचरितमितिराजन्स द्विजः प्रोच्य सद्यः सुरसुभगशरीरो द्यां
इदमकथि मया ते तस्करात्प्राप्यमृत्युं व्यलभत दिवमेतत्तीर्थरा

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे
माहात्म्ये मुकुन्दोपाख्यानं नाम दशाधिकद्विशततमोऽध्यायः ॥ २१० ॥

---

# एकादशाधिकद्विशततमोऽध्यायः

पौराणामनुरोधेनराज्ञामुकुन्दहत्यापराधेचण्डनापितस्यशिरःकर्त्तनाय
मर्यादाबहिःसचिवाथाऽऽज्ञाकरणंयापिनोऽस्यसर्पगतिवर्णनं
ब्राह्मणस्यस्वपित्रोरस्थ्नांमञ्जूषायांसर्पस्यप्रवेशःपश्चादयो-
ध्यायांतीर्थयात्रिभिःस्वयष्टिकाप्रहारेणसर्पमारणं-
तीर्थेमरणात्पापस्यास्यस्वर्गतिवर्णनम्

नारद उवाच ।

शिवे! तव पुरः सर्वं मुकुन्दाख्यानमुत्तमम् । कथितं चण्डकस्यापि नापितस्य
यस्मिन्दिने मुकुन्दस्तु ब्राह्मणस्तेनघातितः । चण्डकेन तदा राजंस्तद्वृत्तं
श्रुत्वा तैस्तन्नृपस्याऽग्रे निवेदितमितिस्फुटम् ॥ २ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नागराऊचुः ।

डकेन हतो राजन्मुकुन्दो ब्राह्मणोत्तमः । नीतं च तद्धनंभूरि यद्युक्तं तद्विधीयताम्

त्वमस्माकं प्रजानां हि रक्षकः शासकोऽसताम् ॥ ४ ॥

नारद उवाच ।

याकर्ण्य स भूपालो मन्त्रिणंपार्श्ववर्तिनम् । उवाच कोपरक्ताक्षःकिमेभिःकथ्यतेश्रृणु

घ्रमानय तं पापं नोचेत्त्वांघातयाम्यहम् । उत्तिष्ठोत्तिष्ठ पापिष्ठ साधूनांशंविधीयताम्

ड्यन्ते विषये यस्य प्रजादस्युभिरुल्बणैः । स नृपो नरकं याति तेभ्यस्ताश्चेन्नरक्षति

नारद उवाच ।

शम्येति वचो राज्ञः सचिवः स शिबे नृप !। वेगेन हयमारुह्य पदातिशतसंयुतः ॥

ी गृहे मुकुन्दस्य तस्य बन्धूनपृच्छत । मुकुन्दः केन निहतः सत्यं ब्रूत ममाऽग्रतः ॥

तं पापं निहनिष्यामि शासनाद्भूपतेरहम् ॥ ६ ॥

नारद उवाच ।

श्रुत्वेति मन्त्रिणो वाक्यं प्रत्यूचुर्विप्रबान्धवाः ॥ १० ॥

विप्रबान्धवाऊचुः ।

डकेन हतो मन्त्रिन्मुकुन्दो नापितेन हि । इदंपलायमानस्य तस्योष्णीषं पपात वै

ः स्वचक्षुषा वध्वा मुकुन्दस्यैव सोऽघक्कृत् । किं कुर्मस्तेनपापेनमज्जिताःशोकसागरे

नारद उवाच ।

याकर्ण्य वचस्तेषां बन्धूनां ब्राह्मणस्य हि । समन्त्री तस्य पापस्यनापितस्यगृहंययौ

श्वादुत्तीर्य तरसा तद्गृहं स्वयमाविशत् । कतिभिः पत्तिभिः सार्द्धंशयानंच ददर्श ह

तयस्तु तदाज्ञप्ताःकेशेष्वाकृष्यतत्क्षणात् । तल्पादुत्थापयामासुस्तंपापंनापिताधमम्

किमित्येव संजल्पन्नेत्रे उन्मीलयत्यसौ । यावत्स नापितः पापस्तावत्तं ददृशे पुरः

संस्मरन्तं निजं कर्म रात्रौ यत्कृतवानघम् ।

अधोमुखः क्षणं तस्थौ पश्यन्मूर्ध्नि स्थितं यमम् ॥ १७ ॥

हयित्वा च सचिवस्तं पापं चस्वपत्तिभिः । निनायनृपतेःपार्श्वमितिचोवाचभूपतिम्

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

आनीतो ब्रह्महा राजन्नयं चण्डकनापितः । यदाज्ञापयसि स्वामिंस्तरसा तत्करो...

राजोवाच ।

धर्मज्ञ सचिवश्रेष्ठ ! शृणु त्वं वचनं मम । इयं सरिद्वराऽऽयुष्मंश्चन्द्रभागाऽऽ...

त्यजन्ति येऽत्र वै प्राणाँल्लभन्ते ते सुरास्पदम् । अतएव नहन्तव्यःपापात्मा...

पञ्चकोशान्तरे ह्यस्या मर्यादा या वहिर्जहि । नरकान्दारुणान्ह्येष ब्रह्महा यातु...

नारद उवाच ।

इत्युक्तस्तेन वै राज्ञा स राजन्मन्त्रिसत्तमः । श्वपचान्प्रेरयामास हन्तुं तं भूप...

श्वपचास्ते तमुन्नीय चन्द्रभागापरे तटे । योजनद्वयभूभागं चिच्छिदुस्तस्य...

स पापो मारवे देशे सर्पोऽभूत्कालविग्रहः । धवकोटरमध्यस्थो विषज्वाला...

स शुष्को धववृक्षस्तु तस्य फूत्कारवह्निना । तथा तपनतापेन सरसोऽपि...

गमनात्तस्य पापस्य सर्वतो वृक्षभूषरम् । उच्छिद्य तृणजातादिजातं पश्चहि...

तत्र जातु समायातः सार्थो दक्षिणदेशतः । नारायणाश्रमं गच्छन्बदर्याख्यं...

तत्रैको ब्राह्मणः कश्चित्सार्थे संमीलितः पथि ।
निश्छिद्रां काष्ठमञ्जूषां पितृमात्रस्थिसंयुताम् ॥ २९ ॥

स्कन्धेन धारयन्याति तानि पातयितुं नृप !। गङ्गाम्भसि महाभाग! पापिना...

सोऽप्यागतस्तत्र वने यत्राऽस्ति स भुजङ्गमः ।
विविक्ते क्षिप्य मञ्जूषां शलाकालोहनिर्मिताम् ॥ ३१ ॥
अथाऽऽगत्य भुजङ्गोऽसौ शलाकां फणयाऽघटत् ।
किञ्चिदुद्घाटितायां स मञ्जूषायां समाविशत् ॥ ३२ ॥

पुनःशलाकास्वंस्थानमागताऽथसकुण्डली। तत्रैवतस्थौ निश्चेष्टोमञ्जूषायां...

अथ प्रभाते सर्वेतेचेलुःस्थानात्ततो नृप !। ब्राह्मणःसोऽपिमञ्जूषांकम्बलेन...

कृत्वाशिरसिराजेन्द्रचचालप्रतिजाह्नवीम् । कतिभिर्वासरैःसार्थःसम्प्राप्तस्तीर्थ...

इहैव कोशलायां वै पुनीतायां महीपते !। अथ शीतातुरो विप्रः कम्बलं चो...

मञ्जूषावरणं राजंस्तत्राऽयोध्यातटेशुभे । सोऽपिसर्पो निराहारोलब्ध्वामा...

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

निश्क्रामबहिस्तस्मादुत्क्षेप्यसुशलाकिकाम् । तं निःसृतं समालोक्यसर्पःसर्पइतिक्रुधा
हरन्तो जनाः सर्वे लोष्टहस्ताः समभ्ययुः । यावत्पलायते सर्पस्तावदेकेन घातितः
राज स तदा प्राणान्पश्यतांतीर्थगामिनाम् । त्यक्त्वाभुजगदेहंसदेवत्वंप्राप दुर्लभम्
दिव्यं विमानमारुह्य प्रोवाचेदं जनानिह ॥ ४० ॥

सर्प उवाच ।

दाक्षिणात्याःशृणुत ब्राह्मणा वचनं मम । पुरा चण्डकनामाऽहंनापितोब्रह्महाऽधमः
हत्याप्रदोषेण सर्प आसं मरुस्थले । भुक्त्वा नरकदुःखानि वर्षाणां लक्षपञ्चकम्
तं सर्पयोनौ मे वर्षाणामयुतद्वयम् । तीर्थस्याऽस्य प्रसादेन प्राप्तं देवत्वमुत्तमम् ॥
मादिदं न वै त्याज्यं तीर्थंवैकोशलाभिधम् । सर्वार्थदंयतोनाकःप्राप्तःपापीयसामया

नारद उवाच ।

एवं स नापितः पापो योनिं प्राप्य विनिन्दिताम् ।
जगाम द्यां विमानस्थस्तीर्थस्याऽस्य प्रसादतः ॥ ४५ ॥

दाक्षिणात्या यतयो भूत्वा तत्रैवतीर्थके । ऊषुर्गोविन्दपादाब्जमानसा दृष्टवैभवे ॥
हात्म्यस्यतीर्थस्यदृष्ट्वासब्राह्मणोत्तमः । तीर्थेऽत्रजातविश्रद्धःपित्रोरस्थीनिसोऽक्षिपत्
तेष्वस्थिखण्डेषु पितरौ तस्यतत्क्षणात् । विमानवरमारूढौ दिव्यौ तत्र समागतौ
तुश्च स्वतनयं शृण्वानेषु जनेषु वै । वत्स जीव चिरं लोके धनधान्यसुखी भव ॥
वयोर्मुक्तिदानाच्च मुक्तियास्यसिनोमृषा । गङ्गायांपिण्डदानेनयत्फलंस्यात्सुतस्यवै
पितॄणां या गतिश्चाऽत्र द्वयं स्यादस्थिपाततः ॥ ५० ॥

श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे कालिन्दीमाहात्म्ये
चण्डकोपाख्यानं नामैकादशाधिकद्विशततमोऽध्यायः ॥ २११ ॥

---

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# द्वादशाधिकद्विशततमोऽध्यायः

## इन्द्रप्रस्थस्थकोशलामाहात्म्यवर्णनम्

नारद उवाच

इत्युक्त्वा तस्य विप्रस्य पितरौ दिव्यरूपिणौ । विमानवरमारुह्य गतौ हरि
तयोः पुत्रस्तु तत्रैव कोशलायां दिनत्रयम् । उषित्वा स्वगृहंप्रायाच्चिन्तयंस्त
विबुधैः कोशला राजन्नियमेव तु कथ्यते । कथयिष्यामि तत्तेऽहं श्रवणो
ते दाक्षिणात्या वटवस्तस्यामूषुर्मुमूर्षवः । समर्थार्थप्रदायिन्यां कोशलायां
कश्चिदेकस्तदा तेषु तामनादृत्य कोशलाम् । गच्छन्नारायणस्थानं विष्णुना

वृद्धब्राह्मणरूपेण प्रोक्तं चेति द्विजं प्रति ॥ ५ ॥

वृद्धब्राह्मण उवाच ।

क्व यासि ब्राह्मश्रेष्ठ! त्यक्त्वेमां कोशलांशुभाम् । इन्द्रप्रस्थमिदंतीर्थंसर्वतीर्थे
कोशलाह्यत्र पुत्रेयं मुक्तिदा विष्णुवल्लभा । यत्र यासि विहायैनांनिष्कामप

न सिद्धिर्भविता तत्र विष्णुस्ते च पराङ्मुखः ।

मुक्तिं चेदिच्छसे विप्र ! तीर्थे न्यासं प्रगृह्य च ॥ ८ ॥

यस्ययस्येच्छया स्नासि तं तं वर्गं प्रदास्यति । तव दृष्टिपथे विप्र सर्पोऽपि सु
अस्याःप्रसादतोमुक्तौस्वर्गस्थौविप्रदम्पती । संजातप्रत्ययोऽपि त्वमेतन्माहात्
लब्ध्वाभाग्योदयेनापिकथमेनांविमुञ्चसि। यथाकश्चित्तृषार्तोऽपिलब्ध्वा

तं त्यक्त्वा याति पङ्काम्भस्तद्वत्त्वं मूढ ! दृश्यसे ।

यथा चिन्तामणिं कश्चित्कूपे क्षिपति मोहितः ॥ १२ ॥

हस्तस्थं या गतिस्तस्य दृश्यते सा गतिस्तव ।

आराध्य विष्णुं विश्वेशं यथा कश्चित्पुमान्कुधीः ॥ १३ ॥

सुखमैन्द्रियकंतुच्छंयाचते सागतिस्तव । नयाहि कोशलामेनां त्यक्त्वासर्वार्थ

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्नातस्याऽत्र दिवः प्राप्तिर्मृतस्याऽमृतरूंस्थितिः ॥ १५ ॥

नारद उवाच।

तन्नाकर्ण्य विप्रोऽसौ द्विजरूपभृतो हरेः । वाक्यं प्रोवाचविप्राय श्रेष्ठं बदरिकाश्रमम्

विप्र उवाच ।

भो विप्रवर ! श्रद्धा तव वाक्येन जायते । मम श्रुतवतः पूर्वमल्पग्रामस्य वैभवम् ॥

न्द्रप्रस्थमिदं तीर्थं न कदाचिन्मया श्रुतम् । कुतस्तु कोशला वृद्ध! एतदन्तरवर्तिनी ॥

नरनारायणःसाक्षान्मुक्ता यत्रचयोगिनः । मुक्त्वा तमाश्रमंपुण्यं तिष्ठाम्यऽत्र कथंद्विज

आगत्यस्वयं विष्णुरित्युक्त्वामां निवारयेत् । वदर्याश्चाधिकं क्षेत्रमिन्द्रप्रस्थमिदंद्विज

गृहं न प्रतिष्ठामि चालितोऽपितमाश्रमम् । मुक्तिकामः स्वसदनान्नान्यथा स्थितिरत्रमे

नारद उवाच ।

युक्ते तेन विप्रेण प्रादुरासीच्चतुर्भुजः । विहाय प्राकृतं रूपं दिव्यरूपधरो हरिः ॥

उवाच च महाभागं तं द्विजं मोक्षकामुकम् ॥ २२ ॥

विष्णुरुवाच ।

न्द्रप्रस्थमिदं विप्र ! सर्वतीर्थोत्तमोत्तमम् । ब्रह्मज्ञेष्विव सर्वेषु शम्भुर्गङ्गा नदीष्विव॥

हिमवानिव शैलेषु पक्षिराडिव पक्षिषु । त्रिदशेषु यथाशक्रो वैष्णवेष्विव नारदः॥२४

तेजस्विषु यथा सूर्यःक्षीराब्धिरिवचाऽब्धिषु । यथा वर्णेषु भूदेवः सृष्टिष्विवपितामहः

विष्णोर्यथावतारेषु कौशल्याजनितो वरः । तथा समस्ततीर्थेषु शक्रप्रस्थमिदं वरम् ॥

निष्कामो वा सकामो वा यातितीर्थे क्वचिन्नरः । तत्र तत्र समस्तात्मा फलदाताहमेववै

इन्द्रप्रस्थान्तरगतां त्यक्त्वा यो याति कोशलाम् ।

स नो फलमवाप्नोति भक्तो वरदवृन्दपात् ॥ २८ ॥

नारद उवाच ।

एवं निशम्य तद्वाक्यं दृष्ट्वा तद्रूपमुत्तमम् । प्रणिपत्य रमाकान्तं तस्यामेवागमद्द्विजः

भगवानपि विश्वात्मा सपद्यन्तर्दधे विभुः । तत्त्वमुद्दिश्य तं विप्रं तेन भावेन पूजितः ॥

तत्राऽऽगत्य स विप्रोऽसौ कोशलायां नराधिप ! ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कथयामास तद्वृत्तं सर्वं सर्वान्स्वसङ्गिनः ॥ ३१ ॥

तेऽपिश्रुत्वामहाभागा दाक्षिणात्या द्विजातयः । तस्यामनशनं कृत्वा तस्थु...
तदैव गरुडारूढः श्रीविष्णुः समुपागतः । विमानैःस्वगणैः सार्द्धं तावद्विर्...
ते तं दृष्ट्वा समायान्तं विमानगणसंयुतम् । वपुषा दिव्यरूपेण दण्डवत्पति...
तुष्टुवुश्च द्विजाः सर्वे दिव्यज्ञानवपुर्द्धराः । तं दिव्यरूपिणं देवं देववन्द्यप...

ब्राह्मणाऊचुः ।

नमस्तेऽतसीपुष्पसङ्काशभासं तनुं बिभ्रत्पीतवासो वृताय ।
लसत्कुण्डलप्रोतनानोपलाय श्रुतौ चञ्चलाव्यापिनीलाम्बुदाय ॥...
भक्तिस्त्वदीया किल कल्पवल्ली समाश्रिता यच्छति चित्तवाञ्छि...
यथा तथैषा तव कोशला विभो ! जनैरुभे ते कृपया तवाऽऽप्ते...
वन्दामहे ते चरणारविन्दं वृन्दारकैर्वन्दितमीश्वराद्यैः ।
विचिन्त्यमानं हृदि योगिवृन्दैः कन्दं परानन्दभुवो विमुक्तेः ॥...
प्राप्ताः कामं श्रीपते ! त्वत्स्वरूपं श्रीवत्साद्यैर्लक्षितं चारुचिह्नैः ।
वाञ्छामस्ते दासभावं तथापि प्राप्तं सर्वैरादृतं नारदाद्यैः ॥ ३...
यत्सौख्यं ते दासभावं गतानां तन्नो लक्ष्म्यावक्षसोऽन्तर्वसन्त्याः
तज्जानाति श्रीपते ! श्रीमहेशो नान्यो लोके येन तच्चानुभूतम् ॥...
मध्येऽस्माकं श्रीपते!सेवकानां नीरागाणामप्यसौ माननीयः ।
अस्मात्तं ते नारदाद्या मुनीशास्त्वद्भक्तास्त्रैलोक्यनाथं भजन्ते ॥ ४...
कामं ब्रह्मानन्दमाप्तोऽन्तरात्मा त्वद्दास्ये नो तृप्तिमायाति शम्भुः
वारंवारं त्वद्गुणानाग्रहीतुं नृत्यत्युच्चैस्त्वत्परो भावयुक्तः ॥ ४...
हेतोरस्माद्देहिनः स्वस्य दास्यं यत्प्राप्तानां नोर्मयः सम्भवन्ति ।
त्वच्चिह्नाङ्गौ द्वारपालौ तदीयौ मोहाद्धाम प्राप्य तौ तत्स्वकीयम् ।
लोकादस्मादन्तरेण त्वदिच्छां त्वल्लोकानां नोद्यत चाऽऽशुपातः ।
को जानीयात्तावकीमत्र मायां दुर्विज्ञेयां ब्रह्मशर्वादिदेवैः ॥ ४४ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नारद उवाच।

न्तैः स्तूयमानः स प्रभुर्निजपदोन्मुखः। उवाच तान्दाक्षिणात्यान्मेघगम्भीरयागिरा

श्रीभगवानुवाच।

भोभो द्विजा!भवन्तोऽस्याः कोशलायाः प्रसादतः।
सारूप्यमपि मे प्राप्ता दासभावं च यास्यथ ॥ ४६ ॥

प्रभृति मे विप्रास्तीर्थमेतदनुत्तमम्। दक्षिणाकोशलेत्युच्चैर्नाम्ना ख्यातं भविष्यति

दाशरथी भूत्वा निहनिष्यामि रावणम्। सा कथ्यते मुनिवरैः सर्वैरुत्तरकोशला॥

विपन्नो ज्ञानवान्यस्यां वैकुण्ठमधिरोहति।
विनाऽपितद्वसेद्योऽस्यां सोऽपि स्वर्गं च गच्छति ॥ ४९ ॥

ां ततो दशगुणामाहुर्दक्षिणकोशलाम्। एकादशगुणामेके सम्यगाहुर्मुनीश्वराः॥५०

ानेव विशेषोऽस्ति तस्या अस्यामतिर्मम। तस्यां मृतं नयन्त्येतेवैकुण्ठंमामकागणाः

स्यां मृतं स्वयमहमनन्यपदमानसम्। आरोप्य गरुडं दत्त्वा सारूप्यं प्रापयामि तत्

नारद उवाच।

इत्युक्त्वा तान्द्विजान्विष्णुर्नीत्वा वैकुण्ठमभ्यगात्।
महिमानं स्तुवन्नस्य स्वयं तीर्थस्य भूपते !॥ ५३ ॥

त्ते सर्वमाख्यातं कारणं जगतीपते !। येनेयं कथ्यते विज्ञैरिह दक्षिणकोशला॥५४

कलिमलकुलहन्ता शृण्वतां मानवानां कमलनयनपादप्राप्तये वाञ्छितश्च।
नृपवर!महिमा ते वर्णितः कोशलाया मधुवनभववृत्तं शृण्वतस्ते वदामि ॥

तेश्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे कालिन्दीमाहात्म्ये
कोशलामहिमवर्णनं नाम द्वादशाधिकशततमोऽध्यायः ॥२१२ ॥

---

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

## त्रयोदशाधिकद्विशततमोऽध्यायः

कुशलब्राह्मणपत्नीदुराचारवृत्तान्तवर्णनपुरःसरं मधुवनतीर्थमाहा-
तत्र च गोधायोनिमापन्नायास्तस्याःस्वपुत्रेणसमुद्धारवर्णन

नारद उवाच ।

एतन्मधुवनं तात शिवे! परमपावनम् । देवराजाय तुष्टेन स्थापिता विष्णु
यत्र विश्रान्तिनामेदं तीर्थं त्रिभुवनोत्तमम् । विविदां मुक्तिदं पुंसां पावनं सा

नित्यं वसति विश्वात्मा विष्णुः श्रीकोलरूपधृक् ।
अत्र तीर्थोत्तमे पुण्ये नृप! विश्रान्तिसञ्ज्ञके ॥ ३ ॥

बहुभिर्जन्मभिर्येन विष्णुराराधितः सदा । मरणं तस्य तीर्थेऽस्मिञ्जायते कि
कालिन्द्या एव कूलेतु द्वितीयंहरिणाकृतम् । तीर्थं विश्रान्तिसञ्ज्ञन्तुयत्रकंस
एतद्द्वयं समं राजन्गुणैर्वैकुण्ठदातृभिः । भाग्योदयेन केनाऽपि लभ्यते सक

अथ तीर्थस्य माहात्म्यं कथयामि तवाऽग्रतः ।
यच्छ्रुत्वा सर्वतीर्थेषु मज्जनाल्लप्स्यसे फलम् ॥ ७ ॥

हिमाचलोपत्यकायां किरातनगरे शुभे । ब्राह्मणो नाम कुशलो राजन्नासी
तस्य पत्नी दुराचारा दुराचारनरे रता । कर्मणा मोहयामास पतिं सा
पतिस्तया मोहितस्तु न निवारयितुं क्षमः । तदाज्ञातत्परो दीनःक्रयक्रीत
लोकाउपहसन्तिस्म तं द्विजंकुलटापतिम् । उपहासभयात्सोऽपिनिर्ययौ न
महार्हाणि दुकूलानिभूषणानि च सा दधौ । जारैर्दत्तानिदुष्टात्माहसिताऽ
वस्त्रं पुरातनं जीर्णमुत्तीर्णं यच्छरीरतः । अवज्ञापूर्वकं दुष्टा स्वभर्त्रे स

एवं तया कुलटया सोऽवज्ञातः स्वकः पतिः ।
नितान्तं दुःखमापन्नो विषं जग्ध्वा मृतो निशि ॥ १४ ॥
सा भीता राजतः पापा ह्यनयात्स्वैरिणी तदा ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अनुयास्यामि भर्त्तारमित्युवाच मृषा वचः ॥ १५ ॥

वशिक्षिताःसख्यः स्वकीयास्तांसमीपगाः । निवारयामासुरिति कथयित्वामहीपतेः

सख्यऊचुः ।

मृगाक्षि! किमर्थं ते क्रियतेऽनर्थ ईद्दशः । यत्सुवर्णनिभं कायं त्वं नाशयितुमुद्यता

त्या किंसुखं दृष्टममुष्याऽव्यवसायिनः । दरिद्रस्याऽसमर्थस्य सखि! स्वोदरपूरिणः

लयैनंसुतंबालं त्वद्दतेकोऽस्य पालकः । मरिष्यामो वयं सर्वा मृतायां त्वयिसुन्दरि!

मेतदवेक्षस्व समुत्तिष्ठ वरानने ! । जीयादयं तव सुतो यस्ते भाविसुखप्रदः ॥२०॥

वाञ्छन्ति बान्धवाः सर्वे त्वदीयास्तव जीवितम् ।

उत्तिष्ठ निजबन्धूनां कुरु चित्तसमीहितम् ॥ २१ ॥

न्ति तव रागेण वयस्याः सकलाः सति !। निजवाक्यप्रदानेन वारयैताःसुदुःखिताः

नारद उवाच ।

याकर्ण्यवचस्तासांदुष्टा साधर्मविश्रुतम् । उन्नमय्य मुखं प्राहश्रावयन्तीस्वबान्धवान्

सख्युवाच ।

माभिर्यद्वचो धर्म्यंप्रोक्तं जानेऋतंननु । तथाऽपिस्वपतिः स्त्रीभिर्मान्योलोकद्वयप्रदः

च्यते मया वाक्यं धर्मशास्त्रसमन्वितम् । तद्वचः श्रूयतां सख्यो युक्तं चेदनुमोदत॥

स्त्री निधनमापन्नं पतिमन्वेति तत्परा । पापाऽपि सहतेनैव स्वर्गे वसतिसा चिरम्

भिः पतिर्न हातव्यो निर्धनो रोगवानपि । जीवन्मृतोऽनुगन्तव्यःश्रुतिरेषा सनातनी

विचिन्त्येति स्वमनसि सख्योऽन्वेमि स्वकं पतिम् ।

वर्त्तिष्यते स्वभाग्येन करिष्येऽहं किमस्य वै ॥ २८ ॥

नारद उवाच ।

युक्तास्तास्तयासख्योदुष्टादुष्टमतिप्रदाः । ऊचुस्तां धर्मवाक्येन समस्तजनमोहिनीम्

सख्यऊचुः ।

हि पूर्वं हिनः सुभ्रूः पश्चादन्वेहि वल्लभे !। समस्तास्त्वद्वियोगं न वयं सोढुं क्षमामहे

अस्मांस्तव विनिघ्नन्त्या अनुयान्त्याः स्वकं पतिम् ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

धर्मोऽल्पः पापबाहुल्यं स्वर्गप्राप्तिस्तु कीदृशी ॥ ३१ ॥

जीवन्नयं पतिः स्वीयःसाध्वयं प्रतिपालितः । यदुक्तंपतिपत्नीभ्यां तत्त्वया

यावत्स्वजीवनोपायं विधातुमयमक्षमः । तावत्त्वदीयभाग्येन जीविष्यति

नारद उवाच ।

इत्युक्ता सा निववृते स्वभर्त्तुरनुयानतः । सुतेन कारयामास तदा तद्विर्हि

अथ कालेन कियता सुतोपनयने मतिम् । कारयामास सा विप्रैर्दत्त्वा जा

कृतोपनयनः कुण्डः स तत्त्वज्ञानवाञ्छिशुः । गृहान्निर्गम्य सपदि नाराय

सतां सङ्गतिमासाद्य त्यक्त्वा स्वं प्राकृतं वपुः ।

आरुरोह निजं लोकमप्राप्यं योगिभिश्च तत् ॥ ३७ ॥

अथ सा निर्गते पुत्रे मनोदुःखंचकार वै । तस्मिन्नेव दिने राजन्भूयो जारैः

इति तै रममाणायां तस्यां जारैःसमं नृप !। समागता जरा काले लावण्य

त्यक्तोपपतिभिर्दृष्टा सा जराग्रस्तविग्रहा । बभूव दूतिकाऽन्यासां कुलशील

तदा ह्येकस्य विप्रस्य सवत्सां गामपाहरत् । विक्रीता कियताराजन्द्रव्येण

तयेति गमितःकालो दूतित्वेनकियान्नृप !। पश्चाच्छुष्कशरीरोऽस्याविगुण

तस्याः कुष्ठे समुत्पन्ने गलितंह्यङ्गपञ्चकम् । हस्तौ पादौ च नृपते! पञ्चमी

एवंभूतायदाऽऽहारं न लभतेकुतश्चन । तदा तु तन्नोदितया दास्यासाऽनीय

तत्र सा पतिता पापा लोकान्सम्प्रार्थ्य दीनया ।

गिरा धिगिति कुर्वाणा चक्रे स्वोदरपूरणम् ॥ ४५ ॥

तदिहाभ्यासवर्त्त्येको द्विजः सर्वागमार्थवित् ।

तां विलोक्य महावाग्मी प्रोवाचेदं वचो नृप ! ॥ ४६ ॥

जनानां दुःखदं पापमिह लोके परत्र च । तस्मात्पापं न कर्त्तव्यं मानवैर्दुः

पापं कृत्वा जनं यस्तु प्रायश्चित्तं करोति वै । नतदाचरितेभूयो न तत्फल

यः कृत्वा मुहुरेनांसि प्रायश्चित्तं करोति न । तस्याऽस्या इव पापायागति

अनया पापसङ्घातोलोकेऽत्र समुपार्जितः । इहैव तत्फलं भुङ्क्ते भोक्ष्यते

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

र्वशास्त्रेषु दृष्टं वैसर्वेषां पापकर्मणाम्। प्रायश्चित्तं नच स्त्रीणां विमुखानांस्वकर्मणः

नारद उवाच।

इत्युक्त्वा स द्विजश्रेष्ठो नमस्कृत्य रविं ययौ।

विष्णुं संस्मृत्य संस्मृत्य भीतस्तदवलोकनात्॥ ५२॥

वंसादुःखमापन्ना भुञ्जाना कर्मणः फलम्। अर्जितस्य स्वयं राजन्मृता कतिपयैर्दिनैः

तस्या अग्निसंस्कारः संजातःपापकर्मणः। आकृष्यकेशे सानीता श्वपचैर्नगराद्वहिः

रणावसरे तस्या यमभृत्याःसमागताः। प्रापय्य यातनादेहंतां निन्युर्भास्करेःपुरीम्

सौम्यः स धर्मिणां देवः साक्षाद्गुह्यस्तु पापिनाम्।

तस्या विलोकनाद्भूयः सोऽप्यभूद्वै पराङ्मुखः॥ ५६॥

त्यानाज्ञापयामास यम एव पराङ्मुखः। रौरवे नरके घोरे पात्यतां सा मयेरिता॥

इत्युक्तास्ते तदा भृत्या नीत्वा तां घोररौरवे।

न्यपातयन्नधो वक्त्रां स्मरन्तीं कर्म यत्कृतम्॥ ५८॥

कमन्वन्तरं यावत्सा स्थित्वा तत्र रौरवे। पश्चाद्गोधासमुत्पन्ना श्मशाने मृतमांसभुक्

त्राऽपि सा वर्षशतं लेभे दुःखं स्वकर्मणः। फलं मृतकमांसेन कुर्वत्याहारमुत्कटम्॥

एकदा स मुनेः पुत्रो योऽस्याः कुक्षौ व्यजायत।

विप्रयोनौ समायातः श्मशाने तत्र पर्यटन्॥ ६१॥

निपुत्रस्तु तां वीक्ष्यमृतानांक्रव्यमश्नतीम्। ध्यात्वाक्षणंस्वमनसिबुबुधेतांस्वमातरम्

स उवाचाऽऽत्मनाऽऽत्मानं बुद्ध्वा तां निजमातरम्॥ ६३॥

मुनिपुत्र उवाच।

तां तु तारयाम्यद्य दुस्तराद्दुःखवारिधेः। अहो न मुच्यते जन्तुर्जातपापेन कर्मणा॥

त्मनोपार्जितेनैव भोगकालावधिं विना। अस्याः कालोव्यतीयायनिरयेमानवाभिधः

स्मृतं च जनैस्त्वत्र वत्सराणां शतं गतम्। कियदग्रेच भोक्तव्यमेतया पापमुल्बणम्

नारद उवाच।

त्यालोच्यपुनर्दध्यौज्ञानेनाऽऽमील्यचक्षुषी। दृष्ट्वा तस्यागतिंघोरांपापायादिव्यचक्षुषा

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पुनरात्मानमाहेदं स द्विजप्रवरो नृप ! ॥ ६७ ॥

मुनिपुत्र उवाच ।

अहो कल्पशतेनांऽपि निस्तारोऽस्या न दृश्यते । विना सत्तीर्थमरणं शरणं वा

अथवा पिण्डदानेन गयायां मत्कृतेन च । विनाऽस्याःसद्गतिर्नैव कल्पकोटि

न घटेत द्वयं चास्या अस्यां योनौ कदाचन । सत्तीर्थविषये मृत्युःसेवायां

अस्या उद्धारहेतुर्वै मग्नायाः पापसागरे । भविता मत्कृतं श्राद्धं गयायां च

नारद उवाच ।

इत्यालोच्य स धर्मात्मा ययौ स्वपितुराश्रमम् ।

आचख्यौ पितरं सर्वं स्वमातुर्दुःखकारणम् ॥ ७२ ॥

निशम्य पुत्रवचनं मातृदुःखनिवेदकम् । उवाच स मुनिश्रेष्ठः पुत्रं प्रणत

मुनिरुवाच ।

हे तात मातरं स्वीयां शीघ्रमुद्धर दुर्गतेः । नयविद्भूपतिः शत्रोर्जयलक्ष्मी

न तारयति यः पुत्रो मातरं पितरंस्वकम् । दुःखात्स याति नरकं यदि तार

स्वपुत्रात्प्राप्य पानीयं पिण्डांश्चवरतीर्थके । पितरोनरकात्स्वर्गंस्वर्गाद्यान्ति

तस्मादाशु समुत्तिष्ठ गच्छ खाण्डवकानने । तत्राऽस्तियमुना पुण्या मुनिव

तत्तीरेऽस्ति हरिप्रस्थं सर्वतीर्थमयं ततः । पुण्यं मधुवनं तत्र विष्णुनास्था

तत्र स्नात्वा तु विधिवत्कृत्वा नित्यक्रियां निजाम् ।

तामुद्दिश्य कुरु श्राद्धं स्वप्रसोश्च कुरु क्रियाम् ॥ ७६ ॥

त्वयातत्रकृतेश्राद्धेतस्याःसद्गतिमिच्छता । सा प्राप्स्यतिहरेर्लोकंहित्वा

गयायां पिण्डदानेन यत्फलंतात! जायते । ततः शतगुणं पुण्यं सद्भिर्मधुवने

इदानीं वर्तते तात कन्याराशिगतो रविः । पुत्र! गत्वा कुरु श्राद्धंपूर्वानुद्दि

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे

माहात्म्ये मधुवनमाहात्म्यवर्णनं नाम त्रयोदशाधिकद्विशततमोऽध्यायः ॥

———

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# चतुर्दशाधिकद्विशततमोऽध्यायः

## पुत्रस्यपितृवाक्यान्मधुवनेस्वमातुरुद्धारायश्राद्धकरणम्

नारद उवाच ।

त्याकर्ण्य पितुर्वाक्यं स जगाम त्वरान्वितः । पुण्यं मधुवनंराजन्गयाशतगुणाधिकम्
त्तीर्थवासिनो विप्रान्सायमामन्त्र्य मन्त्रवित् । कालेपुनःसमाहूयवभाषेस्वागतं वचः
तः प्रक्षाल्य तत्पादौ गन्धाद्यैरभिपूज्य च । पादार्घ्यमददात्प्रीत्याशेषेणस्वयमाचमत्
तस्तान्ब्राह्मणान्नीत्वा श्राद्धदेशे न्यवेशयत् । कुशाम्बुतुलसीपुष्पगन्धाक्षततिलैः सह
रयित्वा कर्मपात्रं पुण्डरीकाक्षमस्मरत् । देवताभ्यइतिश्लोकंत्रिःकृत्वासोऽपठद्द्विजः
तिलं शोधितकुशैर्विदधे वन्धनं ततः । अग्निष्वात्तेति मन्त्रेण पूर्वादीनांदिशांक्रमात्
क्षोभूतेति मन्त्रेण नीवीवन्धं व्यधाच्च सः । ततः प्रतिज्ञामाधाय ददौ द्विजकुशासनम्
पितॄन्समाह्वयामास स तदा ब्राह्मणोत्तमः । दत्त्वाततस्तुहस्तार्घ्यं पात्रंन्युब्जीचकारवै

कृत्वा गन्धादिदानं च पुनः सव्येन चाऽऽचमत् ।
सव्याऽपसव्येन तदा दत्त्वा पात्राणि स द्विजः ॥ ६ ॥

र्ब्राह्मणैरनुज्ञातश्चक्रेऽग्नौऽकरणं ततः । आज्यादिहविषा राजंस्तान्यमत्राण्यपूरयत् ॥
नुत्तानोत्तानपाणिःकुर्वन्पात्रावलम्बनम् । पपाठपाठितोविप्रैः पृथ्वीत्वेतिद्विजन्मनाम्
संस्कृतप्रणीतानामितिमन्त्रेण स द्विजः । दर्भेषु दक्षिणाग्रेषु ददौ च विकिरासनम्
ग्निदग्धेतिमन्त्रेण घृतमिश्रान्नमक्षिपत् । जलेन सह राजेन्द्र! विष्टरे कुशकल्पिते ॥१३
सव्येन पुनराचम्य ददौ चुलकजीवनम् । तृप्ताः स्थेतिच संपृच्छ्यतृप्ताःस्मइतिभाषितः
षान्नभोजने तेषां जग्राहाज्ञांद्विजन्मनाम् । पिण्डार्थवेदिकांकृत्वावितस्तिप्रमितांद्विजः

रेखां चकार दर्भेण दक्षिणाभिमुखीं नृप ! ।
ये रूपाणीति मन्त्रेण दधेऽग्निदिशि चोल्मुकम् ॥ १६ ॥

र्वजन्मनि या माता पिता यश्च महीपते !। तयोश्च पितरौ यौहियौच राजन्पितामहौ

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यः प्रमातामहश्चापि पितरौ राजसत्तम !। पित्रादीन्षट्सपत्नीकांस्तानुद्दिश्य
कुशासनानि दत्त्वावैददौपिण्डान्षडेवहि । गन्धादिभिश्चसम्पूज्यमर्घ्यपिण्ड
कृत्वाऽऽघ्रायच धामांसे पिण्डपात्रं न्यवेशयत् । जलपात्रंतदाऽऽदायवाजेवा
पाद्यार्घं च पुनर्दत्त्वा दक्षिणाद्यैरतूतुषत् । आद्वारंताननुव्रज्यतेभ्योलब्ध्वाऽ
बुभुजे च स्वयं राजन्बान्धवैः सह स द्विजः । एवं समाप्यराजेन्द्र! श्राद्धं स द्वि
पूर्वसम्बन्धिनां तत्र तीर्थे मधुवने शुभे । यदा चचाल शान्तात्मा पितुराश्रमं
तदा सम्मिलितामार्गे सर्वे ते श्राद्धभोजिनः । विमानषट्कमारूढा दिव्याभरण
दिव्याम्बरधरा राजन्नित्यूचुस्तद्द्विजोत्तमम् ॥ २४ ॥

पितरऊचुः ।

भो वत्स! विप्रशार्दूल! वृणीष्व वरमुत्तमम् । तीर्थेऽत्र कुर्वताश्राद्धंभवतातारि
वयं गणत्वमापन्नाः श्रीपतेस्त्वत्प्रसादतः । प्रार्थयस्व महाबुद्धे ! यदिष्टं तव

मुनिपुत्र उवाच ।

के यूयं कुत आयाता गणत्वं हि कुतो गताः । उपकारं विनाऽकस्माद्वरंयत्म

नारद उवाच ।

इत्याकर्ण्य वचस्तस्य पूर्वजन्मसुतस्य वै । पिता प्रोवाचयोदुःखाद्भक्षयित्वा वि

पितोवाच ।

अहं तव पिता विप्र!पूर्वजन्मनि भूसुरः । भार्यया व्यभिचारिण्यामात्रातेपीडि
अतीवदुःखमापन्नो भक्षयित्वा विषं निशि । अपमृत्युं गतस्तस्मादभवं राज
एवं मन्वन्तरं तात! शतं पञ्चदशाधिकम् । वर्षाणां च व्यतीतं तद्राक्षसत्वं ग
इदानीं षोडशाब्दे तु त्वया श्राद्धे कृतेऽत्र वै । पुण्ये मधुवने तीर्थे दैवत्वं प्राप्त

एतद्विमानमायातं स्वर्गादिन्द्रप्रणोदितम् ।
सगणं साप्सरोवृन्दं ममारोहणहेतवे ॥ ३३ ॥

अत्र तुभ्यं वरं दातुं सगणः साप्सरोगणः । विमानवरमारुह्य गच्छन्स्वर्गं
वरं त्वरय भद्रं ते न विलम्बसहा वयम् । ऐरावतगजारूढः सुरेशो मामवेक्षते

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नारद उवाच।

युक्त्वा निजवृत्तान्तं दत्त्वा च निजसूनवे। तत्प्रार्थितां हरेर्भक्तिं जगाम स दिवं नृप!
अथ प्रोवाच तन्माता पूर्वजन्मसुतं च तम्॥ ३७॥

मातोवाच।

प्रसादादहं जाताद्देवीमुक्ताच पापतः। प्राप्तंशच्याःसखीत्वंमे पापयाऽपिद्विजोत्तम!
याऽत्रविहितेश्राद्धेतीर्थेविश्रान्तिसञ्ज्ञके। प्रार्थयस्व महाभाग! निजचित्तसमीहितम्
मि ते यतोऽस्माकं देवीनां न वचो मृषा। येनपापेनजाताऽहंगोधा च पितृकानने
के चिरमास्थाय तत्त्वं वेत्सि द्विजोत्तम!। अनुजानीहि मां पुत्र पुलोमतनया दिवि
मामपेक्षत आकाशे वृता देवाङ्गना गणैः॥४१॥

नारद उवाच।

युक्त्वासाऽपितन्माता निष्कामायस्वसूनवे। ययौ त्रिविष्टपंराजञ्छिरसा तेनवन्दिता
: पितामहस्तस्य स्वपौत्रं तं द्विजोत्तमम्। उवाच वचनं भूप! हरेर्बिभ्रत्सरूपताम्॥

पितामह उवाच।

वत्स चिरं जीवलभवस्त्रनिजवाञ्छितम्। त्वत्प्रसादाद्वयंतीर्णादुस्तराद्भवसागरात्
तामहोऽहन्ते वत्स तत्रेयंच पितामही। मृतं माऽनुगतासाध्वी सालोक्यमचिरंगता
त्वयाऽत्रविश्रान्तोविहिते श्राद्धकर्मणि। आवयोस्तु हरेर्लोकेलब्धा तस्य सरूपता

नारद उवाच।

मुक्त्वा तया सार्द्धं स्वस्त्रिया भूपसत्तम!। ब्रह्मलोकमतिक्रम्य वैकुण्ठं स ययौद्विजः
प्रोवाच राजेन्द्र! वचस्तत्प्रपितामहः। यत्ते तत्कथयाम्यद्य शृणुष्वैकमना द्विजः॥

प्रपितामह उवाच।

मो वत्स महाभाग तवाऽहंप्रपितामहः। भ्रूणहत्याफलेनाहं शौकरीं योनिमाप्तवान्
विनिर्गतस्तात श्वाऽभवं पापपीडितः। ततः स्थावरतां प्राप्तो विन्ध्ये पर्वतसत्तमे
ऽपिचिरकालेनस्थितःस्थावरतांदधत्। हस्तिनाकेनचित्तातमूलादुत्पाटितोबलात्
स्मन्नेवततः कालेत्वया श्राद्धमकारिवै। अस्मिस्तीर्थोत्तमेतातमुक्तोऽहंस्थावरात्ततः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्राप्तोऽयं यक्षराजस्य नगर्यां वासउत्तमः। देह्यनुज्ञां द्विजश्रेष्ठ! यामि तां त्वत्
त्वां दिदृक्षुरिहाऽऽयातो दृष्टस्त्वं पुण्यदर्शनः। तीर्थं च सर्वतीर्थेषु श्रेष्ठं मत्
नारद उवाच।
इत्युक्तस्तेन राजेन्द्र! मुनिपुत्रः स धर्मवित्। पप्रच्छ शिरसाऽऽनम्य निजं
ऋषिरुवाच।
ब्राह्मणानां कुलेतातजातोऽसि त्वंगरीयसि। कथं विहितवान्पापं भ्रूणहत्या
येन निन्द्यांसमापन्नो भवान्योनिपरम्पराम्। समाचक्ष्वमहाभाग यदितत्स्
प्रपितामह उवाच।
पुराऽहं द्विजशार्दूल! ब्राह्मणस्यैव जन्मनि। मन्त्रयन्त्रविधानेन कृतवान्वृत्ति
धनलोभेन नारीणां गर्भार्थमहमौषधम्। दत्तवांश्चैव नाशाय दैवोपहतचेत
लोभोहि धनहीनानांजनानांज्ञानमाहरेत्। शुचिकाले दिनाधीशःकुल्यानामि
ज्ञानेनष्टे जनस्तात पापमाचरते ध्रुवम्। पापान्नरकमाप्नोति ततो याति कु

काचिदेका तदा नारी गुर्विणी मामपृच्छत।
किं जनिष्याम्यहं विप्र! पुत्रं वेत्यथवा स्त्रियम्॥ ६२॥
तदाऽहमुक्तवांस्तां वै तव कन्या भविष्यति।
पुत्रोत्पत्तिकृते तुभ्यं प्रदास्यामि महौषधम्॥ ६३॥

इत्युक्ता च मया नारी दुर्बुद्धिस्त्रीशिरोमणिः। जग्राह ममपादौ तु दत्तं हेम
इत्युवाच च सामह्यंषट्कन्याजनितामया। सप्तमीयंत्वया चोक्ताजीविष्येऽस्या
तथाकुरुमहाबुद्धेयथाऽहंवैनकन्यकाम्। जनयिष्यामिविप्राऽन्यांनिजप्राणवि
इत्याकर्ण्यवचस्तस्यास्तामहं पुनरुक्तवान्। प्रसूतिकालेदास्यामि पुत्रोत्पा
तथेतिसा वचोमह्यं प्रतिश्रुत्य गतागृहम्। अपेक्षमाणा तं कालंतस्थौ वाक्य
तस्यां गतायां भो तात चिन्तयाऽभवमातुरः। इत्यहं द्विजशार्दूल तच्छ्रुणु
पुत्रोत्पत्तिप्रतीत्येयं मह्यं दत्तवती पलम्। सुवर्णस्यन जानामि किमस्याः
किमत्रकरणीयं मे कथमेतत्सुवर्णकम्। पलप्रमाणं तिष्ठेद्वै दरिद्रस्य गृहे

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विमृश्य तद्दास्यास्तस्यै हस्तुनदापितम् । गर्भपातकरं तात! मया दारुणमौषधम्
षधेन तस्यास्तु गर्भस्रावोऽभवत्तदा । मासे तृतीये न ज्ञातं चिह्नं पुरुषकन्ययोः ॥
सा मद्गृहं प्राप्ता विषण्णागर्भस्रावतः । अथाऽर्थयत्सुवर्णं तन्निराशी पुत्रजन्मनि
हमिष्टकाचूर्णं भस्मना च समन्वितम् । हरिद्राचूर्णसंयुक्तं साम्बु तस्यै अदर्शयम्
च्चूर्णं कृतं मातस्त्वत्पुत्रोत्पत्तये मया । त्वद्दानाद्द्विगुणं द्रव्यं लग्नमेतस्य साधने

इत्युक्त्वा सा मया तात ! त्यक्त्वा चूर्णं गृहं ययौ ।
मामुक्त्वेति ग्रहीष्यामि काले त्वत्तो द्विजोत्तम ! ॥ ७७ ॥

मया कृता तात भ्रूणहत्याऽतिदारुणा । ययाऽतिकुत्सिते योनित्रितये भ्रमितंमया
प्रसादादहं मुक्तःसाम्प्रतं स्थावरत्वतः । देह्यनुज्ञां मुनिश्रेष्ठ! याम्यहं ह्यलकां शुभाम्

नारद उवाच ।

मुक्त्वातु राजेन्द्र तस्यतु प्रपितामहः । तेनाभिवन्दितो मूर्ध्ना प्रययौ दिशमुत्तराम्
मानेन विचित्रेण किङ्किणीजालमालिना । नृत्यद्गन्धर्वजुष्टेन मणिप्राकारशोभिना॥
तस्य महाराज विप्रस्य प्रपितामही । उवाच स्वप्रपौत्रं तं विमानवरमास्थिता ॥

प्रपितामह्युवाच ।

त्वत्र कुत्र गन्ताऽसि पुण्येनाऽनेन सुव्रत !। विनापद्मापतेः पादपद्मचिह्नितमन्दिरम्
थं मम पतिः पापो मुने! त्वत्प्रपितामहः । वारितोऽपि मया पापमाचचार सुदुष्टधीः

सोऽपि त्वयाऽतिपापात्मा तारितो दुःखसागरात् ।
शक्यते केन वै कर्तुं तावकं गुणवर्णनम् ॥ ८५ ॥

नारद उवाच ।

युक्त्वा साऽपि राजेन्द्र पतिलोकं जगाम ह । अलकायां चिरंपत्या तेनैव मुमुदे सह
थ ते मुनिपुत्रस्य सर्वे मातामहादयः । सपत्नीकाः समारुह्य विमानेषु ययुर्दिवम् ॥
ोऽपि द्विजवरस्तस्मात्तीर्थात्स्वपितुराश्रमम् । गत्वा तं सर्ववृत्तान्तंस्वपित्रेसमवर्णयत्
ोऽपि तत्र गतः सार्द्धं कुटुम्बेन वने मधोः । चकार पर्णशालांवैविश्रान्तेस्तुसमीपतः
त्र विश्रान्तितीर्थेतुत्रिकालंस्नानमाचरन् । नाऽकरोद्विष्णुलोकेऽपिस्पृहांसमुनिसत्तमः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

एकदा जलमध्ये स स्नानं कुर्वन्मुनिर्नृप !। आचकाङ्क्षे च भविताकदा मे
एवं कामयमानस्य मुनिवर्यस्य भूपते !। आजगाम त्वरायुक्तः पक्षिराजा
लक्ष्म्यावक्षःस्थया सार्द्धं चतुर्बाहुधरो हरिः। नवीनघनवर्णाङ्गो विद्युत्
कौस्तुभोद्भासिसद्वक्षाः शङ्खचक्रगदाब्जभृत्। वनमालालसत्कण्ठो मकरा
फुल्लाम्बुजपलाशाक्षः स्वलकालङ्कृताननः। विद्रुमाकारकरजोऽरुणहस्तोऽ
उवाच तं द्विजश्रेष्ठन्दन्तभासा विभासयन्। शरन्निशापतिस्तोमतिरस्कार

श्रीभगवानुवाच।

भो भो द्विजवरैतन्मे तीर्थं मधुवनं शुभम्। विश्रान्तिसञ्ज्ञकं स्नानसर्वकामा
अत्र त्वया स्नानकाले वाञ्छितं मम दर्शनम्। तुभ्यंहितन्मया दत्तं ब्रह्मादि
त्यज देहमिमं विप्र! मानुषं दिव्यमाप्नुहि। आयाहिमद्गृहंसार्द्धंमयाऽऽख

नारद उवाच।

इत्याकर्ण्य वचस्तस्य श्रीपतेः स मुनीश्वरः। तुष्टाव प्रणतो भूत्वा जलएव

मुनिरुवाच।

श्रीपते श्रीमदम्भोजसंमर्दितपदाम्बुजम्। भवतो भवतापघ्नं वन्दे त्रिदश
त्वदीयमायया नाथ मोहिता येऽत्र जन्तवः। तेषां कदाचिन्निस्तारो न कृपा
सत्तीर्थसेवनादीश तथा सज्जनसंगमात्। पुंसां भक्तिस्तु येषां वै जायते

साधुभिर्बहुभिरीरितं हरे ! यो निशम्यगुणकीर्त्तनं तव।
कीर्तयत्यखिलपापनाशनं मातृगर्भकुहरे स नो पतेत् ॥ १०४ ॥
श्रीपते ! तव जनस्य मानसं दैवतस्तु पतितं महारणे।
गुण्ठितं च रजसा जहाति नो निर्मलत्वमिव रत्नमुत्तमम् ॥ १०५ ॥
यः पुमान्पतति ते पदाम्बुजे दण्डवत्पुलकमङ्गके दधत्।
सोऽन्वयं नयति तावकं पदं स्वं च वाञ्छितमशेषयोगिभिः ॥ १०६ ॥
जीवएव तव मायया विभो ! मोहितो भ्रमति विश्ववर्त्मसु।
त्वत्कृपाललितलोचनाचलैस्तत्क्षणं तरति विश्ववारिधिम् ॥ १०७ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नारद उवाच ।

संस्तुत्य गोविन्दं दण्डवत्तस्यपादयोः । पपात स मुनिश्रेष्ठो जयेति मुहुरीरयन् ॥

तेस्तं मुनिश्रेष्ठं दण्डवत्पतितं भुवि । उत्थाप्य बाहुभिस्तूर्णं सुपर्णेसमरोपयत्

मेवं च विश्वात्मा वैकुण्ठं च जगाम ह । इत्येतत्कथितं राजञ्छिवे! मधुवनस्यवै

माहात्म्यं सर्वपापघ्नं किमन्यच्छ्रोतुमिच्छसि ।

यइदं शृणुयान्मर्त्यः सर्वपापैः प्रमुच्यते ॥ १११ ॥

श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्त्र्यां संहितायां उत्तरे खण्डे कालिन्दीमाहात्म्ये मधुवनमाहात्म्यं नाम चतुर्दशाधिकद्विशततमोऽध्यायः ॥ २१४ ॥

---

# पञ्चदशाधिकद्विशततमोऽध्यायः

## मुनिपुत्रस्यकुण्डत्वेपूर्वजन्मकृतकारणवर्णनं तत्प्रसङ्गे बुधकृतशापस्तदनुग्रहवर्णनम्

सौभरिरुवाच ।

षिरेदमाकर्ण्य नारदस्य वचः शुभम् । शिविरौशीनरो राजा विनीतस्तमुवाच ह

शिविरुवाच ।

मया तु माहात्म्यं श्रुतं मधुवनस्यवै । त्वन्मुखात्किंतुसन्देहोह्येकोऽस्तिममानसे

धर्मात्मना सर्वे तारिता निजबान्धवाः । जन्मद्वयकृताह्यासीत्सकथं स्वैरिणीसुतः

चक्ष्व भगवन्सर्वस्त्वं वेत्सि तत्त्वतः । अतीतं वर्त्तमानं च भविष्यमपि नारद !॥

नारद उवाच ।

ा मुनयः सर्वे हरिद्वारे समागताः । दशम्यां ज्येष्ठशुक्लस्य युक्तायां सर्वपर्वभिः ॥

तत्र ते विधिवत्स्नात्वा कृत्वा च सत्क्रियां शुभाम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

हिमाचलस्य पृष्ठे तु स्वस्थचित्ता उपाविशन् ॥ ६ ॥

तारात्मजो वुधस्तत्र मुनिसङ्घे समागतः । सौन्दर्यभरसंयुक्तः स्मरो मूर्त

तं समागतमालोक्य समुत्तस्थुर्मुनीश्वराः । तेनाऽभिवन्दितामूर्ध्नापुनस्ते

वुधस्याऽऽदरमालोक्य विहितं मुनिपुङ्गवैः । मुनिपुत्रः स पप्रच्छ पितरंस्व

मुनिपुत्र उवाच ।

कोऽयं तात!समायातःसौन्दर्येणाऽपरःस्मरः । व्यासादिभिर्मुनिवरैर्भृशंतस्मा

नारद उवाच ।

इत्याकर्ण्य स धर्मात्मा स्वस्यपुत्रस्यभाषितम् । वभाषे मुनिशार्दूलःपुत्रंनि

पितोवाच ।

वृहस्पतेः सुरगुरोः सुतस्तारोदरोद्भवः । वुद्धिमान्वुधनामाऽयं शशिवंशकरः

पुत्र उवाच ।

किं त्वया कथितं तात निःसम्बन्धपरं वचः । वृहस्पतेःसुतोयस्तुस कथं

जज्ञेऽनसूयया तात! विधुरत्रेर्मुनीश्वरात् । तस्य वंशस्य कर्त्ताऽयं कथं सुत

एष मे मानसे तात संशयो वर्तते महान् । तमपाकुरु विप्रेन्द्र! सन्दिहानस्य

पितोवाच ।

पुरा वृहस्पतेर्भार्या तारा नाम यशस्विनी । चन्द्रेणाऽपहृता तात वलाद्व

अपहृत्य तदानीं तां स्वगृहं विधिना गुरोः । भार्या सातुतयासार्द्धं रमितं

तस्या गर्भोऽभवत्तात कालेन कियता तदा । ततो वृहस्पतिर्भार्यां निजां तां

चन्द्रमाश्च मदाविष्टो न ददौ बलदर्पितः । ततो वृहस्पतिस्तात देवैः शक्रादि

सन्नद्धो योद्धुमारेभे समं वलवदिन्दुना । सहायार्थं विधोः शुक्रः समं

समागतस्तदा तात तस्मिन्रणसमुद्यमे । ततस्तारानिमित्तं वै युद्धं प्रावर्त

करिष्यते सर्वजनैः प्रधानं तारकामयम् । तस्मिन्युद्धे महाभीमे हता देवाश्च

न कस्यचिज्जयस्तात! वभूव न पराजयः । ततः समागतो ब्रह्मा सन्निवार्यो

ददौ वृहस्पतेस्तारां वोधयित्वा निशापतिम् । वृहस्पतिस्तुतांवीक्ष्यतारां

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

क्रुद्धो विरिञ्चेः प्रत्यक्षं समाजे देवदैत्ययोः ॥ २४ ॥

बृहस्पतिरुवाच ।

ण्व मामकं वाक्यं तारे तरललोचने !। कस्याऽयं ध्रियते गर्भो भवत्येन्द्रोर्ममाऽथवा

पितोवाच ।

मुहुर्मुहुः पृष्टा सा च लज्जावती शुभा । यदा न कथयामास किञ्चित्तात! तदग्रतः॥

ऽयं पश्यतां तेषां देवानां च सुरद्विषाम् । उत्पन्नस्तामुवाचेदं जननीं च रुषान्वितः

बुध उवाच ।

मात्र कथ्यते दुष्टे! मदीयो जनकस्त्वया । लज्जांविहाय सम्पश्य शापस्य ममवैभवम्

पितोवाच ।

त्वा जलमादाय यदा शप्तुं समुद्यतः । तदा सा मन्दमाहेदं पिता तव सुधाकरः ॥

क्तेच तयासाध्व्या चन्द्रःस्वतनयंबुधम् । अमुंगृहीत्वा सानन्दं जगामनिजमन्दिरम्

स्पतिस्तुतांतारांगृहीत्वास्वगृहं ययौ । ब्रह्मा देवाश्चदैत्याश्चतेऽपि स्वं स्वंगृहं ययुः

ते सर्वमाख्यातंयस्त्वं मास्परिपृष्टवान् । बृहस्पतिस्त्रियां जातोयथाऽयं चन्द्रवंशकृत्

नारद उवाच ।

ाकर्ण्य पितुर्वाक्यं जहासोच्चैर्मुनेःसुतः । उवाचचस्वपितरं कुण्डोऽयंस्वैरिणीसुतः

चचपिता पुत्रं हापुत्रेदंन भण्यताम् । सर्वसत्त्वान्तरज्ञोऽयं शप्स्यतित्वांत्वदुक्तकित्

नारद उवाच ।

युक्ते तेन मुनिना चान्द्रिर्ज्ञात्वातदीरितम् । सर्वेषां शृण्वतांप्राह मुनीनामिति भूपते!

बुध उवाच ।

वन्तुमुनिशार्दूला भवन्तोममभाषितम् । यदिसाध्वथ वाऽसाधु विचारयतमाचिरम्

तां तत्त्वबुद्धीनां दर्शनार्थमिहाऽगतः । कृतवान्कस्यचिन्नाऽहमपराधं मनागपि॥३७॥

यथा किमर्थं मामवजानन्ति दुर्मदाः । स्वजन्मसफलत्वाय भवद्दर्शनलालसः ॥३८॥

भाव एव दुष्टानां साधूनपि निरेनसः । उद्वेजयन्ति यत्काऽपि मिष्टवाचः पिकाइव॥

स्वभावं न मुञ्चन्ति दुष्टाः सत्सङ्गमादपि । गङ्गाम्बुसङ्गमेनाऽपि क्षारतामिव नीरधिः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अहोव्याधस्यदुष्टत्वं मुनिवृत्तीन्यद्धो मृगान् । वने मृगचरान्हन्ति निजा...
मत्स्यैः किमपराद्धंहि धीवराणांदुरात्मनाम् । यज्जले ध्नरतस्तीर्थे घ्नन्ति...
साधवोऽपिनं मुञ्चन्ति स्वभावंदुष्टसङ्गताः । वृताविषाग्नियुक्तसर्पैःश्रीखण्ड...
परोदयेऽपि नृत्यन्तिकिंस्वपक्षस्य साधवः । यथोन्मना मुनिवरा वारिवा...
धारयन्ति परार्थे हि निजान्तमपि साधवः । पितृदेवमनुष्याणामर्थे मति...
निजोदयस्तुसाधूनां स्वच्छस्याऽऽनन्दहेतवः । यथाकुमुदपुष्पाणांमतिपतु...

नारद उवाच ।

इत्युदीर्य वचः क्रोधाद्बुधस्तं मुनिबालकम् । शशापेति त्वमप्याशु कुण्डो...
एवमाकर्ण्यतं शापं पिता बुधविसर्जितम् । स्वपुत्रं पातयामास तदङ्घ्र्यो...
उवाचच न जानाति बालोऽयं तव वैभवम् । नोचितं क्रोधकरणमस्मिन्बा...
कुतश्चित्कारणात्साधोः क्रुद्धस्य प्रकृतिः क्षमा । हुताशनप्रतप्तस्य शीतत्व...
अतःक्षमां विधायाऽऽशुविधेह्यस्मिन्ननुग्रहम् । बाले विवेकरहिते क्षमासा...

नारद उवाच ।

इत्युक्तस्तेन मुनिना शीतांशुतनयस्तदा । क्रोधंतत्याज शान्तात्मा चक्रे त...

बुध उवाच ।

अयं तव मुने! बालः कुण्डत्वं प्राप्य भूतले । दत्तयज्ञोपवीतःसल्लँप्स्यते हि...
एवं स मुनिपुत्रो वै बुधशापान्नृपोत्तम !। कुण्डत्वमाप्तवान्भूमौ पितरो येन...
इदं पवित्रं माहात्म्यं श्रुत्वा मधुवनस्य वै । समस्तमश्वमेधस्य फलं प्राप्...
ये नरा धारयन्त्यस्य माहात्म्यस्याऽर्थमुत्तमम् । हृदये यत्र तत्तेषां विषये...
येपठिष्यन्तिमाहात्म्यंश्रोष्यन्तिचमहाधियः । देहान्तेविष्णुसालोक्यंगमिष्य...

इदमनिशपवित्रं तुभ्यमावर्णितं मे मधुवनसुचरित्रं श्रीपतेः प्री...
कलिकलुषकलापच्छेदने दक्षमक्षोत्पथगमननिरासे कारणं पु...

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे ...
माहात्म्ये मधुवनवर्णनं नाम पञ्चादशाधिकद्विशततमोऽध्यायः ॥ २...

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# षोडशाधिकद्विशततमोऽध्यायः

## दरिकाश्रममाहात्म्यप्रसङ्गे देवदासराज्ञः स्वपुत्रेणसहसम्वादस्तं राज्यधुरं-समर्प्यराजमहिष्यासहमुनिवृत्याचरणायगमनंमध्येमार्गसिद्धद्वारा-वैशिष्ट्यप्रतिपादनम्

नारद उवाच ।

मधुवनाद्राजन्नयं बदरिकाश्रमः । एकादशधनुर्मात्रे भूभागे व्यवतिष्ठति ॥ १ ॥
य तीर्थवरस्याऽहंमहिमानंमहाद्भुतम् । वर्णयामि पुरस्तात्ते यं श्रुत्वा मुच्यतेभयात्
स्तु मगधे राजन्देवदासो हि नामतः । ब्राह्मणः सत्यवादान्तः साक्षाद्धर्मइवाऽपरः
णातः सर्वविद्यासु बृहस्पतिरिवाऽपरः । हरिसन्तोषको भक्त्या प्रह्लाद इव दैत्यराट्
िकोऽपि स्मरं जेता पार्वत्याइववल्लभः । सदाचारपरोनित्यं विश्वामित्रोमुनिर्यथा
शगृहे मान्यो द्रोणवत्कुरुवेश्मनि । दानशीलः सुपात्रेषु बलिर्दैत्याधिपो यथा ॥
भार्योत्तमा नाम लक्ष्मीरिव गुणोत्तमा । पतिशुश्रूषणपरा यथा जनकनन्दिनी ॥
कश्च सुतो राजन्नङ्गदो नाम बुद्धिमान् । एकापुत्री तु बलया नाम सल्लक्षणान्विता
ज्यायान्सुतः कन्या तस्माद्भूप! कनीयसी । तयोर्यथाक्रमं चक्रे विवाहं स द्विजोत्तमः
हिता तु सा कन्या ययौ श्वशुरवेश्मनि । शुभलक्षणसम्पन्ना कालेन कियता नृप!
रस्तु महाबुद्धिर्गृहभारं बभार ह । पितृवत्सर्वशास्त्रज्ञो यौवनश्रीविभूषितः ॥११॥
दा स तु विप्रेन्द्रः पुत्रं तं गृहकर्मणि । क्षमं विज्ञाय राजेन्द्र! निजभार्यामुवाच है ॥

देवदास उवाच ।

कर्णय मे साध्वि! कालेऽस्मिन्नुचितं वचः । ततो यदुचितं भद्रे! तदहायविधीयताम्
जरा समायाता शरीरं पातयिष्यति । अङ्गान्याकम्पयन्तीव वात्या पक्वफलं यथा
णामपि द्युतिं मन्दां नूनमेषा करिष्यति । नक्षत्राणां सचन्द्राणां प्रातर्वेलेव सुव्रते!

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्खलतोः पादयोर्मन्दां गतिं प्रतिपदक्रमम् । करिष्यति जरा ह्येषा यथा [illegible]

तस्मादेषा जरा यावन्न प्रौढा जायते शुभे ! ।
आत्मनस्तावदावाभ्यां करणीयं हि तं द्रुतम् ॥ १७ ॥

गृहपुत्रसुहृद्भ्रातृपितरो हि विनश्वराः । द्रव्यादिकं च सुभगे! तेषु सङ्गेः [illegible]
अतोऽहं सर्वतीर्थेषु पर्यटन्विजितेन्द्रियः । वानप्रस्थेन विधिना वीक्षिष्ये [illegible]
ततः संन्यासमादाय कचित्तीर्थोत्तमे शुभे । प्रारब्धकर्मणामन्ते त्यक्ष्यामि [illegible]

एवं चेत्प्राणमुक्तः स्यान्मुक्तिः स्यान्नाऽत्र संशयः ।
मम श्रीपतिपादाब्जसम्यक्स्थापितचेतसः ॥ २१ ॥

उत्तमोवाच ।

पुमान्वा स्त्रीजनो वाऽपि को रमेत विनश्वरे । संसारेमाधवंमुक्त्वानित्या [illegible]

तस्मान्मामपि जीवेश ! त्वत्पादाम्बुजसेविनीम् ।
नीत्वा स्वसङ्गमे तावद्विश्वाब्धेराशु तारय ॥ २३ ॥

पुत्रोऽयमङ्गदः श्रीमान्गृहभारस्य धारणे । समर्थोऽभूत्स्नुषा चेयं कल्याणी [illegible]
पुत्रे समर्थे यो मूढः पुरुषःस्त्रीजनोऽथवा । नविरज्यंत यो मूढो वञ्चितः [illegible]

नारद उवाच ।

एवमन्योन्यमामन्त्र्य दम्पती तौ रहस्तदा । पुत्रमाहूय कथयाञ्चक्रतु [illegible]

दम्पतीऊचतुः ।

जरागमश्लथद्गात्रावावां विद्धि त्वमङ्गद !। स्वश्रेयसे यतिष्यावः कुत्रचि [illegible]
हरेराराधनं भक्त्या श्रेयः परममुच्यते । तदर्थमेव निष्कामा यतन्ते [illegible]
विषयेषु न संसक्तिः समत्वं सर्वजन्तुषु । येषां हर्षविषादौ च न जातु [illegible]
तएव साधवो लोके गोविन्दपदसेविनः । तेषां दर्शनमात्रेण कृतार्थो [illegible]
तीर्थानि पर्यटन्धीरस्तद्दर्शनसमुत्सुकः । भाग्योदयेन केनाऽपि तद्दर्शन [illegible]
तस्माद्भारं कुटुम्बस्य भुजयोर्युगदीर्घयोः । आरोप्य नौ विसर्जस्व तीर्था [illegible]
तीर्थयात्राप्रसङ्गेन कदाचित्साधुदर्शनम् । भवेद्यदि तदा पुत्र ! ह्ययोर्नौ [illegible]

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नारद उवाच ।

इत्युक्तः पितृभ्यां पुत्रः साधुवादमवादयत् ॥ ३४ ॥

अङ्गद उवाच ।

...स्तकुलनिस्तारो भवद्भ्यामयमीरितः । आशु मामत्रजानीतं किंकरोमि भवद्धितम्
...माज्ञाकरो नित्यं युवयोः पूज्यपादयोः । पुण्यतीर्थेषु दानार्थं गृहीतं धनमुत्तमम् ॥
नयतं मामपि प्रेष्यं सेवार्थै निजसङ्गमम् ॥ ३६ ॥

नारद उवाच ।

...युक्त्वा धनमादाय गत्वा क्रोशद्वयं तयोः । सङ्गे गृहमगात्ताभ्यां कथञ्चित्संनिवर्तितः
गृहीत्वा धनं किञ्चिद्विष्णुर्नौप्रीयतामिति । कन्दमूलफलाहारौतत्रोषित्वादिनत्रयम्
... तस्मात्प्रचलितौ दम्पती जगतीपते !। तदामार्गे महान्कश्चित्सिद्धःसम्मिलितस्तयोः
ताभ्यामुभाभ्यां शिरसा वन्दितः स उपाविशत् ।
उपविष्टस्तदा ताभ्यामिति पृष्टः स सिद्धराट् ॥
को भवान्कुत आयातो किञ्चिकीर्षति तद्वद ॥ ४० ॥

सिद्ध उवाच ।

...द्धोऽहं तापसश्रेष्ठ! कल्पग्रामे गृहं मम । इन्द्रप्रस्थात्समायातो दृष्टं तत्र महाद्भुतम् ॥
तत्राऽस्ति कपिलः सिद्धो नारायणसमो गुणैः ।
तस्मादहं पठन्साङ्ख्यं निवसामि तदाश्रमे ॥ ४२ ॥

...दा मद्गुरुः श्रीमान्स्वाश्रमात्कपिलो ययौ । वदर्याख्यंमहापुण्यं स्नातुं सयमुनाजले
...कोऽरण्यमहिषस्तृषार्तो यमुनाजले । प्रविष्टो जलमापीय पूर्वजन्मस्वमस्मरत् ॥४४
...त्वा स पूर्वकर्माणि महिषोऽरण्यसम्भवः । जलान्निःसृत्य तरसाववन्दे कपिलंगुरुम्
...च नरवाचा च मयि शृण्वति तापस !। यत्तत्ते कथयाम्यद्य शृणु त्वं परमाद्भुतम्

महिष उवाच ।

...मो विष्णुकलाभूत! सिद्धानां कपिलेश्वर !। किंनामेदं महातीर्थं नताय कथयस्व मे
...य तीर्थवरस्याऽम्बुस्पर्शाद्वैपूर्वजन्मनि । जातास्मृतिर्महाभाग! पापस्याऽपिचकर्मणः



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सिद्ध उवाच ।

एवमाकर्ण्य तद्वाक्यं महिषस्य महामुनिः । जानन्नपि च तद्वृत्तं विहस्येद

कपिल उवाच ।

भवान्महिषशार्दूल! क आसीत्पूर्वजन्मनि । तत्र किं कृतवान्कर्म योनिर्येनाऽऽ

महिष उवाच ।

शृणुष्व मुनिशार्दूल! वृत्तं वै पूर्वजन्मनः । अहमासं पुरा राजा कलिङ्गवि
स्वां परां नैव जानामि योषितं काममोहितः । वणिजां साधुवृत्तीनां धनहर्ता
निशीथे नगरे राजन्गतभीः पर्यटाम्यहम् । सुन्दरीभिः परस्त्रीभिः क्रीडितुं
यद्गृहे सुन्दरीं नारीं पश्यामि स्मरमोहितः । वसामि निशि तत्राऽहं क्षेत्रेऽमत्ये
क्रीडित्वा तत्र निःशङ्कं धनं हृत्वा च तद्गृहात् । स्वगृहं पुनरायामि कियद्भि
उपविष्टः सभामध्ये दिवा द्वौ पुरबालकौ । अनार्यबाहुयुद्धेन योधयामि

नियोजयति यो बालस्तं मत्वा धनिनं बलात् ।
गृह्णामि तत्पितुर्वित्तं स्वल्पं वा भूरि वा मुने ! ॥ ५७ ॥

यः पराजयते तत्र कातरत्वान्महामुने ! । नाऽयमर्हः पुरे स्थातुं ममेति वि
एवम्मय्यधमाचारे वर्त्तमाने महीपतौ । पौरा नगरमुत्सृज्य प्रययुर्विषयान्
एकदा मुनिशार्दूलो दुर्वासाः पर्यटन्महीम् । पुरे मम समायातो दुर्वासा
मिलित्वा नागराः सर्वे तदा जग्मुस्तदन्तिके । प्रणिपत्येदमाहुस्तं स्वदुःख

पौराऊचुः ।

आत्रेय मुनिशार्दूल कृपां कुरु कृपानिधे !। अधर्मनिरतं भूपमेनं धर्मेण्योज
भाग्योदयेन केनाऽपि भवानस्माकमागतः । उद्वेलाद्भूपदुःखाब्धेरस्मांस्तार
धनं लोभयता तेन हृतं नो मुनिपुङ्गव !। दूषिताश्च स्त्रियः साध्व्यः सकामैव
दशवत्सरदेशीया बहवः शिशवो हताः । अगण्यवैगुण्यनिधिरेष भूपो महा

महिष उवाच ।

एवमाकर्ण्य पौराणां वचः स मुनिरत्रिजः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दण्ड्योऽयमिति सञ्चिन्त्य सभास्थं मामथाऽऽययौ ॥ ६६ ॥
हि तं समायान्तमवधूतं दिगम्बरम् । आवारयमहं भृत्यैर्नैत्ययं दर्शनोचितः ॥६७॥
ा सर्वलिप्ताङ्गो महिषाकृतिरेव वै । वार्यतामितिपार्श्वस्थान्बहुशोऽहं समादिशम्
ते तरसा भृत्यास्तं वारयितुमभ्ययुः । हुङ्कारेणैव तान्सर्वान्स चक्रेभस्मसान्मुनिः
श्वंरक्षतःस्वस्य पितुस्त्वमिवसागरान् । सर्वशस्तानहंभृत्यान्भस्मीभूतांस्तुतेजसा
क्ष्य सहसोत्थाय गृहमावेष्टुमुद्यतः । रेरेपापेति सम्बोध्य ततो मां मुनिसत्तमः ॥
पेति महारण्ये महिषो भव साम्प्रतम् । तेनाऽहमिति शप्तो वै मुक्त्वा राजतनुं तदा
शे महारण्ये जातोऽहं महिषो मुने !। चिरकालमहं तत्र न्यवसं मुनिपुङ्गव ! ॥७३
ऽऽगतस्तु केनाऽहं पुण्येन श्रूयतां मुने !। वापीकूपसरस्यस्तु बहवः कारिता मया
कारादिवृक्षाणामारोपो विहितः पथि । पुण्येनाऽनेन मे देव! पातो न नरकेऽभवत्
स्य च मया प्राप्तो ह्यमुष्यजलसङ्गमः । एतत्ते कथितं सर्वं पूर्वजन्मशुभाशुभम् ॥
तीर्थंमया प्राप्तमेतद्योनिश्चमाहिषी । अस्य तीर्थवरस्याऽम्बुस्पर्शाज्जातिस्मरोऽभवम्
कथमस्या असद्योनेर्मुक्तिः स्यात्तन्मुने! वद ॥ ७७ ॥

कपिल उवाच ।

तीर्थं महापुण्यं बदर्याख्यं रमापतेः । अत्र स्नाहि द्रुतं कामं स्वचित्तस्थं हि लप्स्यसे

सिद्ध उवाच ।

श्रुत्वा वचस्तस्य महिषस्य महामुने !। तत्र तीर्थे वरे स्नातुं प्राविशत्स्वर्गवाञ्छया
वा स्वर्गेच्छया तस्मिञ्जलात्तटमुपागते । तत्क्षणं गजमारुह्य शक्रःस्वर्गात्समाययौ

इन्द्र उवाच ।

लिङ्गपते नैजं देहं जहि हि माहिषम् । प्रतिलभ्य वपुर्दिव्यं सममायाहि मे दिवम्॥
त्वया स्वर्गेच्छया स्नातं प्राप्तं तत्ते सुरास्पदम् ॥ ८१ ॥

सिद्ध उवाच ।

कःस तदा तेन त्यक्त्वा देहं तु माहिषम् । दिव्यं वपुःसमासाद्यगजराजं समारुहत्
जं समारुह्य स्थित्वा च गगनेक्षणम् । प्रणम्य शिरसादेवं तुष्टाव कपिलं मुनिम्

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कलिङ्ग उवाच ।

नमस्ते परमेशान! केवलज्ञानहेतवे । सेतवे वेदविद्यानां रिपवे तद्विरोधि
त्वत्तः प्रवृत्तिः साङ्ख्यस्य जाता तत्त्वावबोधिनी ।
देहिनां मायया ग्रस्तचेतसामपि ते विभो ! ॥ ८९ ॥

येवेदविहितंत्यक्त्वावर्तन्तेस्वेच्छयामुने!। तान्दण्डयसिदण्डयांस्त्वंमत्र
इन्द्रादयो लोकपालाःसर्वे त्वदधिकारिणः । त्वदिच्छामनुवर्तन्ते भीता
त्रयीधर्मविरोद्धारः पूर्वदेवा युगे युगे । अवतीर्य विनाशाय कृताःसर्वा
ये ये त्वया हता नाथ!चक्रिणा त्रिदशारयः । ते ते तमोमयीं हित्वा तनुं
आज्ञापय जगन्नाथ गन्तुं मां त्रिदशालयम् । अनुगृह्णीष्व शक्रं च नमन्तं
प्रसादात्तवदेवेश!बदर्याख्यस्यच प्रभो !। तीर्थस्य स्वतनुं हित्वा तामसीं
इन्द्रेणसह नागेन्द्रमारुह्य त्रिदशालयम् । गच्छामि स्वेच्छया नाथ! कृपात

सिद्ध उवाच ।

इत्यभिष्टूय देवेशं कपिलं स कलिङ्गपः । नमस्कृत्य च तत्पादौ जगाम
एतन्मयाऽद्भुतं विप्र दृष्टं बदरिकाश्रमे । गुरुंशुश्रूषमाणेन पापस्याऽपि
नाऽतःपरं त्रिलोक्यान्तु तीर्थं सर्वार्थदायकम् । याहितत्रैव सस्त्रीकः
अहंयामि समानेतुं बदर्याख्यं गृहान्द्विज !। वृद्धं स्वकीयपितरं निःस्पृहं

नारद उवाच ।

इतितीर्थवरस्याऽस्य बदर्याख्यस्य भूपते !। महिमानं समुत्कीर्त्यस सिद्ध
अथ कालेन कियता सद्विजः सह भार्यया । तीर्थानि पर्यटन्धीर इन्द्रप्रस्थ
तेनैव वपुषा राजन्नीतवांस्तौ निजालयम् । ससिद्धोऽपि स्वपितरं गृहा
तत्रैव स्नापयामास तत्तीर्थे मोक्षकामुकम् । सोऽपि श्रीवासुदेवेन वृद्धः
ततो नीतो निजगृहं वृन्दारकविवन्दितः ॥ १०० ॥

इन्द्रप्रस्थान्तरगतमिदं सद्बदर्याख्यमीशः
स्नानाद्द्याद्खिलजनितामानसेष्टं पदार्थम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

माहात्म्यं ते नृप! नतिमते! वर्णितं तस्य पूतं
यच्छ्रुत्वा वै पतति न जनो मातृगर्भे कदाचित् ॥१०१॥

श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे कालिन्दी-माहात्म्ये बदरिकाश्रमवर्णनं नाम षोडशाधिकद्विशततमोऽध्यायः ॥२१६॥

---

# सप्तदशाधिकद्विशततमोऽध्यायः

## हरिद्वारमाहात्म्यवर्णनप्रसङ्गे कालिङ्गश्वपचवृत्तान्तमुखेनवैश्यवृत्तवर्णनम्

राजोवाच।

तंमे त्वयासाधो! माहात्म्यं बदरीभवम्। यन्निशम्य मनोयाति मम निर्मलतांमुने!
...श्रुतमाहात्म्यं शक्रप्रस्थाख्यमुत्तमम्। सकलं मुनिशार्दूल! चतुर्वर्गप्रदायकम् ॥२॥
...नाऽतः परं तीर्थं तिरश्चामपि मुक्तिदम्। श्रेष्ठं सकलपापघ्नं दर्शनादेव नारद!॥

एतदन्तर्गतस्याऽस्य हरिद्वारस्य नारद!।
माहात्म्यं श्रोतुमिच्छामि त्वत्तः सन्तोषकारकात् ॥ ४ ॥

...द्धर मुने! दीनमविद्याकामकर्मभिः। वर्णनेनाऽस्य तीर्थस्य शक्रप्रस्थगतस्य वै ॥

नारद उवाच।

...र्णय महाभाग वर्णयामि तवाऽग्रतः। हरिद्वारस्य माहात्म्यमश्वमेधफलप्रदम् ॥६
...ः श्वपचःपापो यथा स्वर्गतिमाप्तवान्। तत्तेऽहं कथयाम्यद्य शृणुष्वैकमनाःप्रभो!
...त्रे कुरुक्षेत्रे कालिङ्गइति विश्रुतः। श्वपचः पापकर्मा वै वसतिस्म पुराद्बहिः॥
...ड्वर्षदेशीयान्बालान्नगरवासिनाम्। प्रसह्य वञ्चयित्वा च वने नीत्वा जघान सः
...लङ्कारमयं रजतं हेमवन्नृप!। रत्नादिकं च कायस्थं हत्वा ताञ्गृहेऽधमः ॥१०॥
...रा साधुनिलये रात्रौ धनजिहीर्षया। पथिकान्धनमालक्ष्य स जघ्नेनिर्जने वने ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कुरुक्षेत्रे समायाता एकदा रविपर्वणि। नानादिग्भ्यो जना राजन्नानादानं...

तस्मिन्यथाविधि स्नात्वा रविपर्वणि भूपते!।
दानं दत्त्वा यथावच्च लोकाः स्वान्स्वान्गृहान्ययुः॥ १३॥

एकः कश्चिद्विशां श्रेष्ठो धनेन महता युतः। पश्चात्सर्वजनेभ्यस्तु चचाल...
अस्यचारः पदातीनां विंशतिं पुरतो दधत्। कालिङ्गः स महापापस्तमनु...
कतिचिद्वसतीर्गत्वा सह तेन विशाऽधमः। सोऽन्त्यजस्तद्धनं हर्तु न लेभे...
बलेनाऽपिग्रहीतुं न क्षमोऽभूत्तस्य स श्रियम्। वैश्यस्तुजनविंशत्या संयुक्तः...

अत्राऽऽगतः स पापात्मा वैश्यस्याऽर्थेन पार्थिव!।
निशिथे शिविरं तस्य धनं हर्तुं समाविशत्॥ १८॥

एकेन तस्य वैश्यस्य जनेन स तु लक्षितः। प्रविशन्नेव पापात्मा ददता प्रह...
तमालक्ष्य समीपस्थं स जनः प्रहरप्रदः। उभयोः पादयोराजन्स्वपन्नेव ...
तौ गृहीत्व जनानन्यान्बोधयन्प्रहरप्रदः। हस्तेनैव तु पापेन चोरेणाऽऽग्रा...
श्रुप्वा पलायमानस्तु गृहीतोऽन्यैर्जनैस्तदा। ग्रहीतारं पुनर्हत्वा सहसा स...
एकेन केनचिद्राजन्सेवकेन धनुर्भृता। दूरादेव शरेणाऽऽशु धावन्स निहतो...
हतमात्रः शरेणाऽऽशुतत्याज सचजीवितम्। चौरेण निहतौ राजन्वैश्यस्या...
ते त्रयो वरयानानि गणानीतानि भूपते!। समारुह्य दिवि स्थित्वा वैश्यं...

कालिङ्गवैश्यानुचराऊचुः।

भोभो वैश्यपते! साधो तीर्थमेतदनुत्तमम्। इन्द्रप्रस्थे हरिद्वारं शिवकृतं...
वयं त्रयः सुतीर्थेऽस्मिन्नपमृत्युगता अपि। गच्छामस्त्रिदिवं वैश्य साम्प्रतं...

नारद उवाच।

इत्युक्त्वा ते ययुः स्वर्गं शिवेशिवकृतांपदम्। यत्रेच्छयाहिलभ्यन्तेभोग...
अथ रात्रौ व्यतीतायांप्रातरत्रविशाम्वरः। स्वभृत्यदेहयोः कृत्वा दाहम...

तीर्थेऽत्र पात्यमानेषु भृत्यौतावस्थिषु प्रभो!।
स्वर्गात्पुनरिहाऽऽयातौतंवैश्यमिदमूचतुः॥ ३०॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भृत्यावूचतुः ।

भो वैश्यपते! साधो तीर्थेऽत्रमरणाद्भुवि । पापानामपि जन्तूनां स्वर्गप्राप्तिर्न संशयः

स्थले मृतस्यजन्तोश्चेत्पतन्त्यस्थीनि वारिणि ।
तीर्थस्याऽस्य तदा वैश्य ! सत्यलोके स्थितिर्भवेत् ॥३२॥
स्थले मृताभ्यामावाभ्यामस्थिपातेन वारिणि ।
सम्प्राप्ता ब्रह्मणो लोके स्थितिराब्रह्मसंस्थितेः ॥ ३३ ॥

लेमृतस्यचौरस्य पेतुरस्थीनिनाऽम्बुनि । यतोऽतःसविशांनाथतस्थौ वृन्दारकालये
याऽपिदेहमन्विष्यतीर्थेऽस्मिन्नाशुपातय । यथा सोऽपिसुरश्रेष्ठःप्राप्नुयान्नौगतिंपराम्
कारः सदा कार्यः परेषामपि साधुभिः । अपकारो न मन्तव्यः कृतो भृशमसज्जनैः॥

नारद उवाच ।

युक्त्वातौ महाभागौ गतौहरिपुरम्प्रति । हरिद्वारस्यतीर्थस्यसलिलेचाऽस्थिपातनात्
वैश्यस्तु महाभागस्तस्य चौरस्यविग्रहम् । दग्धुमन्वेषयामास न लब्धं तत्तु भूपते!
रात्रृत्य तत्रैव सर्वतीर्थशिरोमणौ । हरिद्वारे महाराज ! स सस्नाविति वाञ्छया ॥
मुत्पाद्य सत्पुत्रान्धर्मार्जितधनेन च । सन्तोष्य विप्रान्बन्धूंश्च विष्णुमाराध्यसेवया
त्रैव मरणं प्राप्य गच्छामि हरिमन्दिरम् । तीर्थराज!नमस्तुभ्यमेतत्कर्तव्यमस्ति ते
कामनया राजन्सवैश्यस्तत्रकामदे । तीर्थेस्नात्वा गतः सर्वैर्भृत्यैःस्वं समगाद्गृहम्
गत्वा सपत्न्यांतु पुत्रानुत्पाद्यबुद्धिमान् । धर्मोपार्जितवित्तेनतोषयामासबान्धवान्

भक्त्या परमया राजन्नाराध्य कमलापतिम् ।
तीर्थेऽस्मिन्मरणं प्राप्तो यतो वैकुण्ठमाप्नुयात् ॥ ४४ ॥

वै वर्णितोराजंस्तीर्थस्य महिमा तव । हरिद्वारस्य पुण्यस्य श्रवणेऽस्य फलं शृणु
रोगस्यदानेन माघेयत्फलमाप्नुयात् । जनस्तत्फलमाप्नोतिशृण्वन्माहात्म्यमस्यतु
चन्दनदानेन ब्रह्मसत्रेषु भोजनात् । यत्फलं तन्महिम्नोऽस्य श्रवणादेव कार्त्तिके॥

जागरे च प्रबोधिन्यांप्रहरे पश्चिमे नृप ! ।
यत्फलं तन्महिम्नोऽस्यतीर्थस्याऽऽकर्णनाद्भवेत् ॥ ४८ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

हरिद्वारस्य सदृशं शक्रप्रस्थगतस्य वै। न तीर्थं पृथिवीलोके चतुर्वर्गफलप्रदं
इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे
माहात्म्ये हरिद्वारमहिमवर्णनं नाम सप्तदशाधिकद्विशततमोऽध्यायः ॥

---

# अष्टादशाधिकद्विशततमोऽध्यायः

विदर्भनगरस्थमालवब्राह्मणकथामुखेन तद्द्वारास्त्रस्त्रसुःसुतायगोदा
सुवर्णदानं गृहंतेनप्रतिगच्छतास्वभ्रातुर्भरतस्यक्षतशरीरस्यकारण

नारद उवाच।

भूयः श्रृणु महाभाग! माहात्म्यं परमाद्भुतम्। अत्रस्थितस्यतीर्थस्यपुष्करस्य
प्रसादात्तस्य तीर्थस्य विष्णुः सर्वसुरेश्वरः। प्रसन्नः पुण्डरीकस्य मासमेकं
अत्र मुक्तिं तदनुजो लेभे पापरतोऽपि हि ॥ २ ॥

शिविरुवाच।

कः पुण्डरीको धर्मात्मा कृतंतेनच कर्म किम्। येन प्रसन्नोभगवांस्तद्गृहेमा
कथं तदनुजः प्राप पापात्माश्रीहरेः पदम्। तीर्थस्याऽस्यप्रसादेन सर्वमाख्या
श्रृण्वतोऽस्य न सन्तोषो माहात्म्यं मम जायते ॥ ५ ॥

नारद उवाच।

विदर्भनगरे राजन्मालवाख्यो महायशाः। ब्राह्मणो ब्रह्मविच्छान्तो विद्वान्वि
देवर्षिपितृभूतानां मानुषाणां च पोषकः। विषयेषु न संसक्तो लोभमोहादि
स एकदा महाभाग! सिंहं प्राप्ते वृहस्पतौ। गोदावरीं महापुण्यां स्नातुं प्रति
दातुं तत्र सुवर्णस्य गृहान्निन्ये पलायुतम्। गच्छन्पथि स धर्मात्मामनसैव

मालव उवाच।

गृहाद्दानार्थमानीतं मया हेमपलायुतम्। यस्मै कस्मै न दातव्यं दातव्यं पूज

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कञ्चनाय विप्राय पात्रायाऽनुपकारिणे । पूज्याय देशे कालेच दत्तमक्षयताम्व्रजेत्
उञ्छवृत्त्या समानीतं दत्त्वा दुर्वाससे मुनिः ।
शिलोञ्छवृत्तिर्धर्मात्मा स्वं त्यक्त्वाऽगात्परं पदम् ॥ १२ ॥
वेन्द्रोबलीराजापात्रंविज्ञायवामनम्।विपक्षायाऽप्यदात्तस्मैत्रिलोकींस्वभुजार्जिताम्
ात्पात्राय दातव्यं धनं धर्मार्जितं मया । गोविन्दतुष्टयेसम्यग्वाञ्छनीयंनतत्फलम्
ड्रीकस्तुधर्मात्माभागिनेयोगजाह्वयात्।आयास्यतिमयाऽऽहूतःसर्वपात्रशिरोमणिः
ीतस्य धनस्याऽर्द्धं तस्मैपात्रायसूनवे । स्वसुर्दास्यामिशेषंतुश्रोत्रियेभ्योयथाविधि

नारद उवाच ।

विचिन्त्यधर्मात्मा मालवः स द्विजोत्तमः । कतिचिद्वासरैःप्राप्तःपुण्यांगोदावरींनृप
ोतस्तस्यधर्मात्मा पुण्डरीकःस्वसुःसुतः । तस्य वै पूर्वमायातो मालवस्यमहीपते!
त्र विधिनास्नात्वा सिंहसंक्रमवासरे । पुण्डरीकाय वित्तार्धं ददौमे प्रीयतां हरिः॥
डरीकोऽपिधर्मात्मास्नात्वागोदावरीजले । स्ववित्तस्यचतुर्थांशंश्रोत्रियेभ्योददौमुदा
स तत्र विधिवत्स्नात्त्वा दत्त्वा दानं च शक्तितः ।
गच्छन्तं स्वगृहान्राजन्नित्युवाच स्वसुः सुतम् ॥ २१ ॥

मालव उवाच ।

न्प्रति नमस्कारो वाच्य आशीर्लघून्प्रति । यथावयोर्हि संयोगः क्षणिकोऽयंबभूवह
हि सर्वजन्तूनां पुत्रदारादिभिः सह । तस्मात्क्षणिकसंयोगात्संसाराद्यः सुधीर्नरः
ज्येत कृपापात्रं स हरेः स्याद्विनिश्चितम् । कृपातःश्रीहरेःप्राणीसत्संगमरतो भवेत्
स्तस्य हरेर्लीलाश्रवणेच्छा हि जायते । श्रुत्वाचकीर्तितास्सद्भिर्हरिलीलाअपिस्वयम्
पृहं कीर्तयत्येव ततः स्मरति केवलम् । ततस्तस्य भवेत्प्रेम गोविन्दपदसेवने ॥
स्ततस्तरत्याशु पोतेनेव महार्णवम् । एतदर्थं हि साधूनां ज्ञानिनां कर्मिणां तथा ॥
यत्नो भवति धर्मात्मन्नपि त्वं यत्नवान्भव ॥ २७ ॥

नारद उवाच ।

मुक्त्वा स वैदर्भः सुतं कथमपिस्वसुः । विसृज्याऽश्रुमुखोबाष्पपर्याकुलदृशंययौ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पुण्डरीकोऽपि धर्मात्मा चचालस्वगृहम्प्रति । कतिभिर्वासरै राजन्नागतोऽत्रशुभा
भरताख्यं कनीयांसंभ्रातरं पतितं भुवि । श्वसन्तं क्षतनिर्गच्छद्रुधिराक्तमवैक्षत ॥
पप्रच्छ च रुदन्नुच्चैर्भ्रातःकेनेदृशीं दशाम् । गमितोऽसि किमर्थं वा गृहादिह सम
इति पृच्छति राजेन्द्र! पुण्डरीके सपीडया । महत्या भरतः सद्यः पीडितोऽसूनमु
अवातरत्तदा यानमेकं सगणमद्भुतम् । आकाशात्पश्यतां भूप ! जनानां तद्गुरो
तदारुह्य स दिव्याङ्गे भरतः पापकार्यपि । उवाच वचनं ज्येष्ठं भ्रातरं विनम

भरत उवाच ।

पुण्डरीकमहाबुद्धेतीर्थस्याऽस्यप्रसादतः । पुष्करस्य मयाप्राप्तापापिनाऽपिदिवि
मदीयं दारुणं कर्म भ्रातर्जानासि यद्यपि । तथाऽपि कथयाम्यद्य किञ्चिदज्ञातमलि

यथा मया प्रभावत्या वेश्यया रमितं सह ।
तद्गृहव्ययितं भूरि धनं च मदिराकृते ॥ ३७ ॥

द्यूतेन हारितं यच्च चौरकर्मसमार्जितम् । शिवरात्र्यां मया शम्भुनिर्माल्यं यच्चभ
यत्कृते भवता विप्रो जम्बुकोनाम दूषितः । एतन्मया कृतं कर्म विदितं पुण्डरीक!
गोदावरीं गते भ्रातस्त्वयि यत्कृतवानहम् । न तत्ते विदितं कर्म कथयामि तदप्य
चलिते त्वय्यतिक्रान्तो यदा पक्षस्तदाह्यहम् । श्रुतवानित्तिलोकेभ्यो वचनंहरिदु
पुण्डरीको धनं दातुमाहूतो मातुलेन हि । निजसोदरमाहत्य पुण्डरीकं तदाह
ग्रहीष्यामि धनं भूरि मालवेन समर्पितम् । महता वसुना तेन तोषयामि प्रभाव
दुरोदरेण क्रीडामि स्वेच्छया तद्विदैःसह । इत्यालोच्यत्वदध्वानंनिरुध्याऽहमिह
हत्वा त्वां च धनं भूरि ग्रहीतुं च महामते !। अतिक्रान्तेजने भ्रातःकुतश्चित्सार्थ
वणिजामत्र सुप्तोऽहं रात्रौ तत्र महामते !। अथ कश्चिन्निशीथेतु तस्करो वणिजा
हर्तुं तत्र समाविष्टः सार्थे जनसमाकुले । नीत्वा यदा धनं किञ्चित्सचौरस्तुपल

तमन्वधावन्सहसा क्रोशन्तइव सेवकाः ॥ ४७ ॥

सेवकाऊचुः ।

गृह्यतां गृह्यतामेष चौरोऽयं याति सत्वरम् । मध्याद्बहूनामस्माकमपहृत्य धनं

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भरत उवाच।

इत्याकर्ण्य वचस्तेषां पुरतस्तु तमन्वहम्। अधावं सहसा भ्रातस्तद्ग्रहीतुं जिहीर्षया॥
ततस्ते वणिजां भृत्या ज्ञात्वा मां तस्य रक्षकम्। प्रजह्रुस्तरसासर्वेसखड्गं खड्गपाणयः
तेषु कश्चिद्द्विजश्रेष्ठो ब्राह्मणोऽहमितिब्रुवन्। खड्गेन शितधारेण मया पापीयसा हतः
वणिजां सेवकैस्तैस्तु खड्गधारैरहं हतः। गतास्ते वणिजः प्रातर्निजगन्तव्यनीवृतम्॥
ततो भवानिह प्राप्तः श्वसन्तं मां ददर्श ह। चलद्रुधिरलिप्ताङ्गं पीडामोहविचेतनम्॥
इत्येतत्कथितं भ्रातर्यदर्थमहमागतः। अपमृत्युं यथा प्राप्तस्तच्चाऽपि कथितं मया॥

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे कालिन्दीमाहात्म्ये अष्टादशाधिकद्विशततमोऽध्यायः॥ २१८॥

---

## एकोनविंशत्यधिकद्विशततमोऽध्यायः

### पुण्डरीकभरतसम्वादे पुष्करतीर्थमहिम्नासहप्रयागमहत्त्ववर्णनं कथाप्रसङ्गेन-पुण्डरीकगृहेमासंयावद्विष्णुनिवासवर्णनम्

नारद उवाच।

इत्याकर्ण्य वचस्तस्य पुण्डरीको महामनाः। उवाच निजबन्धुंतंशृण्वतांनिजसङ्गिनाम्

पुण्डरीक उवाच।

केन पुण्येन तीर्थेऽस्मिन्मृत्युर्भरत! तेऽभवत्। यदि जानासि तद्ब्रूहिपापंविख्यातमेवते

भरत उवाच।

पुण्डरीक! शृणुष्वेदं कथयामि तवाऽग्रतः। एतत्तीर्थप्रदं पुण्यं कृतं यदिह जन्मनि॥३॥
एकदा तु धनं जित्वा समागच्छन्निजं गृहम्। अपश्यं मृतकं बालंमृतस्याऽनाथमापणे
निधाय तमहं मूर्ध्नि नीत्वा गङ्गातटे शुभे। वस्त्रादिभिरलङ्कृत्यचक्रेदाहादिसत्क्रियाम्

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

द्यूतेनोपार्जितं द्रव्यं तत्सर्वं व्ययितं मया। तेन पुण्येन प्राप्तं मे तीर्थमेतच्छुभावहम्।
कुरु त्वं मम देहस्य संस्कारं दाहपूर्वकम्॥ ६॥

श्रीनारद उवाच।

संस्कारे विहिते राजन्भरतः पापवानपि। तीर्थस्याऽस्य प्रसादेन पुष्करस्यगतो
मासमेकं यथा विष्णुः पुण्डरीकगृहे हरिः। उवासाऽस्यप्रसादेनतीर्थस्यश्रृणुसाम्प्रतम्।
अत्र तीर्थे स धर्मात्मा भरतस्याऽपि सद्गतिम्।
दृष्ट्वेति हृदये मेने तीर्थमेतत्तु कामदम्॥ ६॥

अत्रेतिवाञ्छया सस्नौ पुण्डरीकः स पण्डितः। माघमासं स्वरूपेण हरिर्वसतु मे गृहे
एवं स्नात्वा सकामेन ययौ निजगृहं प्रति। तीर्थेऽत्र नृपतिश्रेष्ठ! पुण्डरीकोऽखिलान्
बन्धुभ्यो मरणं भ्रातुर्भरतस्य जगाद ह। तेऽपि श्रुत्वा शुचं चक्रुर्माययाऽऽवृतबुद्धयः
पुण्डरीकस्तदाकुर्वन्गृहे स्वस्मिन्निजक्रियाः। उवासेति महानन्दस्तपस्यायास्यते हरिः
पूर्णिमायामथो पौष्यां चक्रे स परमोत्सवम्। मत्वेति श्वोगृहेमह्यं हरिरायास्यतिप्रभुः
श्रीखण्डजलसेकेन गोमयालेपनेन च। मुक्ताचूर्णचतुष्केण समस्कुरुत केतनम्॥
शतद्वयं ब्राह्मणानां नानाभोज्यैरभोजयत्। वस्त्रीभिर्दक्षिणाभिश्च तानेव समतोषयत्।
नानावादित्रकुशलैः कलकण्ठैश्च गायनैः। रजन्यां स्वजनैर्गायंश्चक्रे जागरणं तथा।
अथ प्रभाते तान्सर्वान्गायनादीन्विसृज्यसः। गोविन्दागमनाकाङ्क्षी गृहमध्यउपाविशत्
अथ तस्य गृहाभ्यासे निवर्त्य निजवाहनम्। प्राविशद्गृहमध्येतुकर्तुंस्वजनवाञ्छितम्
स पुण्डरीकस्तं दृष्ट्वा माधवं समुपागतम्। उत्थायाऽऽसनतस्तूर्णं ववन्दे शिरसा
उवाच च स धर्मात्मा गोविन्दालोकनिर्वृतः। सम्पूज्याऽर्घादिदानेनविष्टरेतंनिवेश्य

पुण्डरीक उवाच।

भवता भवतापघ्नं सुस्पष्टं तदनुष्ठितम्। तावदत्र त्वया विष्णोस्थीयतां स्थितिकारिणा
यावदस्य पुनीतस्य समाप्तिस्तपसो भवेत्। यत्र त्वं सेवकास्ते च वसन्ति परिवर्य
तत्रैव खलु वैकुण्ठः सर्वदोषविवर्जितः। यद्गृहे तव कर्माणि वर्ण्यन्ते साधुभिर्विभो
हरिर्निवसते तत्र सन्मुखादिति नः श्रुतम्। येषां वचसि ते नाम हृदि रूपं च सुन्दरम्

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कर्णयोश्च गुणारोपस्तएव खलु साधवः। भवतो भवति स्वान्तं येषां शुश्रूषणे विभो!
उत्तमाङ्गे च निर्माल्यं त एव खलु साधवः।
येषां तु बुद्धिः शत्रौ च मित्रे च कमलापते!॥ २७॥
चयापचययोश्चैव त एव खलु साधवः। येषां विकुरुते चेतो न विकारस्य कारणे॥
सति लक्ष्मीपते! नूनं त एव खलु साधवः। यत्र त्वं माधवस्तत्र सन्तोयत्र ततो भवान्
अतो विज्ञापयामि त्वां माघे मम गृहे वस॥ २६॥

नारद उवाच।

इत्याकर्ण्य वचस्तस्य पुण्डरीकस्यमाधवः। उवाच वचनं भासादन्तानां भासयन्दिशः

श्रीभगवानुवाच।

साधूनामुत्तमः साधुस्त्वंपृथिव्यांमहामते!। यत्त्वया पुण्यतीर्थेतु स्नातंमत्सङ्गवाञ्छया
उत्तिष्ठ जाह्नवीतोये माघेस्नानं कुरुद्विज!। माघान्ते स्नापयामित्वां पूर्णिमायां तुपुष्करे
प्रयागे माघमासे तु पूर्णं यत्स्नानजं फलम्। तत्सर्वं पुष्करे तीर्थे दिनैकस्नानतो भवेत्

नारद उवाच।

एवमुक्तः स विप्रेन्द्रः पुण्डरीकोमुरारिणा। किञ्चिदभ्युदिते सूर्येस्नानं गङ्गाजलेऽकरोत्
प्रत्यक्षं पुण्डरीकाक्षं पुण्डरीकः समार्चयत्। तुलसीविकसत्पुष्पयवकुङ्कुमचन्दनैः॥
धूपैरगरुजैरङ्गवासिताङ्गं रमापतिम्। नीराजयति कर्पूरदीपकैः पञ्चभिः स्म सः॥३६॥
चतुर्विधमयैर्भोज्यैर्भोजयित्वा जगद्गुरुम्। सुप्तं स मणिपर्यङ्के चामरैस्तमवीजयत्॥
पादसम्वाहनं जातु चक्रे तस्य रमापतेः। जातिकर्पूरसंयुक्तं ददौ ताम्बूलवीटकम्॥
उष्णीषंवध्नतस्तस्य श्रीपतेः पुरस्तदा। तस्थौ जातु स विप्रेन्द्रः करेणानीय दर्पणम्
एवं निजगृहे तस्य वसतः सभवच्छिदः। सपर्यां विदधद्विप्रो माघं निन्ये समस्तकम्
अथ माघावसाने तुपूर्णिमायां रमापतेः। स्मृतिमात्रागतं ताक्ष्र्यमपश्यत्पुरतः स्थितम्
तं दृष्ट्वा पुण्डरीकाक्षः पुण्डरीकमुवाच ह॥ ४१॥

श्रीभगवानुवाच।

श्रूयतां भो द्विजश्रेष्ठ! यद्वचोऽहं वदामि ते। इन्द्रप्रस्थगते तीर्थे पुष्करे ते यदृच्छया॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्नानाय ते मया दत्तं यन्मासमुषितं श्रिया। अद्य पक्षीन्द्रमारुह्य मया सह महामते!
व्रज तीर्थशिरोरत्नं तदेव प्रतिपुष्करे। चतुर्वर्गप्रदे तस्मिन्स्नानं कुर्वन्यदीच्छसि॥
तदहं ते प्रदास्यामि यदहं त्वद्वशे द्विज!। पापोऽपि भरतस्ते वै भ्राता यत्र मृतो
स्वर्गं स्वर्गसुखाकाङ्क्षी किमन्यत्तस्य वर्ण्यते॥ ४६॥

नारद उवाच।

एवमुक्त्वा स देवेन्द्रो ब्राह्मणेन्द्रं नरेन्द्र! तम्। पतगेन्द्रे समारोप्य सर्वतीर्थेन्द्रमागम
पुण्डरीकस्यदेहात्तु तेन तत्प्राणवायुना। समं ज्योतिः स निर्गत्य गोविन्दपदमावि
एवं पुष्करतीर्थेऽस्मिन्निन्द्रप्रस्थगते नृप!। स्नानेन पुण्डरीकस्तु लेभे सायुज्यमी
एवं तीर्थानुरोधेन गोविन्दोऽपि च तद्गृहे। मासमेकं सुखं राजन्नुवास निजबन्धुभ
केन वर्णयितुं शक्यो महिमा पुष्करस्य वै।
शक्रप्रस्थगतस्याऽस्य कोट्यंशो वर्णितो मया॥ ५१॥
माहात्म्यश्रवणादस्य श्रद्धया लभते नरः। अश्वमेधक्रतुफलं पठनादपि भूपते!॥

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे कालिन्दीमाहा
पुष्करमहिमवर्णनं नामैकोनविंशत्यधिकद्विशततमोऽध्यायः॥ २१९॥

---

# विंशत्यधिकद्विशततमोऽध्यायः

## इन्द्रप्रस्थस्थप्रयागतीर्थमाहात्म्यप्रसङ्गे विश्वावसुगन्धर्वस्यकथानकवर्णनं माहिष्मतीनगरस्थायामोहिन्यावृत्तान्तवर्णनम्

नारद उवाच।

शिवस्य तीर्थराजस्य प्रयागस्य तवाऽग्रतः। महिमानं महापुण्यं श्रद्धया वर्णयामि
विश्वावसुर्महीपाल! गन्धर्वो लोकविश्रुतः। एकदा स गतो गातुं सुमेरौ ब्रह्मणः स
तत्र सर्वैः सुरश्रेष्ठमुपविष्टं सुविष्टरे। जुष्टं सुरगणैर्भूप! विश्वावसुरवैक्षत॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

...ब्रह्मासनसमीपे तु वरासनगतं नृप !। द्वितीयमिव लोकेशमिन्द्रप्रस्थं स ऐक्षत ॥ ४ ॥
...तीर्थराजौ ब्रह्मेन्द्रप्रस्थयोर्नृप !। चामरोद्धूननं मूर्ध्नि कुर्वन्तौ स ददर्श ह ॥
...न्यानि देवतीर्थानि तयोर्दूरे महीपते !। स्थितानि तेन दृष्टानि बद्धाञ्जलिपुटानि तु ॥
...ग्रतो जगौ राजन्गान्धर्वं रागमुत्तमम् । तीर्थैः सममगात्सत्यलोकं देवान्विसृज्य हि
...थ विश्वावसुर्धीमान्दृष्ट्वा तीर्थस्य वैभवम् । इन्द्रप्रस्थस्य राजेन्द्र! हाहामेतदुवाच ह॥

विश्वावसुरुवाच ।

...मो गन्धर्वशार्दूल! तीर्थमेतन्महाद्भुतम् । इन्द्रप्रस्थाख्यमेतस्मिन्संसारे तीर्थराशिषु ॥
...राचरगुरुर्ब्रह्मा सुरवन्द्यपदाम्बुजः । तस्यासनसमीपस्थं यदतिष्ठत्समासनम् ॥ १०॥
...र्थराजोऽपि पृष्ठस्थश्चामरं यस्यमस्तके । अधुना भृत्यवज्ज्ञातस्तीर्थेष्वन्येषु का कथा
...पृथिव्यां यानि तीर्थानि त्रिवर्गफलदानि तु । इन्द्रप्रस्थमिदं तीर्थं चतुर्वर्गफलप्रदम् ॥

अत्र स्थितानि तीर्थानि तादृशानि गुणैर्ध्रुवैः ।
शेषेनाऽपि न शक्यन्ते स्तोतुं तेषां महागुणाः ॥१३ ॥

शरभ उवाच ।

...वं विश्वावसुर्धीमान्दृष्ट्वेन्द्रप्रस्थवैभवम् । गत्वा तस्य गृहं राजन्पावनं सर्वकामदम्
...था देवेषु सर्वेषु शक्रःश्रेष्ठः शचीपतिः । तस्माद्ब्रह्मा च तीर्थेषु प्रयागोऽयं तथा वरः
...स्मादपि महाराज! शक्रप्रस्थमिदं वरम् । अस्यान्तरगतो योऽयं प्रयागो नृप! दृश्यते
...कथयाम्यत्र यद्वृत्तं मोहिन्याः पण्ययोषितः । नर्मदासरितस्तीरे पुरी माहिष्मती नृप!
मोहिनीनामतत्राऽऽसीद्वेश्या बहुधनान्विता । रूपयौवनसम्पन्ना निष्णातानृत्यगीतयोः
...या बहूनि पापानि कृतानि धनलुब्धया । ब्रह्महत्याः कृताः सप्त दास्यश्च बहवो हताः
...सां च पातिता गर्भा बहुशः पापया तया । एवं तया सुतारुण्यं गमितं पापकर्मभिः
...तो जरा कियत्काले तद्देहे समपद्यत । जराग्रस्तशरीरा सा निवृत्तविषयस्पृहा ॥२१॥

न चक्रे मानसं यूनां ते च तां प्रति भूपते !।
पापार्जितं धनं स्वीयं न विश्वसिति कस्यचित् ॥ २२ ॥
न दत्ते न स्वयं भुङ्क्ते न निक्षिपति वै क्वचित् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

एकदा सा निशीथे तु विबुध्येति व्यचिन्तयत् ॥ २३ ॥

मृतायां मयि कस्येदं धनं पापैरुपार्जितम् । तं नयिष्यति मां घोरं नरकं भृशदा
दास्यस्तासांच भर्त्तारस्तद्ग्रोक्ष्यन्ति धनं मम । मयैव सद्गतिस्तस्य कथं न क्रियते
एवंविचिन्त्य साधर्मे विधाय मतिमुत्तमाम् । चकाराऽऽरामसरसीवापीकूपसुरा
अभितः पुरमाधत्ते प्रपाः पथिकहेतवे । निदाघे च महाराज ! तेभ्योऽन्नं प्रददौ च
धर्मशालां गृहाभ्याशेनिवासाय विदेशिनाम् । विदधे सा पुनस्तेभ्यो ददावाहारमु
एवं प्रवर्त्तमाना हि धर्मेसाभूप!मोहिनी । ज्वरातुरा भवत्काले कचिच्चेति व्यचिन्
धर्मार्थे हि मया वित्तं व्ययितं भूरि यद्यपि । तथापि स्वर्णरूप्यादि प्रचुरं वर्त्तते
श्रोत्रियेभ्योददाम्येतज्ज्ञानेनेति व्यचिन्तयत् । विचिन्त्येतिसमाहूतामोहिन्यानगरी
नागतास्ते महीपाल!ज्ञात्वा घोरं प्रतिग्रहम् । यदा तदा विभागं च चक्रे तत्तु धनंस

एको भागस्तु दासीनां दत्तोऽन्यश्च विदेशिनाम् ।

स्वयं तु निर्द्धना राजन्नभवत्सा तु मोहिनी ॥ ३३ ॥

तथासमागतंमृत्युं विज्ञायान्तकमन्तिके । मुक्त्वा दास्यो धनंनीत्वायथेष्टगतयो
इति मत्वा यदा ह्येषा ज्वरमुक्ता भविष्यति । तदानीं यद्धनं दत्तं नूनमादास्यते
अथ सा लङ्घनान्यष्टादश कृत्वा महीपते !। निजायुषस्तु शेषेण ज्वरमुक्ता तदा
एकाजरद्गवानामसखी तस्या महीपते !। सा तामुपचचाराऽऽशु पथ्यादिभिरत
कियद्भिर्वासरैः सा तु पूर्णाहारा व्यजायत । तस्या जरद्गवायास्तु गृहेभुक्तं स्म

मया स्थितं सुखेनाऽत्र दुःखमद्य समागतम् ।

दारिद्र्यान्न मया स्थेयं सा चिन्त्येति गताऽन्यतः ॥३६ ॥

गच्छन्ती सा वनेराजन्मोहिनी पुरतस्करैः । इतिमत्वा विनिहता गृहीत्वायात्य
धनमप्राप्य तैस्तस्याः सकाशात्पुरतस्करैः । श्वसन्ती सा परित्यक्तातस्मिन्नेव वने

अथ वैखानसः कश्चित्प्रयागस्याऽस्य वै जलम् ।

विभ्रत्कमण्डलौ राजन्नत्राऽरण्ये समाययौ ॥ ४२ ॥

अथ तां पतितां वीक्ष्य शस्त्रविक्षतविग्रहाम् । याचमानामिदं राजञ्जीवनं हस्त

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वैखानस उवाच ।

त्वं केन शितैः शस्त्रैः सक्षतीकृतविग्रहा । एकाकिनी किमर्थं वा निर्जनारण्यमागता
इन्द्रप्रस्थगतस्येदं प्रयागस्य जले शुभे । भाग्योदयेन केनाऽपि प्रापितं प्रियकाम्यया ॥
उक्ता तेन सा वक्तुमक्षमा व्याददे मुखम् । पातुं तद्वारि महिषी भवेयमिति वाञ्छया
स्थितस्यप्रयागस्य पातितेऽम्बुनि तन्मुखे । तत्याज जीवितं सातु मोहिनीगणिकानृप!
प्राणप्रयाणकाले तु महिषीत्वमवाञ्छत । अतः सा महिषी जाता द्राविडे वीरवर्मणः
सम्भूय केरलाधीशगृहे तीर्थाम्बुपानतः । कुलशीलधनैश्वर्यसयुक्तस्य महीपतेः ॥४६ ॥
गौरं ततः साङ्गं बभार कमलेक्षणा । अतस्तस्य पिता नाम हेमाङ्गीति चकार ह ॥
कदा सा तु हेमाङ्गी हेमाभरणभूषिता । कलायाः स्ववयस्याया मन्त्रिपुत्र्यागृहं ययौ
यावकतैलेन स्नापिता भोजिता च सा । विविधान्नैस्तदा राजन्निविष्टा वरविष्टरे॥
पोद्ग्रथितधम्मिल्लाक्षामक्षौमविभूषिता । कलां प्रोवाचदधती मुखे ताम्बूलवीटिकाम्

हेमाङ्ग्युवाच ।

लि! कलय मे वाक्यं कोकिलाकलभाषिणि !। गृहेयदद्भुतं वस्तु तवमामभिदर्शय ॥
श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे कालिन्दीमाहात्म्ये-
इन्द्रप्रस्थस्थप्रयागमहत्त्ववर्णनं नाम विंशत्यधिकद्विशततमोऽध्यायः ॥ २२० ॥

---

# एकविंशत्यधिकद्विशततमोऽध्यायः

## द्राविड़देशस्थवीरवर्ममहिष्याहेमाङ्ग्याइन्द्रप्रस्थतीर्थकरणायस्वपतये प्रतिज्ञावर्णनन्तयोश्चतीर्थयात्रायैप्रस्थानम्

नारद उवाच ।

उक्तासा कला राजंस्तया नृपतिभार्यया । स्वकोशात्स्वर्णमञ्जूषामानाय्य विदधेपुरः


CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

उवाच च महाराजभार्येऽस्यां महदद्भुतम् । पुस्तकं वर्तते देवि! तत्र चित्राणि स
उद्घाट्य दृश्यतां किञ्चित्किमस्त्यत्रपुस्तके । रंस्यते ते मनो नूनं तत्रस्थाले

इत्युक्ता भूपपत्नी सा दास्या तामुदघाटयत् ।
मञ्जूषां तत्र संस्थं च पुस्तकं पाणिनाऽग्रहीत् ॥ ४ ॥

तत्राऽवलोकयामास साऽवतारान्समासतः । पूर्वं ततस्तु भूगोलंपञ्चाशत्कोटि
तत्रान्धकारसंयुक्ताभूमिर्दृष्टाऽथ काञ्चनी । एतयोरन्तरेराजँल्लोकालोकश्च पर्वत
सप्तद्वीपास्ततो दृष्टाः समुद्रैः सप्तभिर्वृताः । एतेषु नद्यः शैलाश्च खण्डानि तु मह
एतद्भारतखण्डं सा पश्यन्ती भूपतिप्रिया । यमुनाजाह्नवीमुख्याः सरितः समवै
यमुनातीरगं राजन्निन्द्रप्रस्थमिदं शुभम् । ददर्श सा महाभागा तीर्थं व्रजयुतं नृ
अत्र तीर्थमिदं दृष्ट्वा प्रयागं ब्रह्मनिर्मितम् । पूर्वजन्मकृतं कर्म सा सस्मार मन

ततस्तूष्णीं समुत्थाय तूर्णं सा स्वगृहं ययौ ।
निश्चित्येति न भोक्ष्यामि ततः प्रस्थाय तीर्थकम् ॥ ११ ॥

तदैव सा तु हेमाङ्गी सह गन्तुमसुप्रियम् । वीरवर्माणमाहेदं तीर्थराजं प्रिया स

हेमाङ्ग्युवाच ।

भोभोः प्राणपते!वाक्यं मदीयंश्रृणु धर्मदम् । विधेहिच महाभाग तूर्णं पूर्णोभ
पुराऽहं मोहिनी नाम वेश्या च बहुपापकृत् । यौवने वार्द्धके किञ्चिद्धर्मे जाता म
पापेनोपार्जितं वित्तं धर्मेण व्ययितं मया । निर्द्धनाऽहं यदा राजन्निर्गता निज
तदामां निर्जनेऽरण्ये यान्तींजघ्नुस्तु तस्कराः । वृथादारिद्र्यसन्तप्तां पापाधन
शितशस्त्रक्षताङ्गीं मां श्वसन्तीं गतचेतनाम् । विसृज्य तस्करास्तत्र गताहतमनो
ततो वैखानसो ह्येकः प्रयागस्य जलं वहन् । इन्द्रप्रस्थगतस्यैव वने तत्र सम
तत्रमां पतितांदृष्ट्वा तदवस्थां स तापसः । का त्वं कुतःकिमर्थं वा हता केनेति
तदा किमपिनोक्तं मे प्रार्थितं पुण्यमम्बु तत् । तेन तन्मे मुखे क्षिप्तं ततोऽहं देह
प्राणप्रर्याणकालेतु वारितत्सर्वकामदम् । श्रुत्वेति वाञ्छितवती महिषीस्यामि
तस्यतीर्थाम्भसो राजन्प्रसादात्ते गृहेश्वरी । जाताऽहंसत्कुलाचारशीलाशीलप

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

[ ]तं द्रष्टुमिच्छामि शक्रप्रस्थगतं नृप !। प्रयागं तीर्थराजं तं भवता सह कामदम्
प्रस्थास्येऽहं यदा राजन्तीर्थराजं प्रति प्रभो !
तदाऽहमन्नं भोक्ष्यामि मयेति विहितः पणः ॥ २४ ॥

राजोवाच ।

[ ]मेतद्विजानीयां त्वदुक्तं चललोचने !। प्रतीतं कुरु मे भद्रे ! त्वदुक्तं करवाण्यहम् ॥

नारद उवाच ।

इत्युक्ते तेन भूपेन खे वागित्यभवत्तदा ॥ २६ ॥

आकाशवागुवाच ।

[ ]मुक्तं वचो राजन्ननया तव भार्यया । इन्द्रप्रस्थे गते पुण्ये प्रयागे तीर्थपुङ्गवे ॥
तत्र गत्वा कुरु स्नानं लप्स्यसे यद्यदिच्छसि ॥ २७ ॥

नारद उवाच ।

[ ]मेतिततो वाणींनृपो गगनसम्भवाम् । दण्डवत्पतितो भूमौ तद्वक्तारं नमाम्यहम्
[ ]मन्त्रिणमाहूय राज्यमारोप्य तत्र वै । तया सह समारुह्य रथं तीर्थवरं ययौ ॥
[ ]तिभिर्वासरैरत्र हेमाङ्ग्या सह चाऽऽययौ । उपजह्ने तीर्थराजे क्षीरं भार्यायुतो नृपः
[ ]तुस्तौशिवे तीर्थे दम्पती तत्र कामदे । प्रयागस्नानपुण्येन वैकुण्ठप्राप्तिरस्त्विति ॥
[ ]च्छया स्नातमात्रे मिथुने तत्र भूपते !। आगतौ सुरशार्दूलौ हंसपक्षीन्द्रवाहनौ ॥
[ ]तौतौ समालोक्य वीरवर्मा स भूपतिः । प्रणम्य शिरसा देवौ तुष्टावैकाग्रमानसः

राजोवाच ।

[ ]वां सुरशार्दूलौ बिभ्रद्वयामसितारुणे । वपुषी क्षौमवासांसि हेमसिन्दूरभानि च
वन्दे युवां सत्त्वरजःप्रधानौ चराचरस्य स्थितिसर्गहेतू ।
वैकुण्ठसत्याद्भुतलोकनाथौ चतुर्द्विबाहू खगराजवाहौ ॥ ३५ ॥
वैराग्यसंरागवतां जनानां सन्मुक्तिभुक्तिप्रतिपादकौ च ।
वृन्दारकैर्वन्दितपादपद्मौ सद्भावनम्रेण नमामि मूर्ध्ना ॥ ३६ ॥
गोविन्दवृन्दारकवन्द्यपाद ! न कोऽपि जानाति तव स्वरूपम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यतः परस्त्वं प्रकृतेश्च पुंसो मनोवचोभ्यामपि दूरवर्ती ॥ ३७ ॥

धन्यः स लोके पुरुषः परात्मन्यो विश्वमेतत्क्षणिकं विचिन्त्य।

अनन्यचेता भजति त्वदीयपादारविन्दं मुनिवृन्दवन्द्यम् ॥ ३८ ॥

त्वत्पादसेवनं नाम तीर्थमेतच्च दुर्लभम्। जनानां भजमानानां वाञ्छितार्थफल

तथाऽप्येतद्द्वयं सेव्यं मुक्तये नान्यलब्धये। अन्यकामनया यस्तु सेवते स तु

सन्तो भवन्तमासेव्य तीर्थमेतच्चमुक्तिदम्। नान्यमिच्छन्त्यतिक्रम्यसर्वलोका

नारद उवाच।

इत्यभिष्टूय देवेशं लोकेशं स च भूपतिः। तस्थौ यदा तदा राजन्हेमाङ्गीसा

हेमाङ्ग्युवाच।

पद्मापते पद्मपलाशलोचन! ब्रह्मन्मरालासन! भारतीगुरो!।

नमो युवाभ्यां यदि दीनचेतसे प्रसीद तं तारयतं भवाब्धेः ॥ ४३॥

तीर्थस्याऽस्य प्रसादेन जाताऽहं महिषी प्रभो!। युवयोर्दर्शनं जातं देवानामपि

युवामखिलचित्तज्ञौ दत्तं नौ मानसेप्सितम्। स्नानकालेयदावाभ्यांविहितंपारमा

एवं ताभ्यामुभाभ्यां तौ संस्तुतौ देवपुङ्गवौ। प्रसन्नवदनौ भूत्वा प्रोचतुर्दम्पती

हरिब्रह्माणावूचतुः।

धन्या त्वमसि हेमाङ्गि! यतोऽयं तारितः पतिः।

त्वया राज्यसुखासक्तचित्तोऽप्येतत्समागमात् ॥ ४७ ॥

राज्ञां विषयसक्तानां दुर्लभा मुक्तिरीदृशी। त्वद्भर्तुर्यादृशी जाता तीर्थस्याऽस्य

नारद उवाच।

इत्युक्त्वा तौ समारुह्य गरुडं हंसमेव च। जग्मतुस्तौ सुरश्रेष्ठौ सत्यलोकं

तत्र ते ब्रह्मणा सर्वे पूजिता विधिवन्नृप!। तस्य चित्तानुरोधेन तस्थुरेकं मुहू

अथ ताभ्यामुभाभ्यां स दम्पतिभ्यां समं हरिः। आरुह्यगरुडं श्रीमद्वैकुण्ठमगम

इत्येतत्कथितं तुभ्यं तीर्थराजस्य वैभवम्।

पुण्यं समस्तपापघ्नं यशस्यं सुतदं नृप! ॥ ५२ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शृणुयान्नित्यं पठेदपि च मानवः । स गच्छेद्वाञ्छितं स्थानंसत्यमेतन्मयोदितम्
श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे इन्द्रप्रस्थ-
माहात्म्ये तत्रस्थप्रयागवर्णनं नामैकविंशत्यधिकद्विशततमोऽध्यायः ॥२२१॥

---

## द्वाविंशत्यधिकद्विशततमोऽध्यायः

नारदशिबिसम्वादे इन्द्रप्रस्थस्थितकाशीशिवकाञ्चीतीर्थसप्तकभीमकुण्डानां-
माहात्म्यवर्णनं तत्रतत्रतीर्थेषुग्रथितनानाख्यानानाम्वृत्तप्रकाशनञ्च

नारद उवाच ।

र्णय शिबे! राजन्वर्णयामितवाऽग्रतः । पुण्यंयशस्यमायुष्यंकाश्यामाहात्म्यमुत्तमम्
स्थायां काश्यामेकस्तु पादपः । शिंशपाख्यो भवेद्राजन्पुरा पुण्ययुगे कृते॥२॥
को वायसो ह्यासीत्कृतनीडोवनस्पतौ । तस्याधस्तान्महासर्पः कोटरे वसति स्म ह
दा तस्य काकस्य भार्याण्डद्वयमालये । प्रतिमुच्य गता क्वाऽपि न नीडेस्वेसमागता
मेव स काकस्तु पालयन्नण्डकद्वयम् । तामेव शिंशपामुच्चैरध्यतिष्ठन्महीपते ! ॥
कदा निशीथे तु महावात्या समागता । अभनक्छिशपां राजन्मूलादपि दृढामपि॥

वात्यया पात्यमानाया शिंशपायास्तदा तले ।
चूर्णितौ काकसर्पौ तौ गतप्राणौ बभूवतुः ॥ ७ ॥

ङ्गास्ते त्रयो भूत्वा शिंशपावायसादयः । विमानत्रयमारूढाजग्मुःश्रीपतिकेतनम्

शिबिरुवाच ।

! केन पुण्येन प्राप्ता तैर्मुक्तिदा पुरी । आसंस्ते के त्रयः पूर्वं सर्वं कथय नारद !॥

नारद उवाच ।

जाङ्गलदेशीयो ब्राह्मणः श्रवणाभिधः । तस्यभार्या कुण्डानाम भ्राताऽभूच्चकुरण्टकः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अस्नातभोक्ता नित्यं स केवलो मिष्टभुग्रहः । श्रवणस्तेन दोषेण बभूव ग्रामवा
कुरण्टकस्तुतद्भ्रातानास्तिकोऽभवदुल्वणः । श्रुतिस्मृतिपथोच्छेत्तादेवतानांचनि
तेन दोषेण स मृतो ह्यभवत्कालकुण्डली । सा कुण्डाश्रवणस्यस्त्रीवभूवोभयदो

अतः सा स्थावरत्वं हि लब्ध्वाऽऽसीदुभयाश्रया ।
एतत्ते कथितं भूप ! तद्वृत्तं पूर्वजन्मनि ॥ १४ ॥

अतः परं प्रवक्ष्यामि तेषां पुण्यं यतस्त्रयः । प्रापुस्तेन पुरीं रम्यां काशीं वैश्वे

ग्रामान्तरादेकदा तौ प्रत्यायातौ निजालयम् ।
कस्यचित्पथिकस्याऽथ कूपमग्नां पयस्विनीम् ॥ १६ ॥

अवलोक्य तदुद्धारं चक्रतुस्तेन नोदितौ । ताभ्यां गदितमाकर्ण्यकुण्डासाध्विव
ते त्रयस्तेन पुण्येन मरणं प्राप्य दुर्लभम् । इन्द्रप्रस्थतटस्थायां काश्यां वैकुण्
इयं काशी महेशस्य पुरी यद्यपि भूपते !। तथाप्यस्यां मृतो जन्तुर्वैकुण्ठेस्यात्सु
एतत्ते कथितं राजन्काश्यामाहात्म्यमुत्तमम् । किमन्यच्छ्रोतुमिच्छातेविद्यतेतद्व

शिविरुवाच ।

मुने!त्वया महेशस्य क्षेत्रत्रयमुदीरितम् । काशी च शिवकाञ्ची च गोकर्णंचतथ

एकस्या महिमा प्रोक्तस्त्वया काश्या महामुने ! ।
गोकर्णशिवकाञ्च्योश्च कथ्यतां यदि विद्यते ॥ २२ ॥

नारद उवाच ।

गोकर्णं केवलं शैवं क्षेत्रं परमपावनम् । तस्मिन्मृतो नरो राजञ्छिवःस्यान्नाऽ
स्थले जलेऽन्तरिक्षे च जन्तुस्तत्र म्रियेत चेत् । तदा कैलासशिखरेशिवःसम्भू
अत्र गोकर्णतीर्थेस्यान्मृतस्य न पुनर्भवः । शिवेन स समं राजन्मुक्तियास्यति

अस्याऽऽपि तव माहात्म्यं गोकर्णस्य महामते ! ।
वर्णयामि यदाऽऽकर्णि मया ब्रह्ममुखात्प्रभो ! ॥ २६ ॥

प्रयागादेकगव्यूतौ गुरुतीर्थसमीपगः । मर्यादापर्वतो योऽयं दृश्यते पुण्यदर्शनः
तत्रैकः कर्कटो नाम भिल्ल आसीत्सुदारुणः । तस्य भार्याजरानामसाजन्मेप

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

जराविषसंयुक्तं बष्ठं कर्कटकं तदा । अकरोन्मोदकं हन्तुं तदा तेन स्वसुः श्रुतम्
जाया मुखतो राजन्भिल्लेन च महात्मना । बालांतां हन्तुमारेभे कर्कटो भृशदारुणः
पाणिर्यदा याति तद्वधाय स भिल्लपः । यावत्तावत्तु सा पापा ज्ञात्वा निजवधोद्यमम्
मध्यद्रवद्भीता निजप्राणपरीप्सया । तामनुद्रवता तेन कर्कटेन महीपते ! ॥ ३२ ॥
गोकर्णतीर्थे तु गृहीता खड्गपाणिना । शिरश्छित्त्वा तु खड्गेन पातयित्वाजले वपुः
गोकर्णतीर्थस्य निजस्थानमगाच्च सः । सा जरातत्र गोकर्णेपापाऽपिनिधनंगता
लासशिखरे राजन्पार्वत्या अभवत्सखी । अहं कथितवानेतत्तव गोकर्णवैभवम् ॥३५

शिवकाञ्च्याश्च माहात्म्यं पवित्रं वर्णयामि ते ।
इन्द्रप्रस्थतटस्थायां शिवकाञ्च्यामपि प्रभो ! ॥ ३६ ॥

क्तिः सा परमा पुंसां गोकर्णे या मयोदिता । अत्र श्रीमन्महादेवो विष्णुं सर्वसुरेश्वरम्
राध्य भकराजत्वं लेभे ज्ञानं च तात्त्विकम् । अतः सर्वेवयंपुत्रा ब्रह्मणस्तंमहेश्वरम्
राधयामः सततं सद्भक्तिज्ञानलिप्सया । अत्र बाणासुरो राजन्नारराध महेश्वरम् ॥
पहारो वर्षशतं तद्गुणत्वबुभूषया । तस्मै प्रसन्नो भगवान्गणत्वं दत्तवान्निजम् ॥
यं च सर्वदा तस्य पुरपालो बभूव ह । इयं पुरी पुरा राजन्नासीद्विष्णोर्महात्मनः ॥
ता शिवाय तुष्टेन तपसा तस्य विष्णुना । अस्यामेकं पुरावृत्तं महदाश्चर्यकारकम्

विप्रस्य शिवभक्तस्य वैकुण्ठाप्तिर्यथाऽभवत् ।
एकस्तु ब्राह्मणो राजन्हेरम्बो नाम धार्मिकः ॥ ४३ ॥

येन मनसा वाचा शिवपूजारतः सदा । एकदा स महाभागः शिवतीर्थानि पर्यटन्
भक्तःशिवे राजञ्छिवकाञ्च्यामिहाऽऽगतः । एनांमनोहरांचैवनतत्याजसबुद्धिमान्
तत्रैव तत्याज प्राणानस्याजलान्तरे । तत्रैव श्रीमहादेवगणास्तं ब्राह्मणोत्तमम् ॥
ला कैलासमचलं चेलुस्तदनुशासनात् । अथ मध्ये समायाता गणावैकुण्ठतो हरेः
भो बलात्समादातुं तं द्विजश्रेष्ठमुद्यताः । आसीत्तेषां महद्युद्धं गणानां हरिशर्वयोः ॥
नि युद्धे नवै केषां विजयो न पराजयः । तत्र वैकुण्ठतो विष्णुरागतो गरुडासनः ॥
कैलासाद्वृषभारूढो महेशश्च त्रिलोकधृत् । तावन्योन्यं मुखं दृष्ट्वा विहस्य जगदीश्वरौ

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पश्यतः स्म महद्युद्धं नभस्येवं गणैः कृतम् ।
अथ स्वीयान्गणान्विष्णुः शैवांश्च दिवि युद्धतः ॥ ५१ ॥

निवार्य तं द्विजं ताक्ष्यमारोप्यागाच्छिवालयम् । शिवेनतद्गणैश्चाऽपिस्वकीयैरपि
वृतो गच्छन्पथि श्रीमान्स्तुतस्त्रिदशवन्दितः । गत्वा विवेशतं चाऽऽगंमहादेवपुर
तस्मै द्विजाय वै तस्य दर्शयन्नमणीयताम् । अथ तस्मात्तु कैलासान्महादेवेन
माधवः परयाभक्त्या वैकुण्ठमगमत्तदा । द्विजःसोऽपिमहाभागस्तीर्थस्याऽस्यप्रस
गोविन्ददर्शनं प्राप्य मुमुदे हरसन्निधौ । एतत्ते कथितंराजञ्छिवकाञ्च्यास्तु वै
तीर्थसप्तकनाम्नस्तु शृणुष्व सुसमाहितः । तीर्थमेतन्महाराज! चतुर्वर्गफलप्रदम् ।
दर्शनात्स्पर्शनाद्ध्यानात्स्मरणादपि भूपते ! । वसिष्ठादिभिरेतस्मिन्महर्षिभिरपि
महत्तपस्तु सृष्ट्यर्थं तत्रासंस्तुक्षमा नृप !। मरीचिरपि धर्मात्मा पुत्रार्थं स्नानमा
अत्र लेभे महाभागः कश्यपं सुतमुत्तमम् । अत्रिरत्राऽपितपसा तोषयेद्देवपुङ्गवान्

सोमं दुर्वाससं दत्तं तेभ्यो लेभे सुतत्रयम् ।
अङ्गिरा अपि धर्मात्मा तीर्थस्याऽस्य प्रसादतः ॥ ६१ ॥

लेभे सुतांस्तु तद्वंश्या जाता आङ्गिरसाद्विजाः । पुलहोऽपिसुतंलेभेदम्भोलिगुण

योऽगस्त्योऽभूत्पुरा राजंस्तीर्थेऽत्रैव निमज्जनात् ।
पुलस्त्यस्याऽत्र तीर्थे वै पुत्रो लब्धस्तपस्यतः ॥ ६३ ॥

कुबेरोऽभून्महाभागो यः सखाऽऽसीदुमापतेः । क्रतोरपिसुताजातावालखिल्याः
तीर्थस्याऽस्य प्रसादेन ते सर्वे ह्यूर्ध्वरेतसः । रजआदीन्सुतांल्लेभे वसिष्ठोऽपिम
सप्तैव राजशार्दूल! महिमा तस्य वर्णितः । अन्यान्यपि च तीर्थानि सन्त्यनेका
कपिलाश्रमकेदारप्रभासादीनि वै प्रभो !। नियुतैरपि वर्षाणां तेषां च महिमा

अनन्तेनाऽपि नो वक्तुं शक्यते किमु मादृशैः ॥ ६७ ॥

सौभरिरुवाच ।

एवमुक्त्वा मुनिश्रेष्ठो नारदो मुनिपुङ्गवः । शिबिं जगाम नभसो नारायणगुण
शिबिरौशीनरो राजा शक्रप्रस्थस्य वैभवम् । श्रुत्वा मुनिमुखाद्राजन्कृतार्थं स्व

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

...त स्नात्वा हि विधिवदिन्द्रप्रस्थे स भूपतिः । विधायसत्क्रियाःसर्वाजगामनिजपत्तनम्
...न्द्रप्रस्थस्य माहात्म्यमेतत्तव मया विभो !। यमुनीतीरतीर्थस्य वर्णितं जनपावनम् ॥

नाऽस्याऽऽदरं करिष्यन्ति कलौ श्रद्धाविवर्जिताः ।
इन्द्रप्रस्थस्य राजेन्द्र ! सर्वतीर्थशिरोमणेः ॥ ७२ ॥

...ष्टादशपुराणानां श्रवणाद्भारतस्य च । यत्फलं तन्महिम्नोऽस्य शक्रप्रस्थस्य जायते ॥
...रुणोदयवेलायां माघलक्षैकमज्जनात् । यत्फलं तन्महिम्नोऽस्य श्रवणाच्छ्रद्धयाभवेत्
...श्रद्धयाऽस्य तु माहात्म्यं यः शृणोतिमहीपते !। तर्पितास्तेनपितरोदेवाश्च मुनयस्तथा
...कृच्छ्रातिकृच्छ्रपाराकचान्द्रायणव्रतादिभिः । यत्फलंतन्महिम्नोऽस्यश्रद्धयाश्रवणाद्भवेत्
...अश्वमेधादियज्ञानां समस्तानां महीपते !। यत्फलं तन्महिम्नोऽस्यश्रद्धया श्रवणाद्भवेत्

सूत उवाच ।

...एवं युधिष्ठिरो राजा श्रुत्वाशौनकसौभरैः । इन्द्रप्रस्थस्यमाहात्म्यं स ययौहस्तिनापुरम्
...ततो विनीय सद्भ्रातॄन्दुर्योधनपुरःसरान् । इन्द्रप्रस्थमगात्पुण्यं राजसूयचिकीर्षया ॥
...द्वारकायाः समायातं गोविन्दं कुलदैवतम् । राजसूयेन यज्ञेन स इयाज महीपतिः ॥
...मुक्तिदं तीर्थमेतत्तु शपतोऽस्याऽप्यजायत । इति मत्वा हरिस्तत्र शिशुपालं जघान ह
...शिशुपालोऽपि तस्यैव तीर्थस्य मरणाद्भुवि । सायुज्यमगमत्कृष्णे निखिलार्थप्रदायके
...शिशुपालो हतो यत्र विहितो यत्र च क्रतुः । गदया तत्र भीमेन कृतं कुण्डं सुविस्तरम्
...भीमकुण्डं तु विज्ञातं जातं तद्भुवि पावनम् । कालिन्द्या दक्षिणेभागेगव्यूत्यर्धं महीतले
...इन्द्रप्रस्थगताया यत्कालिन्द्याः स्नानतःफलम् । तत्फलंतत्रकुण्डेतुजायते नाऽत्रसंशयः

सूत उवाच ।

यस्मिन्क्षेत्रे स्थितो जन्तुस्तं क्षेत्रमनुवत्सरम् ।
प्रदक्षिणादिभिर्धर्मैः स्वापराधान्क्षमापयेत् ॥ ८६ ॥

...प्रतिसम्वत्सरं चैव परिक्रामति यो नरः । क्षेत्रापराधदोषैश्च न स लिप्येत्तु पातकैः ॥
...प्रदक्षिणमकुर्वाणः क्षेत्रसिद्धिं न विन्दति । तस्मात्प्रदक्षिणातीर्थे दातव्याचफलार्थिभिः
...नामानि सञ्जल्पन्प्रकरोति प्रदक्षिणाम् । पदे पदे स लभते कपिलादानजं फलम् ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

चैत्रकृष्णचतुर्दश्यां शक्रप्रस्थप्रदक्षिणाम् । यः करोति नरो धन्यः सर्वपापैः प्रमुच्य
इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे कार्ति
माहात्म्यइन्द्रप्रस्थगतकाशीगोकर्णशिवकाञ्चीतीर्थसप्तकभीमकुण्डवर्णनं
नाम द्वाविंशत्यधिकद्विशततमोऽध्यायः ॥ २२२ ॥

---

# त्रयोविंशत्यधिकद्विशततमोऽध्यायः

## वशिष्ठदिलीपसम्वादे भगवन्मन्त्रदीक्षाप्रसङ्गे विद्योपदेशवर्णनम्

शौनक उवाच ।

सूत सूत महाभाग! धन्योऽसि त्वं भवाम्बुधौ ।
यन्नोऽत्यर्थं निमग्नानां पाययस्यमृतोत्करम् ॥ १ ॥

साधोऽत्र भवनिस्तारं वाञ्छतां नः समादिश । मन्त्ररत्नं भावशुद्धं यन्मयं सचरा

सूत उवाच ।

शृणु शौनक! वक्ष्यामि मन्त्ररत्नं महाद्भुतम् । यद्दिलीपाय गदितं वसिष्ठेन महात्म
एकदा तु दिलीपेन पृष्टमेतद्गुरुं प्रति । वसिष्ठं द्विजशार्दूलं प्रणिपत्य यथा त्व

दिलीप उवाच ।

भगवन्भवता प्रोक्तास्सर्वे धर्मा विशेषतः । वर्णाश्रमयुता धर्मा नित्यनैमित्तिका
राजधर्माश्च यज्ञाश्च तीर्थदानव्रतादिकम् । श्रुता मया मुनिश्रेष्ठ! अक्षय्यस्त्वर्गभो
अधुनाश्रोतुमिच्छामि मोक्षमार्गंसनातनम् । दिष्ट्याऽहंयेन गच्छामितद्ब्रह्मन्वकुमर्ह
को मन्त्रः सर्वमन्त्राणां भवरोगैकभेषजम् । सर्वेषामेव देवानां कोहि मोक्षप्रदः प
तत्समाख्याहि तत्त्वेन मयि वात्सल्यगौरवात् ॥ ६ ॥

वसिष्ठ उवाच ।

साधु पृष्टं त्वया राजन्सर्वलोकहितैषिणा । वक्ष्यामि परमं गुह्यमेकं संसारता

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पुरा महर्षयः सर्वे यज्ञदानपराः शुभाः । पप्रच्छुर्ब्रह्मणः पुत्रं नारदं मुनिसत्तमम् ॥११॥

महर्षयऊचुः ।

भगवन्केन मन्त्रेण गच्छामः परमं पदम् । तन्नो ब्रूहि महाभाग! प्रसादं कर्तुमर्हसि॥१२

नारद उवाच ।

पितामहं पुरा सर्वे योगिनःसनकादयः । पप्रच्छुरेकमेकान्ते मोक्षमार्गं सुदुर्लभम् ॥१३

ब्रह्मोवाच ।

शृणुध्वं योगिनः सर्वे रहस्यमिदमद्भुतम् । न जानन्ति सुराः सर्वेऋषयश्च तपोधनाः ॥

सर्गादौ प्रोक्तवान्देवोमह्यं नारायणोऽव्ययः । ईश्वर्यासहदेव्याच सम्यक्सम्पूजितोमया

ततः प्रसन्नो भगवान्मम नारायणोऽव्ययः । प्राजापत्यं ददौ मह्यं श्रुतिजं सर्ववाङ्मयम्

स्वप्रकाशानि मन्त्राणि व्यापकाव्यापकानि च । ततस्तमब्रवंदेवं पुराणपुरुषोत्तमम् ॥

भगवन्केन मन्त्रेण संसारोत्तारणं नृणाम् । तन्ममाऽऽचक्ष्व तत्त्वेन सर्वलोकहितायवै

को मन्त्रः सर्वमन्त्राणां पुरश्चरणवर्जितः । सकृदुच्चारणान्नृणां ददाति परमं पदम् ॥

श्रीभगवानुवाच ।

साधुपृष्टं महाभाग सर्वलोकहितैषिणा । तस्माद्वक्ष्यामि ते गुह्यं येन मामाप्नुयुर्नराः

सर्वेषामेव मन्त्राणां मन्त्ररत्नं शुभावहम् । सकृत्स्मरणमात्रेण ददाति परमं पदम् ॥

मन्त्ररत्नं द्वयं न्यासः प्रपत्तिः शरणागतिः । लक्ष्मीनारायणमिति मन्त्रः सर्वफलप्रदः॥

नामानि मन्त्ररत्नस्य पर्यायेण निबोध मे । तस्योच्चारणमात्रेण परितुष्टोऽस्मिनित्यशः

कुलजो वा तपस्वी वा वेदवेदाङ्गपारगः । यज्ञदानपरो वाऽपि सर्वतीर्थोपसेवकः ॥२४

व्रती वा सत्यवादी वा यतिर्वा ज्ञानवानपि । मन्त्राधिकारी न भवेत्तं प्रयत्नेनवर्जयेत्

ब्राह्मणाःक्षत्त्रिया वैश्याः स्त्रियः शूद्रास्तथेतरे ।
तस्याऽधिकारिणः सर्वे मम भक्तास्तु ते यदि ॥ २६ ॥

अनन्यशरणानां च तथैवाऽनन्यसेविनाम् । अनन्यसाधकानां च वक्तव्यो मन्त्रउत्तमः

आर्त्तानामाशु फलदस्सकृदेव कृतो ह्यसौ । दृप्तानामपि जन्तूनां देहान्तरनिवारणः॥२८

आर्त्तोजिज्ञासुरर्थार्थीज्ञानी वाऽपिप्रजापते !। सकृन्मांशरणं यातिततःकामानवाप्नुयात्

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नाऽदीक्षिताय वक्तव्यं नाऽभक्ताय च मानिने ।
नास्तिकाय न लुब्धाय न श्रद्धाविमुखाय च ॥ ३० ॥

न चाऽशुश्रूषवे वाच्यं नाऽसम्वत्सरवासिने । कामक्रोधविमुक्तस्तु दम्भलोभविवर्जि
मां च योऽव्यभिचारेण भक्तियोगेन सेवते । वक्तव्यं तस्य विधिवन्मन्त्ररत्नमनुत्तम
देशकालादिनियमानारीमित्रादिशोधनम् । न्यासमुद्रादिकं तस्य पुरश्चरणसंयुतम्
मच्चक्राङ्कितदेहत्वं मदीयाराधनं तथा । मयि संन्यस्तकर्मत्वं मदनन्यशरणता ॥ ३
मयिसर्वफलन्यासोमहाविश्वासपूर्वकम् । अनन्यसाधनत्वं चाप्याकिञ्चन्यंतथाऽ
अवैष्णवानां सम्भाषावन्दनादिविवर्जनम् । अनन्यदेवतानां च वन्दनं पूजनं तथा
एवमाद्याश्च नियमाः प्रपन्नस्य प्रकीर्तिताः । इत्यादिगुणयुक्ताय वक्तव्यं मन्त्रमुत्त
तस्य नारायणश्चाऽहमृषिर्विष्णुःसनातनः । देवताच श्रियासार्द्धमहं वात्सल्यसा
सर्वलोकेश्वरः श्रीमान्सुशीलः सुलभस्तथा । सर्वज्ञः सर्वशक्तिश्च सदापूर्णमनोर
सर्वगः सर्वबन्धुश्च कृपापीयूषसागरः । श्रीमान्नारायणश्चाऽहं देवतासमुदाहृतः
छन्दस्तु देवी गायत्री पञ्चविंशाक्षरात्मिका । द्विसप्तत्रित्रित्रिपञ्चद्विषडङ्गानि योज
लक्ष्म्या मदनपायिन्या मांध्यायेद्विश्वरूपिणम् । शङ्खचक्रगदापद्मपाणिकं दिव्यभूष
वामाङ्कस्थश्रिया सार्द्धं पूजयेत्प्रयतः शुचिः । अनेन मन्त्ररत्नेन गन्धपुष्पनिवेदनैः
सकृत्सम्पूज्यमानोऽपि सन्तुष्टोऽस्मि प्रजापते ! ॥ ४४ ॥

ब्रह्मोवाच ।

सम्यगुक्तं त्वया नाथ! रहस्यमिदमुत्तमम् । मन्त्ररत्नप्रभावश्च सर्वसिद्धिप्रदो नृणाम्

पिता त्वं सर्वलोकानां माता त्वं गुरुरेव च ।
त्वं च स्वामी सखा भ्राता गतिस्त्वं शरणं सुहृत् ॥ ४६ ॥

अहंतु तवदेवेश दासश्शिष्यस्तथा सुतः । तस्मान्ममदयासिन्धो! प्रोक्तवानिदमुत्त
अधुना मन्त्ररत्नस्यदीक्षां सम्यग्विधानतः । ब्रूहि सर्वत्र तत्त्वेन लोकानां हितकाम्य

श्रीभगवानुवाच ।

शृणु वत्स प्रवक्ष्यामि मन्त्रदीक्षाविधिं परम् । आचार्यं संश्रयेत्पूर्वं मदाश्रयणसि

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

आचार्योवेदसम्पन्नो विष्णुभक्तोविमत्सरः। मन्त्रज्ञो मन्त्रभक्तश्चसदा मन्त्राशयःशुचिः
सत्सम्प्रदायसंयुक्तो ब्रह्मविद्याविशारदः। अनन्यसाधनश्चैव तथानन्यप्रयोजनः ॥५१॥
ब्राह्मणो वीतरागश्च क्रोधलोभविवर्जितः। सद्वृत्तौ शासिता चैव मुमुक्षुः परमार्थवित्
एवमादिगुणोपेत आचार्यःसर्वदा सुहृत्। आचाराच्छासयेद्यस्तु स आचार्य इतीरितः
यस्त्वाचार्यपराधीनस्सद्वृत्तौ शास्यतेयदि। शासनेस्थिरवृत्तिश्च शिष्यःसद्भिरुदाहृतः

एवं लक्षणसंयुक्तं शिष्यं सर्वगुणान्वितम्।
अध्यापयेद्विधानेन मन्त्ररत्नमनुत्तमम् ॥ ५५ ॥

द्वादश्यां श्रवणे वाऽपि कर्हिचिद्वैष्णवे दिने। सदाचार्योपसम्प्रीते तत्रदीक्षां समाचरेत्
सुदर्शनं पाञ्चजन्यंसुवर्णेन प्रकारयेत्। रौप्येण वाऽपिताम्रेण कांस्येनाऽपि प्रकारयेत्
स्नाप्यपञ्चामृतैः शुद्धैरर्चयेत्पुरतो मम। तुलसीगन्धपुष्पाद्यैस्तन्मन्त्रेण विधानतः ॥
तत्र संस्थापयेदग्निं स्वगृह्योक्तविधानतः। आचार्योजुहुयादाज्यंमन्त्रेणाऽथद्विजोत्तमः
अष्टोत्तरसहस्रं वा शतमष्टोत्तरन्तु वा। जुहुयान्मन्त्ररत्नेन तथाऽन्यैर्वैष्णवैः शुभैः॥६०
मन्त्रैः पुरुषसूक्ताद्यैर्जुहुयाद्घृतपायसम्। तस्मिन्नग्नौ क्षिपेच्चक्रं शङ्खं च द्विजसत्तमः॥
षडक्षरेण जुहुयादाज्यं विंशतिसङ्ख्यया। प्रतप्तं चक्रमादाय मन्त्रेणैवाङ्कयेद्गुरुः ॥६२॥
शङ्खेनचाऽङ्कनं कुर्याद्बाह्वोर्दक्षिणसव्ययोः। होमशेषं समाप्याऽथ पुनःपूजांसमाचरेत्
ततःकलशमादाय पवित्रोदकपूरितम्। मन्त्रेणैवाऽभिमन्त्र्याऽथ तस्यमूर्ध्न्यभिषेचयेत्
सितवस्त्रधरंसम्यगाचान्तं विनयान्वितम्। ऊर्द्ध्वपुण्ड्रधरं शिष्यंमन्त्रमध्यापयेद्गुरुः
मन्त्रार्थश्च प्रवक्तव्यो वृत्तिश्चैव विशेषतः। लब्धमन्त्रस्तदाचार्यं पूजयेद्भूषणादिभिः

अनेन विधिना मन्त्रं योऽधीते वैष्णवाद्गुरोः।
ततः स वैष्णवं याति नान्यथा सुरसत्तम! ॥ ६७ ॥

नारद उवाच।

एवमुक्त्वा विधातारं देवदेवो हरिः पिता।
स्वचक्रेणाऽङ्कयित्वा तु तस्मै मन्त्रं ददौ स्वयम् ॥ ६८ ॥

सर्वलोकेश्वरोदेवो ब्रह्मा मम पिताप्रभुः। ममाऽपि विधिवन्मन्त्रं स ददौमुनिसत्तमाः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तस्माद्यूयं मुनिश्रेष्ठा धारयित्वा सुदर्शनम् । नारायणपदद्वन्द्वं गच्छध्वं शरणं द्विजाः

वसिष्ठ उवाच ।

इत्युक्ता मुनयः सर्वे नारदेन सुरर्षिणा । द्वयाधिकारिणः सर्वे याता विष्णोःपरं पदम्
तस्मात्त्वमपि चेद्राजन्विष्णुसायुज्यमिच्छसि । दीक्षामार्गविधानेन धारयित्वासुदर्शनम्
नारायणपदद्वन्द्वं तदेकं शरणं व्रजः । सर्वलोकेश्वरः साक्षाद्ब्रह्मा त्रिभुवनेश्वरः ॥

ममाऽपि नारदस्याऽपि प्रोक्तवान्मन्त्रमुत्तमम् ।
शौनकादिमहर्षीणां नैमिषारण्यवासिनाम् ॥ ७४ ॥

नारदः प्रददौ मन्त्रं प्रपत्तिं शरणागतिम् । एतद्गुह्यतमं राजन्न जानन्ति महर्षयः ॥
देवताश्चनजानन्तिसिद्धाः साध्याश्चदानवाः । मयाऽपिप्रापितो मन्त्रंशक्तिपुत्रःपराशरः
इदं रहस्यं परमं लक्ष्मीनारायणं द्वयम् । राजंस्तवाऽपि वक्ष्यामि प्रपत्तिं शरणागतिम्
द्वयात्परतरं मन्त्रं नास्ति सत्यं ब्रवीमिते । अस्मात्परतरं धर्म्यं नास्ति लोकेषु किञ्चन

सत्यं सत्यं पुनः सत्यं ब्रह्मणा कथितं पुरा ।
नारायणात्परो देवो नास्ति मुक्तिप्रदो नृणाम् ॥ ७९ ॥
तत्सेवया भवेन्मोक्षः सर्वकर्मनिकृन्तनः ॥ ८० ॥

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे वसिष्ठदिलीप-
सम्वादेविद्योपदेशो नाम त्रयोविंशत्यधिकद्विशततमोऽध्यायः ॥ २२३ ॥

---

## चतुर्विंशत्यधिकद्विशततमोऽध्यायः

### वशिष्ठदिलीपसम्वादेप्रसङ्गात्पार्वतीप्रश्नेशङ्करद्वाराविष्णुभक्तिविधिप्रकाशनम्

दिलीप उवाच ।

भगवन्सर्वमाचक्ष्व हरिभक्तिसुधामयम् । शृण्वतो नैव तृप्तिर्मे विष्णुभक्तिं सुखावहाम्
तापत्रयमहाज्वालावह्निभिः सततंनृणाम् । सन्तप्तानां मुनिश्रेष्ठ! विष्णुभक्तिसुधा

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विता किमन्यच्छरणं भवारण्येभयानके । आचक्ष्व विस्तरेणाऽथ भक्तिभेदान्महामुने!
उपास्यमानान्सततं मुनिभिः परमात्मनः ॥ ३ ॥

वसिष्ठ उवाच ।

साधुपृच्छसिराजेन्द्र!संसारोत्तारणंनृणाम् । वैकुण्ठस्यपरेशस्यभक्तिंनित्यसुखावहाम्
इममेव महाप्रश्नं कैलासशिखरे पुरा । पप्रच्छ गिरिजा देवी शङ्करं लोकपूजितम् ॥५।

पार्वत्युवाच ।

देवदेव महादेव त्रिपुरघ्न सुरेश्वर! । विष्णुभक्तिं ममाऽऽचक्ष्व मुक्तिदां सर्वदेहिनाम् ॥
उपास्यभेदान्मन्त्रांश्च तत्तत्पूजाविधींस्तथा ।
तस्य विष्णोः स्वरूपं च तद्विभूतिगुणादिकम् ॥ ७ ॥
तस्य लोकस्वरूपंच यं प्राप्य न निवर्तते । सर्गस्थितिलयं येन करोति भगवान्हरिः ॥८
यद्गत्वा न निवर्तन्ते तद्धाम परमं हरेः । येन केन च कृत्येन साधनेन परं पदम् ॥९॥
प्राप्नुवन्ति नराः पापा विषयासक्तचेतसः । विस्तरेण मयि प्रीत्या ब्रूहि सर्वमशेषतः॥

वसिष्ठ उवाच ।

इति पृष्टो महादेव्या हरस्त्रिपुरहा तदा । उवाच परमप्रीत्या नमस्कृत्य जनार्दनम् ॥

रुद्र उवाच ।

साधु साधु महादेवि ! सर्वलोकहितैषिणि ! ।
साधु पृच्छसि मां देवि ! श्रीशमाहात्म्यमुत्तमम् ॥ १२ ।
धन्याऽसि कृत्यपुण्याऽसि विष्णुभक्ताऽसि पार्वति! ।
परितुष्टोऽस्मि ते भद्रे ! शीलरूपगुणैः सदा ॥ १३ ॥
अथ वक्ष्यामि गिरिजे! भगवद्भक्तिमुत्तमाम् ।
तन्मन्त्राणां विधानं च स्वरूपं तस्य शार्ङ्गिणः ॥ १४ ॥
तत्त्वं नारायणो विष्णुर्वासुदेवस्सनातनः । परमात्मा परं ब्रह्म परं ज्योतिः परात्परः
अच्युतः पुरुषःकृष्णः शाश्वतःशिवईश्वरः । नित्यः सर्वगतः स्थाणूरुद्रस्साक्षी प्रजापतिः
यज्ञो यज्ञपतिः साक्षाद्ब्रह्मणः पतिरेव च । हिरण्यगर्भः सविता लोककृल्लोकभृद्विभुः ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अकारवाच्यो भगवाञ्छ्रीभूनीलापतिः प्रभुः । उतामृतत्वस्येशानो यदन्नेनाऽतिरोहति
सहस्रमूर्द्धा विश्वात्मा सहस्राक्षःसहस्रपात् । सभूमिंसर्वतः स्पृत्वाह्यत्यतिष्ठद्दशाङ्गुलम्
अनन्तःश्रीपतीरामो गुणभृन्निर्गुणो महान् । सर्वलोकेश्वरः श्रीमान्सर्वज्ञः सर्वतोमुखः
तस्यलोकप्रधानस्य जगन्नाथस्यपार्वति!। माहात्म्यं वासुदेवस्य यच्छक्यंतद्ब्रवीमि
अशक्यं तन्मया वक्तुं ब्रह्मणा सह दैवतैः । सर्वोपनिषदामर्थे वेदान्ते परिनिश्चितम्
तस्योपासनभेदांश्च शृणु वच्मि पुनः पृथक् । आद्यं तु वैष्णवं प्रोक्तं शङ्खचक्राङ्कनम्
धारणं चोर्द्ध्वपुण्ड्राणां तन्मन्त्राणांपरिग्रहः । अर्चनंच जपोध्यानं तन्नामस्मरणं
कीर्तनं श्रवणं चैव वन्दनं पादसेवनम् । तत्पादोदकसेवाच तन्निवेदितभोजनम्
तदीयानां च सेवा च द्वादशीव्रतनिष्ठता । तुलसीरोपणं विष्णोर्देवदेवस्य शार्ङ्गिणः
भक्तिः षोडशधा प्रोक्ता भवबन्धविमुक्तये । सर्वेषामेवदेवानां ममाऽपि पुरुषोत्तमः
पूजनीयो हरिर्नित्यंब्राह्मणानां विशेषतः । तस्मात्तु ब्राह्मणो नित्यं विधिवत्पूजयेद्धरिम्
तच्चिह्नैरङ्कितः श्रीशपदं प्राप्नोत्यसंशयम् । शङ्खचक्राङ्कनं कुर्याद्ब्राह्मणो बाहुमूलयोः
हुताग्निनैव सन्तप्य सर्वपापापनुत्तये । चक्रं वा शङ्खचक्रे वा तथा पञ्चायुधानि वा
धारयित्वैव विधिवद्ब्रह्मकर्म समारभेत् । अग्नितप्तं पवित्रंच धृत्वा वै भुजमूलयोः
त्यक्त्वा यमपुरं घोरं याति विष्णोः परं पदम् । चक्रचिह्नविहीनस्तु यःपूजयति केशवम्
तत्सर्वं विफलं याति पूजामन्त्रजपादिकम् । अग्नितप्तेन चक्रेण ब्राह्मणोबाहुमूलयोः
अङ्कयित्वाजपन्मन्त्रं संसारान्मोक्षमाप्नुयात् । सुदर्शनं धारयित्वावह्नितप्तं द्विजोत्तमः
तपनीयविधानेन पश्चात्कर्मसु योजयेत् । विष्णुचक्रविहीनंतु यः श्राद्धे भोजयिष्यति
व्यर्थं भवति तत्सर्वं निराशाःपितरो गताः । विष्णुचक्राङ्कितं विप्रं पूजयेच्छ्राद्धकर्मणि
विष्णुचक्रविहीनंतु प्रयत्नेन विवर्जयेत् । दद्याद्गोभूहिरण्यादिचक्राङ्कितभुजाय वै
यद्दत्तं चक्रहीनाय तत्सर्वमसुराय वै । अग्नितप्तेन चक्रेण बाहुमूलेतु लाञ्छिताः
सर्वपापविनिर्मुक्ता यान्ति विष्णोः परं पदम् । हुताग्नितप्तचक्रेण शरीरं यस्य चिह्नितम्

तस्य तीर्थानि यज्ञाश्च सम्प्राप्ता नाऽत्रसंशयः ।
अधृत्वा विधिना चक्रं ब्राह्मणः प्राकृतो भवेत् ॥ ४० ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तस्य किञ्चिदश्नीयादपिक्रतुसहस्रिणः। अधृत्वा विधिना चक्रं ब्राह्मणो ज्ञानदुर्लभः
तत्सर्वलोकेषु ब्राह्मण्यात्प्रच्युतोभवेत्। शङ्खचक्रधरोदेवो हरिःपूज्योयथाऽऽत्मभिः
एव सर्वैस्सम्पूज्यो विप्रश्चक्रादिचिह्नितः। सर्ववेदविदो वाऽपि सर्वशास्त्रविशारदः॥
धृत्वाविधिना चक्रं ब्राह्मणः पतितोभवेत्। ऊर्ध्वपुण्ड्रविहीनस्तु शङ्खचक्रविवर्जितः
गर्दभे समारोप्य बहिः कुर्यात्स्वपत्तनात्। प्रकृतिस्पर्शरहितो वासुदेवो जनार्दनः॥
एव ब्राह्मणो देवि! विष्णुचक्रेण चिह्नितः। तस्मात्प्रकृतिसंसर्गपापौघदहनं हरेः॥
र्थं विभृयाच्चक्रं शङ्खंच भुजमूलयोः। स्त्रीशूद्राणां सदा धार्यं चन्दनेन सुगन्धिना॥
बाहुमूले लिखेच्चक्रं तप्तं तु ब्राह्मणस्य वै। तप्तेनैवाऽङ्कनं कुर्याद्ब्राह्मणस्य विधानतः॥
श्रौतस्मार्त्तादिसिद्ध्यर्थं मन्त्रसिद्ध्यैतथैवच। हरेः पूजाधिकारार्थं चक्रंधार्यंविधानतः
वैष्णवत्वस्य सिद्ध्यर्थं ज्ञानसिद्ध्यर्थमेव च। प्रतप्तैश्चक्रशङ्खाभ्यां हुत्वा होमं विधानतः
[illegible]र्नं दाहयेद्गात्रं ब्राह्मणो हरिलाञ्छनात्। शङ्खचक्रगदाखड्गशार्ङ्गादन्यैर्हरेरपि ॥५१॥
[illegible]र्णं दहेद्देहं नान्यदग्धोऽर्हति क्रियाम्। अचक्रधारिणं विप्रं दूरतः परिवर्जयेत्॥
श्वाकमिव नेक्षेत लोके विप्रमवैष्णवम्। वैष्णवो वर्णबाह्योऽपि पुनाति भुवनत्रयम्

तस्मात्तु विधिना चक्रं धार्यं विप्रैः शुभानने!।
ब्राह्मणा मन्त्रसिद्ध्यै च ज्ञानसिद्ध्यै च मुक्तये॥ ५४॥
अप्राकृता महात्मानो विष्णुचक्रेण लाञ्छिताः।
विष्णुचक्रविहीनास्तु ब्राह्मणाः प्राकृताः स्मृताः॥ ५५॥

[illegible]श्रमेषु वसतां ब्राह्मणानां विशेषतः। विधिना वैष्णवं चक्रं धार्यंहि श्रुतिनोदनात्
[illegible]णे तु भुजे विप्रो बिभृयाद्वै सुदर्शनम्। सव्येतु शङ्खं बिभृयादिति ब्रह्मविदोविदुः
[illegible] महोपनिषदि प्रोक्तंचक्रादिधारणम्। तथैव साम्नि यजुषि ऋचि प्रोक्तं शुभानने!॥

अतप्ततनूर्नतदामो अश्नुते श्रृता स इद्वहन्तस्तत्समाशत।
इत्यापस्तम्बशाखायाम्प्रोक्तं चक्रस्य धारणम्॥ ५९॥
प्रते विष्णो अब्जचक्रे पवित्रे जन्माम्भोधिं तर्तवे चर्षणीन्द्राः।
मूलेबाह्वोर्दधतेऽन्ये पुराणालिङ्गान्यङ्ग तावकान्यर्पयन्ति॥ ६०॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

चरणं पवित्रं विततं पुराणं वाङ्मयंशुभम् । तेन चक्रेण सन्तप्तास्तरेयुः पातकाम्बुधि
पवित्रं ब्राह्मणस्पत्यं जगद्व्याप्तं हरेस्सदा । तेनातप्ता तनूर्येषां न ते यान्ति परं पद
तेन तप्ता तनूर्येषां ते प्रयान्ति परं पदम् । पवित्रं चरणं नेमिः पविश्चक्रंसुदर्शनम्
सहस्रारं प्राकृतघ्नं लोकद्वारं महौजसम् । नामानि विष्णुचक्रस्य पर्यायेण निबो
शूद्धेन वह्नितप्तेन ब्रह्म तेन पुनीहि नः । यत्ते पवित्रमर्चिष्मदग्ने तेन पुनीहि नः ॥
येन देवाः पवित्रेण आत्मानं पुनते सदा । तेन सहस्रधारेण पावमान्यः पुनन्तु

प्राजापत्यं पवित्रन्तु शतोद्यामं हिरण्मयम् ।
वयं ब्रह्मविदस्तेन पूतं ब्रह्म पुनीमहे ॥ ६७ ॥

सनेमिचक्रमजरं चक्षुरस्य महात्मनः । अस्मिन्हि विधृते देहे महोन्नतपदं ययौ
तस्माद्वै विधिवद्धार्याः शङ्खचक्रादिहेतयः । ब्राह्मणानां विशेषेण वैष्णवानां वि

धृतोर्द्ध्वपुण्ड्रः कृतचक्रधारी विष्णुं परं ध्यायति यो महात्मा ।
स्वरेण मन्त्रेण सदा हृदिस्थं परात्परं याति विशुद्धचेताः ॥ ७० ॥
ये कण्ठलग्नतुलसीनलिनाक्षमाला ये बाहुमूलपरिचिह्नितशङ्खचक्राः ।
ये वा ललाटफलके लसदूर्ध्वपुण्ड्रास्ते वैष्णवा भुवनमाशु पवित्रय

दिवस्पतेः सुविततं पवित्रं ये तु दक्षिणे । न वहन्ति भुजे सम्यङ्नहि शोचन्ति
येवहन्ति भुजेचक्रं शङ्खञ्च विधिना द्विजाः । परंव्योम्नितु ते स्थानमधितिष्ठन्ति ते

होमाग्निसंतप्तपवित्रलाञ्छितो मूले तु बाह्वोः परमात्मनो हरेः ।
स तारयित्वा भवसागरं महच्छुद्धं परं याति परेशलोकम् ॥ ७४ ॥

अङ्कयेत्तप्तचक्राद्यैरात्मनो बाहुमूलयोः । कलत्रापत्यभृत्येषु पश्वादिषु समङ्कयेत्
इत्येवं श्रुतयः सर्वाः कथयन्ति वरानने ॥ तथैव सेतिहासेषु पुराणेष्वपि कथ्यते
द्विविधं वैष्णवं प्रोक्तं बाह्यमाभ्यन्तरं तथा । शङ्खचक्रादिभिर्बाह्यमान्तरं वीतरा
बाह्याभ्यन्तरसाम्यं यत्तद्वैष्णवमुदाहृतम् । तस्माच्चक्रादिचिह्नन्तु प्रथमं वैष्णवं
आन्तरं स्मरदोषादि विमुक्तं स्वात्मदर्शनम् । सर्वभूतदयाशान्तिरिन्द्रियार्थेष्वलो
पुत्रदाराद्यसङ्गत्वं योगाभ्यासरतिस्तथा । अनन्यभक्तियोगेन परेशस्याऽभिषेव

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ब्रह्मोवाच ।

प्रसीद देव! मे नाथ! नागपर्यङ्कसंस्थित !। सर्वेश सर्वदेवात्मन्सर्वदेवमयाऽच्युत ! ॥
आद्यं जगत्तरोर्बीजं मध्ये त्वंसर्वतोऽधिकः । अन्तेचपशुनाथस्त्वंस्वेच्छाचारस्त्वमेवच
त्वमेव चिदचिद्रूपं जगत्सर्वं सनातनम् । त्वमव्यक्तो हि भूतादिः प्रधान्पुरुषोऽव्ययः
त्वमादिमध्यान्तवपुर्जगतः परमेश्वरः । त्वमेव सर्वलोकानामाश्रयः पुरुषोत्तमः ॥१६॥
भूतादिस्त्वं महद्भूतं भूतसङ्घस्य कारणम् । त्वमहङ्कारमाश्रित्य गुणत्रैविध्यमाप्तवान्
त्वमादिभूतश्चाऽऽकाशं त्वं वायुः सर्वगो महान् ।
त्वमादिस्त्वमनादिश्च त्वमग्निस्तेजसां निधिः ॥ २१ ॥
त्वमापः सर्वजगतां जीवनः परमेश्वरः । त्वं भूमिर्जगदाधारो भूधरस्त्वं महामते ! ॥
सरितः सागरस्त्वं वै सर्वस्याऽऽदिस्त्वमेव च । देवर्षिः सर्वभूतानि त्वमेवपुरुषोत्तम!
त्वयैव प्रेरिता लोकाश्चेष्टन्ते साध्वसाधुषु । दैतेयेनाऽऽहृता वेदाःप्रविष्टाश्चमहार्णवम्
वेदाधारमिदं सर्वं जगत्स्थावरजङ्गमम् । वेदाश्चैव हि सर्वेषां धर्माणां परितः स्थितिः
वेदैश्च सर्वदेवानां नित्यं तृप्तिर्भविष्यति । तस्माद्वेदान्समानेतुं त्वमेवाऽर्हसि केशव !॥

श्रीमहादेव उवाच ।

एवमुक्तो हृषीकेशो ब्रह्मणा परमेश्वरः । मात्स्यरूपं समास्थाय प्रविवेश महोदधिम् ॥
दैत्यं सुमहाघोरं माकरं रूपमास्थितम् । तुण्डाग्रेण विदार्याऽथ जघानामरपूजितः
हत्वा सर्ववेदांश्च साङ्गोपाङ्गसमन्वितान् । गृहीत्वा प्रददौ तस्मै ब्रह्मणेसमहाद्युतिः
अन्योन्यमिश्रिता वेदा ग्रसितास्तेनरक्षसा । व्यस्ता भगवता तेन व्यासरूपेणविष्णुना
संस्कृतास्तथा वेदा व्यासेनैव महात्मना । एवं मत्स्यावतारेण रक्षिताः सर्वदेवताः
श्रुतिप्रदानेन जगत्त्रयं तदा कृत्वा निरातङ्कमहोरमाधवः ।
संस्तूयमानः सुरसिद्धसङ्घैरन्तर्दधे योगिभिरर्चिताङ्घ्रिः ॥ ३२ ॥
वासुदेवोहि भगवान्सर्वदेवमयो हरिः ॥ ३३ ॥
इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे उमामहेश्वर-
सम्वादे मत्स्यावतारवर्णनं नाम त्रिंशदधिकद्विशततमोऽध्यायः ॥ २३० ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# एकत्रिंशदधिकद्विशततमोऽध्यायः

## कूर्मावतारवर्णने दुर्वासःशापकथनम्

श्रीरुद्र उवाच ।

यत्कौर्मं वैभवंविष्णोःसर्वलोकनमस्कृतम् । तद्वक्ष्यामिप्रिये!सम्यक्छृणुष्वैकाग्रचे

अत्रिपुत्रो महातेजा दुर्वासा इति विश्रुतः । प्रचण्डःसर्वलोकानां क्षोभकारी महा

स ययौ हिमवत्पृष्ठं ब्रह्मर्षिस्तपसोनिधिः । ममांशभूतो ब्रह्मर्षिः सर्वेषां भयदस्त

स कदाचिन्महामेरोः पार्श्वे किन्नरसेविते । सम्प्राप्य देवतास्तत्र पूजयामासनि

उषितस्तत्र वर्षं तु किन्नरीभिः स पूजितः । महेन्द्रं द्रष्टुकामोऽसौस्वर्लोकंप्रययौ

तस्मिन्काले महातेजा गजारूढं महेश्वरम् । ददर्श सर्वदेवैस्तं पूज्यमानं शचीपति

तं च दृष्ट्वा स हृष्टात्मा दुर्वासाः सुमहातपाः ।
पारिजातस्रजं तस्मै प्रददौ विनयान्वितः ॥ ७ ॥

आदाय देवताधीशस्तां स्रजं गजमूर्द्धनि । विन्यस्य तत्र देवेशः प्रययौ नन्दनं प्रति

करेणाऽऽदाय तां मालांमदोद्रिक्तस्ततोगजः । पीडयित्वाऽथचिक्षेपसञ्छिन्नांधरणी

ततः क्रुद्धो महातेजा दुर्वासा रक्तलोचनः । प्रशप्तवान्महेन्द्रं तं संतप्तक्रोधवह्निना

दुर्वासा उवाच ।

त्रैलोक्यैकश्रिया युक्तो यस्मान्मामवमन्यसे । तस्मात्त्रैलोक्यश्रीर्नष्टा भवत्वेवन

रुद्र उवाच ।

इतिशप्तस्ततः शक्रो जगाम स्वपुरं पुनः । ततः श्रीर्जगतां धात्री क्षणादन्तर्दधे स्व

अन्तर्द्धानं गता लक्ष्मीस्तदा नष्टं जगत्त्रयम् । यदपाङ्गाश्रितंसर्वं जगत्स्थावरजङ्ग

तस्यामन्तर्द्धानवत्यां सर्वं नष्टतरं भवेत् । ब्रह्मादित्रिदशाः सर्वे गन्धर्वा यक्षकिन्न

दैत्याश्च दानवा नागा मनुष्या राक्षसास्तथा । पशवःपक्षिणःकीटाःसर्वेस्थावरजङ्ग

तया लक्ष्म्या जगन्मात्रा ते सर्वे नाऽवलोकिताः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दारिद्र्येणैव विहतास्ते सर्वे दुःखभागिनः ॥ १६ ॥
...त्पिपासार्दितास्सर्वे चुक्रुशुर्गतचेतसः । न ववृषुर्जलधराः सर्वे शुष्का जलाशयाः ॥
...र्वे ते पादपाःशुष्काःफलपुष्पविवर्जिताः । एतत्सर्वं जगच्छून्यं लक्ष्मीवीक्षणवर्जितम्
...सत्त्वाश्चाभवन्देवा यज्ञभागविवर्जिताः । तदा देवाः सगन्धर्वा दैत्यदानवराक्षसाः
...त्पिपासार्दिता जग्मुर्ब्रह्माणममितौजसम् । ऊचुस्तं देवदेवेशमब्जयोनिं पितामहम्

देवाऊचुः ।

...क्षुत्पिपासाभ्यां पीडितं हि जगत्त्रयम् । न हुतं न वषट्कारः सर्वधर्मविवर्जितम्
...त्पिपासार्दिताः सर्वे देवदानवमानवाः । त्रातारं सर्वलोकेशं भवन्तं शरणं गताः ॥
त्रातुमर्हसि देवेश ! क्षुत्पिपासार्दिताञ्जनान् ॥ २३ ॥

रुद्र उवाच ।

...तेषां वचः श्रुत्वा सर्वलोकपितामहः । उवाच परमप्रीतस्तान्सर्वान्प्रतिमानदः ॥

ब्रह्मोवाच ।

...र्वं देवताः सर्वे दैत्यगन्धर्वमानवाः । महेन्द्रस्याऽपचारेण सर्वमेतदुपस्थितम् ॥
...भूतमिदं घोरं जगत्सम्वर्त्तकं महत् । दुर्वासाः सुमहात्मा तु यतःक्रोधमवाप्तवान्
...त्क्रोधेन तेनेदं नष्टं लोकत्रयं सुराः । असौ रोषपरीतात्मा क्रोधेन कलुषीकृतः
...यं च श्रीनष्टं भवत्वित्याहदुर्मतिः । तच्छापाज्जगतां धात्रीलक्ष्मीर्नारायणप्रिया
...र्द्धानं गता देवी जगन्माता महेश्वरी । यदपाङ्गेक्षितालोका भवन्ति सुखितास्सदा
...नाऽलोकिता जगन्मात्रा दुःखभागिन एव हि ।
तस्मात्सर्वे वयं गत्वा दुग्धाब्धौ स्थितमुत्तमम् ॥ ३० ॥
नारायणं देवमर्चयामः सनातनम् । तस्मिन्प्रसन्ने देवेशे शिवमेतद्भवेज्जगत् ॥३१॥

महादेव उवाच ।

...निश्चित्य मनसा ब्रह्मा देवगणैर्युतः । भृग्वादिमुनिभिः सार्द्धं प्रययौ क्षीरसागरम्
...स्योत्तरतटे ब्रह्मरुद्रादिदेवताः । विष्णुं समर्चयामासुः पौरुषेण विधानतः ॥३३॥
...षोडशाक्षरं मन्त्रं पौरुषं सूक्तमेव च । ध्यायन्तोऽनन्यमनसो जुहुवुः परमेश्वरम् ॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तुष्टुवुः स्तवनैर्दिव्यैर्नमश्चक्रुर्विधानतः । ततः प्रसन्नो भगवान्सर्वेषां च दिवौकसाम्
तेषां सन्दर्शने तस्थौ स्तूयमानो महर्षिभिः । वैनतेयं समारुह्य सर्वदेवमयं विभुः
तं दृष्ट्वा जगतामीशं शङ्खचक्रगदाधरम् । पीतवस्त्रं चतुर्बाहुं पुण्डरीकनिभेक्षणम्
श्रीवत्सकौस्तुभोरस्कं वनमालाविभूषितम् । किरीटहारकेयूरनूपुरैरुपशोभितम्
तं दृष्ट्वा जगतामीशमानन्दाश्रुपरिप्लुताः । तुष्टुवुर्जयशब्देन नमश्चक्रुर्निरन्तरम्
ततः प्रोवाच भगवान्कृपया सर्वदेवताः । वरदोऽस्मि वरं देवा वृणीध्वमिति वा...
इति श्रुत्वा तदा सर्वे देवा ब्रह्मपुरोगमाः । ऊचुः प्राञ्जलयो देवमिदं वचनमा...

देवा ऊचुः ।

भगवन्मुनिशापेन संप्रतीदं जगत्त्रयम् । क्षुत्पिपासार्दितं सर्वं सदेवासुरमा...
तस्माद्भवन्तं शरणं याताःस्म पुरुषोत्तम ।। त्राहि सर्वमिमंलोकं नान्यस्त्राताभवे...

रुद्र उवाच ।

इत्युक्तो दैवतैः सर्वैरच्युतः परमेश्वरः । विचार्यैतदुवाचैतान्देवान्ब्रह्मपुरोगमान्...

श्रीभगवानुवाच ।

अत्रिसूनोर्मुनेः शापादन्तर्द्धानं गता रमा । कटाक्षदर्शनात्तस्या जगदैश्वर्यसं...
तस्माद्यूयं सुराः सर्वे शिवब्रह्मपुरोगमाः । उत्पाट्य मन्दरं शैलं निधाय क्षीर...
मन्दरं घर्घरं कृत्वा सर्पराजेन वेष्टितम् । कुरुध्वं मथनं देवा दैत्यगन्धर्वदानवैः...
उत्पद्यते च सा लक्ष्मीर्जगत्संरक्षणाय वै । तया दृष्टा महाभागा भविष्यथ न...
धारयाम्यहमेवाद्रिं कूर्मरूपेण सम्वृतः । मम शक्त्या सुराःसर्वे भवन्ति च...

रुद्र उवाच ।

इत्युक्ता देवताःसर्वा हरिणा कमलेक्षणे ।। साधुसाध्विति देवेशमूचुर्ब्रह्मपुरोगमाः...
संस्तूयमानो भगवानच्युतः सुरसत्तमैः । अन्तर्दधे ततः श्रीमान्सर्वलोक...
सर्वाधारः सर्वदेवः सर्वत्र समदर्शनः ॥ ५१ ॥

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे उमामहे...
दुर्वासःशापकथनं नामैकत्रिंशदधिकद्विशततमोऽध्यायः ॥ २३१ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# द्वात्रिंशदधिकद्विशततमोऽध्यायः

## कूर्मावतारकथने देवैर्लक्ष्मीप्राप्त्यैमन्दरेणक्षीरसागरमथनम्

शङ्कर उवाच ।

सुरगणाः सर्वे दानवाद्या महाबलाः । उत्पाट्य मन्दरं शैलं चिक्षिपुः पयसांनिधौ
नारायणः श्रीमान्भगवान्भूतभावनः । कूर्मरूपेण तं शैलं दधाराऽमितविक्रमः ॥
आदिमध्यान्तवपुर्विश्वरूपः सनातनः । अधारयद्गिरिवरं स्वपृष्ठे जगदीश्वरः ॥ ३ ॥
केन भुजेनैव शिखरं सर्वगोऽव्ययः । ततो देवासुराःसर्वे ममन्थुः क्षीरसागरम् ॥
राजेन सम्वेष्ट्य घर्घरं मन्दराचलम् । मथ्यमानेऽथ दुग्धाब्धौ दैवतैः सुमहाबलैः
सादनार्थं लक्ष्म्याश्च सर्वएव महर्षयः । उपोष्य नियमं कृत्वा जेपुः श्रीसूक्तमेव च ॥
नामपठनं चक्रुर्दिव्या द्विजोत्तमाः । एकादश्यां तु शुद्धायां मथ्यमाने महाम्बुधौ॥
ऋषयः सर्वेजेपुः श्रीमन्त्रमुत्तमम् । काङ्क्षमाणाःश्रियो जन्म लक्ष्मीनारायणंहरिम्
त्वासमर्चयामासुर्द्विजाद्या मुनिसत्तमाः । ततस्तस्मिन्मुहूर्ते तुमथ्यमानेमहाम्बुधौ
भूत्तत्र प्रथमं कालकूटं महाविषम् । महापीडं महाघोरं सम्वर्ताग्निसमप्रभम् ॥१०॥
प्रदुद्रुवुः सर्वे भयार्त्ता देवदानवाः । ततस्तान्विद्रुतान्दृष्ट्वा भयार्त्तान्सुरसत्तमान् ॥
वार्याऽब्रवंवाक्यमहं तत्र शुभेक्षणे ! । भोभोदेवगणाः सर्वे न भेतव्यं विषं प्रति॥
माहारयिष्यामि कालकूटं महाविषम् । इत्युक्तास्ते मयासर्वे देवा इन्द्रपुरोगमाः ॥

साधुंसाध्विति वाक्यैर्मां तुष्टुवुः प्रणता भृशम् ।
तद्दृष्ट्वा मेघसङ्काशं प्रादुर्भूतं महाविषम् ॥ १४ ॥

ध्यात्वा नारायणं देवं हृदये गरुडध्वजम् । उदयादित्यसङ्काशं शङ्खचक्रगदाधरम् ॥
भूमिसहितं देवं तप्तकाञ्चनकुण्डलम् । एकाग्रमनसा ध्यात्वा सर्वदुःखहरं प्रभुम् ॥
मत्रयं महामन्त्रं जप्त्वा भक्त्या समन्वितः । तद्विषं पीतवान्घोरमाद्यं सर्वभयङ्करम्
मत्रयप्रभावाच्च विष्णोः सर्वगतस्य वै । विषं तदभवज्जीर्णं लोकसंहारकारकम् ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अच्युतानन्तगोविन्दइतिनामत्रयं हरेः । योजपेत्प्रयतो भक्त्या प्रणवाद्यं नमोऽन्त
तस्य मृत्युभयंनास्ति विषरोगाग्निजं महत् । नामत्रयं महामन्त्रं जपेद्यः प्रयतात्म
कालमृत्युभयं चाऽपि तस्य नास्ति किमन्यतः । इतिनामत्रयेणैव पीतं देवि! मया
ततः प्रहृष्टास्त्रिदशास्तुष्टुवुर्मां सुविस्मिताः । मां प्रणम्य पुनर्देवा ममन्थुःक्षीरसा
तस्मिन्प्रमथ्यमाने तु मयादेवैश्चभामिनि !। ज्येष्ठादेवी समुत्पन्नारक्तस्रग्वाससाऽ
उत्पन्ना साऽब्रवीद्देवान्किं कर्त्तव्यं मयेति वै । तामब्रुवंस्तु ते देवीं सर्वदेवगणा

देवाऊचुः ।

येषां गृहान्तरे नित्यं कलहः सम्प्रवर्तते । तत्ते स्थानं प्रयच्छामो वस तत्राऽशुभा
परुषं भाषणं नित्यं वदन्त्यनृतवादिनः । सन्ध्याकाले तु येपापाःस्वपन्ति मलचेत
तेषां वेश्मनि सन्तिष्ठ दुःखदारिद्र्यदायिनी । कपालकेशभस्मास्थितुषाङ्गाराणि य
तत्र ते सततं स्थानंभविष्यति न संशयः । यस्य वेश्म कपालास्थिभस्मकेशादिर्वि

तद्भजस्वाऽशुभे ! नित्यं कलिना सह नित्यशः ।
अकृत्वा पादयोः शौचं यस्त्वाचामति दुर्मतिः ॥ २६ ॥

तं भजस्व महादेवि ! कलुषेण भृशं वृतम् । तुषाङ्गारकपालाश्मवालुकावस्त्रचर्म
दन्तधावनकर्तारो भविष्यन्ति नराधमाः । रमस्व कलिना देवि! तेषां वेश्मसु
तिलपिष्टं कलञ्जञ्चकलिङ्गं शिग्रुगृञ्जनम् । छत्राकं विड्वराहंचविल्वं कोशातकी
अलाबुंच पलाण्डुंच ये खादन्ति नराधमाः । तेषां गेहे तव स्थानं देवि दारिद्र्

रुद्र उवाच ।

इत्यादिश्य सुराःसर्वे ज्येष्ठांच कलिवल्लभाम् । पुनश्चमथनं चक्रुःक्षीराब्धेःसुसमा
ततश्च वारुणीदेवी समुत्पन्ना शुभानने !। अनन्तो नागराजोऽथ तां जग्राह सुलो
ततस्तत्र समुत्पन्ना सर्वाभरणभूषिता । वैनतेयस्य भार्याऽभूत्सर्वलक्षणशोभिता
ततोऽप्सरोगणा दिव्या गन्धर्वाश्च महौजसः । जज्ञिरे रूपसम्पन्ना मधुगायनत
ऐरावतस्ततोजज्ञे तथैवोच्चैःश्रवा हयः । धन्वन्तरिः पारिजातः सुरभिः सर्वका
एतान्सर्वान्सहस्राक्षो जग्राह प्रीतमानसः । ततः प्रभातसमये द्वादश्यामुदिते रवौ

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्तूयमाने पुनस्तस्मिन्देवैरिन्द्रपुरोगमैः । ततः प्रहृष्टवदनैः स्तूयमाना महर्षिभिः ॥४०
उत्पन्ना श्रीमहालक्ष्मीः सर्वलोकेश्वरी शुभा । बालार्ककोटिसङ्काशा कनकाङ्गदभूषिता
पद्माम्बुजसमासीना सर्वलक्षणशोभिता । पद्मपत्रविशालाक्षी नीलकुञ्चितमूर्द्धजा ॥४२
दिव्यचन्दनलिप्ताङ्गी दिव्यपुष्पैरलङ्कृता । नानारत्नमयैर्दिव्यैः सर्वैराभरणैर्युता ॥४३॥

तनुमध्या जगद्धात्री पीनोन्नतपयोधरा ।
चतुर्हस्ता विशालाक्षी पूर्णेन्दुसदृशानना ॥ ४४ ॥

मधुपात्रं मातुलुङ्गं स्वर्णपद्मयुगं शुभम् । बिभ्राणा हस्तकमलैः सर्वाभरणभूषितैः ॥
अम्लानपङ्कजां मालां धारयन्ती ह्युरःस्थले । ददृशुस्तां महादेवीं सर्वलोकहितैषिणीम्
ईश्वरीं सर्वभूतानां मातरं पद्ममालिनीम् । नारायणीं जगद्धात्रीं नारायणहृदालयाम् ॥
तां विलोक्य महालक्ष्मीं प्रहृष्टाः सर्वदेवताः । अवादयन्त पटहान्दिवि देवगणा भृशम्
ववृषुः पुष्पवर्षाणि वनदेव्यो निरन्तरम् । जगुर्गन्धर्वपतयो ननृतुश्चाप्सरोगणाः ॥४६

ववुःपुण्यास्तथा वाताः सुप्रभोऽभूद्दिवाकरः ।
जज्वलुश्चाऽग्नयः शान्ताः प्रसन्नाश्च दिशो दश ॥ ५० ॥

श्वेताद्रिनिभैर्दिव्यैश्चतुर्दन्तैर्महागजैः । सुधापूर्णैरत्नकुम्भैस्सिच्यमानां स्वमूर्धनि ॥५१
तां दृष्ट्वा मुनयस्सर्वे जयशब्दैर्निरन्तरम् । स्तुतिभिः पुष्कलाभिश्च नमश्चक्रुस्समन्ततः
तदनन्तरं शीतरश्मिरुदगात्क्षीरसागरे । सुधामयूखवान्सोमो मातुर्भ्राता सुखावहः ॥
नक्षत्राधिपतिश्चाभूच्चन्द्रो वै लोकमातुलः । ततः प्रिया हरेः पुण्या तुलसी लोकपावनी
समुत्पन्ना जगद्धात्री पूजार्थं शार्ङ्गिणो हरेः । ततः प्रहृष्टमनसः सर्वे देवा दिवौकसः॥
शैलं पूर्ववत्स्थाप्य परिपूर्णमनोरथाः । समेत्य मातरं सर्वे शिवब्रह्मपुरोगमाः ॥५६॥
स्तुत्वा नामसहस्रेण जेपुः श्रीसूक्तसंहिताम् । ततः प्रसन्ना सा देवी सर्वान्देवानुवाच ह

श्रीरुवाच ।

वरं वृणीध्वं भद्रं वो वरदाऽहं सुरोत्तमाः ॥ ५८ ॥

रुद्र उवाच ।

ततः प्रहृष्टवदनास्सर्वएव दिवौकसः । ऊचुः प्राञ्जलयो देवाः श्रियं नम्रात्ममूर्तयः ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

देवा ऊचुः ।

प्रसीद कमले ! देवि ! सर्वलोकेश्वरप्रिये ! ।
विष्णोर्वक्षःस्थले देवि ! भव नित्याऽनपायनी ॥ ६० ॥

त्रैलोक्यं न त्वया देवि! त्याज्यं हि परमो वरः । यदपाङ्गाश्रितं सर्वं जगत्स्थावरज
त्वया विलोकिताः सर्वे प्रभवन्ति दिवौकसः । माता रुद्रादिदेवानामैश्वर्यं त्वत्क
एतदिच्छामहे देवि ! जगन्मातर्नमोऽस्तु ते ॥ ६२ ॥

रुद्र उवाच ।

इत्युक्ता दैवतैः सर्वैर्लोकमाता महेश्वरी । एवमस्त्विति तान्देवान्प्राह नारायण
ततो नारायणः श्रीशः शङ्खचक्रगदाधरः । तथैवाऽऽविरभूद्ब्रह्मा पूर्ववत्क्षीरसा
ततः प्रतुष्टुवुर्देवा नमस्कृत्य जनार्दनम् । ऊचुः प्राञ्जलयः सर्वे प्रहृष्टवदनाः शुभ

देवा ऊचुः ।

गृहाण देवीं सर्वेश! महिषीं तव वल्लभाम् । जगत्संरक्षणार्थाय लक्ष्मीमनपगा

रुद्र उवाच ।

इत्युक्त्वा मुनयः सर्वे देवा ब्रह्मपुरोगमाः । नानारत्नमये दिव्ये पीठे बालार्क
निवेश्य देवीं देवं च आनन्दाश्रुपरिप्लुताः ।
नानारत्नमयैः शुभ्रैः स्वर्णकुम्भैर्मनोरमैः ॥ ६८ ॥

सुधामृतजलैः पूर्णैः श्रीमन्मन्त्राभिमन्त्रितैः । अत्राभिषेचनं चक्रुस्तयोर्मूर्ध्नोः सुधा
वैष्णवैश्चानुवाकैश्च श्रीसूक्तेन महर्षयः । दिव्याम्बरैर्दिव्यमाल्यैर्नानारत्नविभू
लक्ष्म्या सह समासीनमर्चयामासुरच्युतम् । गन्धैर्धूपैश्च दीपैश्च नैवेद्यैश्च सुधा
अप्राकृतैः फलैर्दिव्यैरर्चयामासुरीश्वरम् । अमृतादुत्थिता देवी तुलसी कोमल
तया श्रीपादयुगलमर्चयामासुरञ्जसा । प्रदक्षिणमनुव्रज्य नमस्कृत्य मुहुर्मुहुः
तुष्टुवुः स्तुतिभिर्देवा हर्षपूर्णाश्रुविक्लवाः । ततः प्रसन्नो भगवान्सर्वदेवेश्वरो
अभीष्टान्प्रददौ तेभ्यो वरान्देव्या सह प्रभुः ॥ ७४ ॥

ततः सुहृष्टाः सुरमानुषाद्या लक्ष्मीकटाक्षार्पितदृष्टिपूताः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रभूतधान्यार्थयुता निरन्तरं सुखं परं प्रापुरनामया भृशम् ॥ ७५ ॥

श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे उमामहेश्वर-सम्वादे लक्ष्म्युत्पत्तिर्नाम द्वात्रिंशदधिकद्विशततमोऽध्यायः ॥ २३२ ॥

---

## त्रयस्त्रिंशदधिकद्विशततमोऽध्यायः

लक्ष्मीप्रादुर्भावे देवकृतालक्ष्मीनारायस्तुतिस्तत्रैकादश्युपवासमाहात्म्यवर्णनम्

शङ्कर उवाच ।

प्रोवाच भगवान्सुरांश्चैव महामुनीन् । देव्या सह प्रहृष्टात्मा सर्वलोकहितायवै

श्रीभगवानुवाच ।

मुनयः सर्वे देवताश्च महाबलाः । एकादशी महापुण्या सर्वोपद्रवनाशिनी ॥२॥

सन्दर्शनार्थाय भवद्भिः समुपोषिता । अद्यप्रभृति लोकानामुपोष्या सा भविष्यति

पूजितोऽस्मि श्रिया सार्धं भवद्भिर्मुनिसत्तमाः ! ।
द्वादश्यां तु विशेषेण तुलस्या च तथा श्रिया ॥ ४ ॥

स्मात्तु पूजितोऽस्म्यत्र भवद्भिर्मुनिसत्तमाः । तस्मात्तु सर्वदा पुण्या द्वादशी ममवल्लभा

प्रभृति ये लोका उषिताः पूर्ववासरे । द्वादश्यामुदिते भानौ श्रद्धया परया युताः॥

पूजयन्ति मां भक्तास्तुलस्याच श्रिया सह । सर्वे ते बन्धनिर्मुक्ताः प्राप्नुवन्तिपदंमम

नार्चयन्ति च ये वै मां द्वादश्यां पुरुषोत्तमम् ।
ते नराः पापकर्माणो मम मायाविमोहिताः ॥ ८ ॥

नार्चयन्ति पापिष्ठा नरा नरकगामिनः । तान्पापान्विषयैर्बद्धान्मम पूजापराङ्मुखान्

क्षिपत्यजस्रं संसारे माया मम दुरत्यया ॥ ९ ॥

रुद्र उवाच ।

प्रभृति ये लोका एकादश्यां सुरोत्तमाः !। भुञ्जते तेऽपि निरयं प्राप्नुवन्ति न संशयः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

एवमुक्त्वातु भगवान्परमात्मा सनातनः। संस्तूयमानो मुनिभिः प्रययौ स्वकमा
क्षीराब्धौशेषपर्यङ्के विमाने सूर्यसन्निभे। देव्या सह विशालाक्ष्या रमया परमे
दर्शनार्थं सुराणां च तत्र सन्निहितोऽभवत्। ततः सुरगणाः सर्वेकूर्मरूपं सनातन
भक्त्या सम्पूजयित्वाऽथ तुष्टुवुर्हृष्टमानसाः। ततः प्रसन्नो भगवन्कूर्मरूपी जनार्द

भगवानुवाच।

वरं वृणीध्वं देवेशा यद्वो मनसि वर्तते ॥ १९ ॥

रुद्र उवाच।

ततो देवगणाः सर्वे कूर्मरूपं जनार्दनम्। ऊचुःप्राञ्जलयः सर्वे हर्षनिर्भरमानसाः।

देवाऊचुः।

शेषस्य दिग्गजानां च सहायार्थं महाबल!। धर्तुमर्हसि देवेश! सप्तद्वीपवतीं मह

रुद्र उवाच।

एवमस्त्विति हृष्टात्मा भगवाँल्लोकभावनः। धारयामास धरणीं सप्तद्वीपसम
ततो देवाः सगन्धर्वा दैत्यदानवमानुषाः। महर्षिभिरनुज्ञाताः स्वलोकान्प्रतिपे
तदाप्रभृति ते सर्वे देवा ब्रह्मपुरोगमाः। सिद्धा ये मानुषाश्चैव योगिनो मुनिसत्त

विष्णोराज्ञां पुरस्कृत्य भक्त्या परमया युताः।
एकादश्यामुपोष्याऽथ भक्त्या चैव जनार्दनम् ॥ २१ ॥

द्वादश्यामर्चनं चक्रुर्विधिना वरवर्णिनि!। एतत्तु सर्वमाख्यातं देव्या जन्म वरान

कौर्मं च वैभवं विष्णोः किमन्यच्छ्रोतुमिच्छसि ॥ २२ ॥

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे उमामहे
सम्वादे लक्ष्मीदर्शनादिमाहात्म्यं एकादश्युपवासकथनं नाम
त्रयस्त्रिंशदधिकद्विशततमोऽध्यायः ॥२३३ ॥

---

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# चतुस्त्रिंशदधिकद्विशततमोऽध्यायः

## सैकादशीव्रतनिर्णयन्द्वादशीमाहात्म्यवर्णनम्

पार्वत्युवाच ।

भगवञ्छ्रोतुमिच्छामिद्वादश्याश्चविधानकम् । विष्णोःपूजाविधानंचकर्त्तव्यंतत्रवैप्रभो!
एकादश्याः प्रभावं च सर्वपापहरं नृणाम् । आचक्ष्व विस्तरेणैव मयि प्रीत्या महेश्वर!

महादेव उवाच ।

शृणु देवि! प्रवक्ष्यामि द्वादश्याश्च विधानकम् ।
तस्याः स्मरणमात्रेण सन्तुष्टः स्याज्जनार्दनः ॥ ३ ॥

एकादश्यान्तु प्राप्तायां समुपोष्येहमानवाः । सर्वपापविनिर्मुक्ता यान्तिविष्णोःपरंपदम्
सप्तजन्मार्जितं पापं ज्ञानतोऽज्ञानतः कृतम् । क्षणादेव लयं याति द्वादश्यां हरिपूजनात्
अश्वमेधसहस्राणि वाजपेयशतानि च । एकादश्युपवासस्य कलां नार्हन्ति षोडशीम्
धर्मदा ह्यर्थदा चैव कामदा मोक्षदा किल । सर्वकामदुघा नृणां द्वादशी वरवर्णिनि!॥
एकादशीसमं किञ्चित्पापत्राणं न विद्यते । एकादशीसमं किञ्चिद्व्रतं नास्ति शुभेक्षणे!
एकादशीं परित्यज्य यो ह्यन्यद्व्रतमाचरेत् । स करस्थं महद्राज्यंत्यक्त्वा भैक्ष्यंतुयाचते
एकादशेन्द्रियैः पापं यत्कृतं भवति प्रिये ! । एकादश्युपवासेन तत्सर्वं विलयं व्रजेत् ॥
वदन्तीह पुराणानि भूयोभूयो वरानने !। न भोक्तव्यं न भोक्तव्यं सम्प्राप्ते हरिवासरे ॥
अभक्ष्यं सर्वदाप्रोक्तं किम्पुनः शुक्लकृष्णयोः । स ब्रह्महा सुरापीच स्तेयी च गुरुतल्पगः
मोहादश्नाति यो मर्त्यस्सम्प्राप्ते हरिवासरे । अतिक्रामति यो मोहाद्द्वादशींतु वरानने!
उपवासेन मूढात्मा विष्णुलोकं न पश्यति ।
भुङ्क्ष्वभुङ्क्ष्वेति यो ब्रूयात्सम्प्राप्ते हरिवासरे ॥ १४ ॥

यो ब्राह्मणं स्त्रियं गांच जहीतिच वदेत्कचित् । मद्यं पिबेति यो ब्रूयात्तेषामपि तथागतिः
पुरोडाशोऽपि वामोरु! सम्प्राप्तेहरिवासरे । अभक्ष्यस्सर्वदाप्रोक्तः किंपुनश्चाऽन्नसंस्क्रिया

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वर्णानामाश्रमाणांच सर्वेषां वरवर्णिनि ! । एकादश्युपवासस्तु कर्त्तव्यो नाऽत्रसंशयः
एकादश्यांच प्राप्तायां मातापित्रोर्मृतेऽहनि । द्वादश्यान्तु प्रदातव्यं नोपवासदिने क्वचित् ।

गर्हितान्नं नवाऽश्नन्ति पितरश्च दिवौकसः ।

एकादश्यां न भोक्तव्यं सुराग्वा न पिबेत्क्वचित् ॥ १६ ॥

ब्राह्मणं नैव हन्याच्च इत्येषा वैदिकीश्रुतिः । तस्मादेकादशीं शुद्धामुपवासं समाचरे
दशमीमिश्रितां तान्तु प्रयत्नेन विवर्जयेत् । अरुणोदयवेलायां दशमीमिश्रिता भवे
तां त्यक्त्वा द्वादशीं शुद्धामुपोषेदविचारयन् । कलायांविद्यमानायां सूर्यस्योदयनम
त्रयोदश्यां तथा देवि ! द्वादशी परिविद्यते । तथा च द्वादशी शुद्धा ह्युपवासे विधी
अरुणोदयवेलायां कृत्यं सर्वं समाचरेत् । कलायामपि द्वादश्यां पारणं तत्र चोदि
शुद्धामेकादशीं चापि त्यजेदत्र न संशयः । कलाऽप्येकादशी यत्र द्वादश्यामुदिते र

सर्वामेकादशीं त्यक्त्वा तत्रैवोपवसेद्द्विजः ।

एवं विधिं विनिश्चित्य समुपोष्य हरेर्दिनम् ॥ २६ ॥

सायमाद्यन्तयोरह्नोः सायम्प्रातस्तुमध्यमे । तत्रोपवासं कुर्वीत त्यक्त्वा भुक्तिचतु
दशम्यामेकभक्तस्तु नारीसंगमवर्जितः । अवनीतल्पशायी च परेऽहनि वसेच्छुचि
धात्रीफलानुलिप्ताङ्गः स्नानं नद्यां समाचरेत् । उपवासपरो भूत्वा रात्रौसम्पूजयेद्ध
पाषण्डिनं विकर्मस्थं पतितं श्वपचं तथा । नावलोकेन्न सम्भाषेन्न स्पृशेत्तत्र वैष्ण
अवैष्णवस्तु यो विप्रःसपाषण्डःप्रकीर्तितः । शिखोपवीतत्यागी च विकर्मस्थइति
महापापोपपापाभ्यां युक्तः पतितउच्यते । अन्त्यजः श्वपचः प्रोक्तो वेदैस्तत्र सुनि
रात्रौ सम्पूज्य देवेशं जागरं च समाचरेत् । गन्धैः पुष्पैस्तथादीपैर्वस्त्रैराभरणैः
जपैः स्तोत्रैर्नमस्कारैः पूजयेन्निशि भक्तितः । ततः प्रभातसमये तुलसीमिश्रितैर्जलैः
स्नात्वा सम्यग्विधानेन सन्तर्प्य पितृदेवताः । पूजयेज्जगतामीशं लक्ष्म्या सह जनार्द
कोमलैस्तुलसीपत्रैः पुष्पैश्चैव सुगन्धिभिः । दीपान्नीराजयेत्तत्र वारमष्टोत्तरं शतम्
शतपत्रकृतां मालां ताभ्यां सम्यङ्निवेदयेत् । धूपं दीपं च नैवेद्यं ताम्बूलं च समर्प
शर्करासहितं दिव्यं पायसान्नं समर्पयेत् । कर्पूरेण च संयुक्तं ताम्बूलं च निवेदये

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रदक्षिणनमस्कारं कृत्वा भक्त्या समन्वितः।
आज्यं च जुहुयाद्वह्नौ शतमष्टोत्तरं तथा ॥ ३६ ॥

प्रत्यृचं पुरुषसूक्तेन लक्ष्मीसूक्तेन पायसम् । ब्राह्मणान्भोजयेद्भक्त्यास्वयंभुञ्जीत वाग्यतः
पुराणादिप्रपाठेन क्षपयेत्तद्दिनं महत् ।क्षितिशायी ब्रह्मचारी तस्यामेव निशि स्वपेत् ॥
एवं सम्पूज्यमानः स द्वादश्यां कमलापतिः । क्षणात्प्रसन्नो भगवान्सत्राभीष्टप्रदोध्रुवम्
इत्येतत्कथितं देवि! द्वादशीव्रतमुत्तमम् । किमन्यच्छ्रोतुकामाऽसि तद्वक्तव्यं ब्रवीम्यहम्

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे उमामहेश्वरसम्वादे
द्वादशीमाहात्म्यं नाम चतुस्त्रिंशदधिकद्विशततमोऽध्यायः ॥ २३४ ॥

---

## पञ्चत्रिंशदधिकद्विशततमोऽध्यायः

### उमामहेश्वरसम्वादे नमुच्यादिरक्षोमारणम्पापण्डोत्पत्तिवर्णनम्

श्रीपार्वत्युवाच ।

पाषण्डानां च सम्वादं वर्जयेदिति यत्त्वया । उक्तं ममेह भगवञ्छ्वपचादपि गर्हितम्
ते कीदृशाः समाख्याताः कैर्लिङ्गैश्चिह्निता भुवि ॥ २ ॥

रुद्र उवाच ।

अन्यं देवं परत्वेन वदन्त्यज्ञानमोहिताः । नारायणाज्जगन्नाथात्ते वै पाषण्डिनःस्मृताः
द्वेष्टारो विष्णुभक्तानां ये चाऽवैष्णवसंश्रयाः ।
पाषण्डिभिश्च संयुक्तास्ते वै पाषण्डिनस्स्मृताः ॥ ४ ॥

कपालभस्मास्थिधरा ये ह्यवैदिकलिङ्गिनः । ऋते वनस्थाश्रमाच्च जटावल्कलधारिणः॥
अवैदिकक्रियोपेतास्ते वै पाषण्डिनस्तथा । शङ्खचक्रोर्ध्वपुण्ड्रादिचिह्नैः प्रियतमैर्हरेः ॥
रहिता ये द्विजा देवि! तेवै पाषण्डिनःस्मृताः । श्रुतिस्मृत्युदिताचारंयस्तुनाचरतिद्विजः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स पाषण्डीति विज्ञेयः सर्वलोकेषु गर्हितः । समस्तयज्ञभोक्तारमविदित्वाऽच्युतं हरि
उद्दिश्य देवता एव जुहोति च ददाति च । सपाषण्डीतिविज्ञेयः स्वतन्त्रः सर्वकर्म
स्वातन्त्र्यात्कुरुते यस्तु कर्म वेदोदितं महत् । विनावै भगवत्प्रीतिंसपाषण्डीतिवि
यस्तु नारायणं देवं ब्रह्मरुद्रादिदैवतैः । समत्वे नैव वीक्षेत स पाषण्डीभवेत्सदा
अवस्थात्रितये यस्तु मनोवाक्कायकर्मभिः । वासुदेवं न जानाति सपाषण्डीभवेद्
किमत्र बहुनोक्तेन ब्राह्मणा येऽप्यवैष्णवाः । न स्प्रष्टव्यानवक्तव्या न द्रष्टव्याः

वसिष्ठ उवाच ।

एवं श्रुत्वाच सा देवी शङ्करेणाऽभिभाषितम् । विस्मयंपरमं गत्वा पुनःप्रोवाचभा

पार्वत्युवाच ।

भगवन्परमं गुह्यं पृच्छामि सुरसत्तम !। मयि प्रीत्या समाचक्ष्व संशयो वर्त्तते
कपालभस्मचर्मास्थिधारणं श्रुतिगर्हितम् । तत्त्वया धार्यते देव ! गर्हितं केन हेतु
स्त्रीचापल्येन देवेश! पृच्छामि त्वां महामते !। महानुभावकथितं न कर्त्तव्यं महे
त्वयाचरितमित्येतद्वक्तव्यं न क्वचित्प्रभो !। अकर्त्तव्यमपि प्रश्नं क्षन्तुमर्हसि मे प्र

वसिष्ठ उवाच ।

इतिदेव्या हरः पृष्टो रहस्ये जनवर्जिते । उवाच परमं गुह्यं यद्यदाचरितं स्वकम्॥

शिव उवाच ।

शृणु देवि! प्रवक्ष्यामि यद्गुह्यं परमाद्भुतम् । न वक्तव्यं त्वया देवि! जनेषु कथितं
अपृथक्त्वाच्छरीरस्यवक्ष्यामितव सुव्रते !। नमुच्याद्या महादैत्याःपुरास्वायम्भुवे
महाबला महावीर्या महावीरा महौजसः । सर्वे विष्णुरताः शुद्धाः सर्वपापविवर्जि
त्रयीधर्मव्रतीः सर्वे भगवद्भक्तिसंयुताः । निर्जित्य सकलान्देवानव्याहतपराक्रमाः
पदानि तेषां जगृहुर्बलवीर्यसमन्विताः । ततो देवगणास्सर्वे भग्ना इन्द्रपुरोगमाः
विष्णोः समीपमागम्य भयार्त्ताः शरणं गताः ॥ २७ ॥

देवाऊचुः

देवदेव! महादैत्यैर्जम्भासुरपुरोगमैः । स्वात्स्वात्स्थानाच्च्याविताऽस्तु भवन्तंशरणं

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

येत्सर्वदेवानां तपोनिर्धूतकल्मषान् । त्वमेवैतान्महादैत्याञ्जेतुमर्हसि केशव ! ॥

महादेव उवाच ।

इत्याकर्ण्य हरिर्वाक्यं देवानां च भयानकम् ।
तान्समाश्वास्य दिक्पालान्मामाह पुरुषोत्तमः ॥ २७ ॥

श्रीभगवानुवाच ।

त्वं हि रुद्र महाबाहो! मोहनार्थं सुरद्विषाम् । पाषण्डाचरणं धर्मं कुरुष्व सुरसत्तम!॥
तामसानि पुराणानि कथयस्व च तान्प्रति । मोहनानिचशास्त्राणिकुरुष्व च महामते!
भक्ताश्च विप्राश्चभविष्यन्तिमहर्षयः । त्वच्छक्त्यातान्समाविश्यकथयस्वचतामसान्
णादं गौतमं शक्तिमुपमन्युं च जैमिनिम् । कपिलं चैव दुर्वासोमृकण्डुचबृहस्पतिम्
भार्गवं जामदग्न्यंचदशैतांस्तामसानृषीन् । तवशक्त्यासमाविश्यकुरुष्वजगतोऽहितम्

त्वच्छक्त्या च निविष्टास्ते तमसोद्रिक्तया भृशम् ।
तामसास्ते भविष्यन्ति क्षणादेव न संशयः ॥ ३३ ॥

कथयिष्यन्ति ते विप्रास्तामसानि जगत्त्रये । पुराणानिचशास्त्राणि त्वत्परत्वपराणिच
कपालचर्मभस्मास्थिचिह्नान्यमरसर्वशः । त्वमेव धृत्वा ताँल्लोकान्मोहयस्व जगत्त्रये ॥
तथा पाशुपतं शास्त्रं त्वमेव कुरु सत्कृतः । कङ्कालशैवपाषण्डमहाशैवादिभेदतः॥३६॥
लक्ष्यं च मतं सम्यग्वेदबाह्यं नराधमाः । भस्मास्थिधारिणःसर्वेभविष्यन्तिह्यचेतसः
षां परत्वेन वक्ष्यन्ति सर्वशास्त्रेषु तामसाः । तेषां मतमधिष्ठायसर्वेदैत्याः सदानवाः
वेयुस्ते मद्विमुखाः क्षणादेव न संशयः । अहमप्यवतारेषु त्वां च रुद्र ! महाबल !॥
तामसानां मोहनार्थं पूजयामि युगेयुगे । मतमेतदवष्टभ्य पतन्त्येव न संशयः ॥ ४० ॥

महादेव उवाच ।

श्रुत्वाऽहं यथोक्तं तु वासुदेवेन भामिनि !। समुद्विग्नमना दीनो बभूवाऽत्र वरानने!
नमस्कृत्याऽथ तन्देवमब्रवं परमेश्वरम् । त्वयोदितमिदं देव! करोमि यदि भूतले॥४२॥

तस्मान्नाशो हि मे नाथ ! भविष्यति स संशयः ।
तत्र शक्यं मया कर्तुमेतत्कृत्यं हरेऽधुना ॥ ४३ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्वदाज्ञाऽपिच नोल्लङ्घ्या एतद्दुखतरं महत् । एवमुक्ते ततो देवि समाश्वास्यचमां
आत्मनाशाय तेनाऽत्र भवत्वित्याह मां हरिः । देवतानां हितार्थाय कुरुष्व वचनं
तवाऽपि जीवनोपायं कथयामि सुरोत्तम !। दत्तवान्कृपया मह्यमात्मनामसहस्रकम्
हृदये मां समाधाय जपमन्त्रं ममाऽव्ययम् । षडक्षरं महामन्त्रं तारकं ब्रह्मसञ्ज्ञितम्
ये भजन्ति हि मां भक्त्या तेषां मुक्तिर्न संशयः । इन्दीवरदलश्यामं पद्मपत्रविलोचनम्
शङ्खारशार्ङ्गेषुधरं सर्वाभरणभूषितम् । पीतवस्त्रं चतुर्बाहुं जानकीप्रियवल्लभम् ॥
श्रीरामायनमइत्येवमुच्चार्यं मन्त्रमुत्तमम् । सर्वदुःखहरं चैतत्पापिनामपि मुक्तिदम्
इमंमन्त्रं जपन्नित्यममलस्त्वंभविष्यसि । भस्मास्थिधारणाद्यत्तु सम्भूतंकिल्बिषं
मङ्गलं तदभूत्सर्वं मन्मन्त्रोच्चारणाच्छुभात् । तर्पितो नाशयिष्यामि पापंसर्वं सुरो
मदन्यदेवताभक्तिर्जायते न तु सुव्रत !। मनसैवार्चय हृदि मां नाथं पुरुषोत्तमम् ।
मदाज्ञां कुरु मत्प्रीत्या सर्वमेतच्छुभं तव । इति सन्दिश्यमां देवि! विससर्ज मध

विसृष्टास्ते ततो देवा निवृत्ताः स्वाश्रमं ययुः ।
ततो मां प्रार्थयामासुर्देवा इन्द्रपुरोगमाः ॥ ५५ ॥

इन्द्रादयऊचुः ।

शीघ्रं कुरु हितं देव ! यथोक्तं हरिणाऽधुना ॥ ५६ ॥

महादेव उवाच ।

देवतानां हितार्थाय वृत्तिं पाखण्डिनां शुभे !। कपालचर्मभस्मास्थिधारणं तत्कृतं
तामसानि पुराणानि यथोक्तं विष्णुना शुभे!। पाषण्डशैवशास्त्राणि यथोक्तंकृतवा
मच्छक्त्याऽपिसमाविश्यगौतमादिद्विजानपि । वेदबाह्यानिशास्त्राणिसम्यगुक्तंमया
इमं मतमवष्टभ्य दुष्टाः सर्वे च राक्षसाः । भगवद्विमुखाः सर्वे बभूवुस्तमसावृताः
भस्मादिधारणं कृत्वा महोग्रतमसावृताः । मामेव पूजयाञ्चक्रुर्मांसासृक्चन्दनादि
मत्तो वरप्रदानानि लब्ध्वा मदबलोद्धताः । अत्यन्तविषयासक्ताः कामक्रोधसमन्वि
सत्त्वहीनास्तु निर्वीर्या जिता देवगणैस्तदा । सर्वधर्मपरिभ्रष्टाः कालेयान्त्यधमां
ये मे मतमवष्टभ्य चरन्ति पृथिवीतले । सर्वधर्मैश्च रहिताः पश्यन्ति निरयं सदा

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

एवं देवहितार्थाय वृत्तिर्मे देवि! गर्हिता । विष्णोराज्ञां पुरस्कृत्य कृतं भस्मास्थिधारणम्
बाह्यचिह्नमिदं देवि मोहनार्थाय विद्विषाम् । अथान्तर्हृदये नित्यं ध्यात्वा देवं जनार्दनम्
जपन्नेव च तन्मन्त्रं तारकं ब्रह्मवाचकम् । सहस्रनामसदृशं विष्णोर्नारायणस्य तु ॥६७
षडक्षरं महामन्त्रं रघूणां कुलवर्द्धनम् । जपन्वै सततं देवि सदानन्दसुधाप्लुतम् ॥

सुखमात्यन्तिकं ब्राह्ममश्नामि सततं शुभे ! ॥ ६८ ॥

एतत्ते सर्वमाख्यातं त्वया पृष्टं शुभानने ! ।

किमन्यच्छ्रोतुकामाऽसि प्रीत्या तत्परिपृच्छ माम् ॥ ६९ ॥

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे पाषण्डोत्पत्ति-
वर्णनं नाम पञ्चत्रिंशदधिकद्विशततमोऽध्यायः ॥ २३५ ॥

---

## षट्त्रिंशदधिकद्विशततमोऽध्यायः

### उमामहेश्वरसम्वादेऽष्टादशपुराणनानादर्शनवर्णनप्रसङ्गे-
### सात्त्विकादिशास्त्रवर्णनम्

पार्वत्युवाच ।

तामसानि च शास्त्राणि समाचक्ष्व ममाऽनघ !। सम्प्रोक्तानि चयैर्विप्रैर्भगवद्भक्तिवर्जितैः

तेषां नामानि क्रमशः समाचक्ष्व सुरेश्वर ! ॥ १ ॥

रुद्र उवाच ।

शृणु देवि! प्रवक्ष्यामि तामसानियथाक्रमम् । येषांस्मरणमात्रेणमोहःस्याज्ज्ञानिनामपि
प्रथमं हि मयैवोक्तं शैवं पाशुपतादिकम् । मच्छक्त्यावेशितैर्विप्रैः प्रोक्तानि चततःशृणु
कणादेन तु सम्प्रोक्तं शास्त्रं वैशेषिकं महत् । गौतमेनतथान्यायंसाङ्ख्यंतुकपिलेन वै
धिषणेन तथा प्रोक्तं चार्वाकमतिगर्हितम् । दैत्यानां नाशनार्थाय विष्णुनाबुद्धरूपिणा

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

बौद्धशास्त्रं महत्प्रोक्तं नग्ननीलपटादिकम् । मायावादमसच्छास्त्रं प्रच्छन्नं बौद्धमुच्यते ।
मयैव कथ्यते देवि! कलौ ब्राह्मणरूपिणा । अपार्थं श्रुतिवाक्यानां दर्शयँल्लोकगर्हितम् ।
कर्मस्वरूपं त्याज्यत्वं यत्र वै प्रतिपाद्यते । सर्वकर्मपरिभ्रष्टो विकर्मस्थः स उच्यते ।
परेशजीवयोरैक्यं मयाऽत्र प्रतिपाद्यते । ब्रह्मणोऽत्र परं रूपं निर्गुणं वक्ष्यते मया ।
सर्वस्य जगतोऽप्यत्र मोहनार्थं कलौ युगे । वेदार्थवन्महाशास्त्रं मायावादमवैदिकम् ।
मयैव वक्ष्यते देवि ! जगतां नाशकारणात् । द्विजन्मना जैमिनिना पूर्वं वेदमपार्थकम् ।
निरीश्वरेण वादेन कृतं शास्त्रं महत्तरम् । शास्त्राणि चैव गिरिजे तामसानि निबोध मे ।

पुराणानि च वक्ष्यामि तामसानि यथाक्रमात् ।
ब्राह्मं पाद्मं वैष्णवं च शैवं भागवतं तथा ॥ १३ ॥

तथैव नारदीयं तु मार्कण्डेयं तु सप्तमम् । आग्नेयमष्टमं प्रोक्तं भविष्यं नवमं तथा ।
दशमं ब्रह्मवैवर्तं लैङ्गमेकादशं स्मृतम् । द्वादशं च वराहं च वामनं च त्रयोदशम् ।

कौर्मं चतुर्दशं प्रोक्तं मात्स्यं पञ्चदशं स्मृतम् ।
षोडशं गारुडम्प्रोक्तं स्कान्दं सप्तदशं स्मृतम् ॥ १६ ॥

अष्टादशं तु ब्रह्माण्डं पुराणानि यथाक्रमम् । मात्स्यं कौर्मं तथालैङ्गंशैवंस्कान्दंतथैव च ।
आग्नेयं च षडेतानि तामसानि निबोध मे । वैष्णवं नारदीयं च तथा भागवतं शुभम् ।
गारुडं च तथा पाद्मं वाराहं शुभदर्शने !। सात्त्विकानि पुराणानि विज्ञेयानिशुभानि वै ।
ब्रह्माण्डं ब्रह्मवैवर्त्तं मार्कण्डेयं तथैव च । भविष्यं वामनं ब्राह्मं राजसानि निबोध मे ।

सात्त्विका मोक्षदाः प्रोक्ता राजसाः स्वर्गदाः शुभाः ।
तथैव तामसा देवि ! निरयप्राप्तिहेतवः ॥ २१ ॥

तथैव स्मृतयःप्रोक्ताऋषिभिस्त्रिगुणान्विताः । सात्त्विकाराजसाश्चैवतामसाःशुभदर्शने ।
वासिष्ठं चैव हारीतं व्यासंपाराशरन्तथा । भारद्वाजंकाश्यपंचसात्त्विकामुक्तिदाःशुभाः ।
मानवं याज्ञवल्क्यं चाऽप्यात्रेयं दाक्षमेवच । कात्यायनंवैष्णवंचराजसाःस्वर्गदाःशुभाः ।
गौतमं बार्हस्पत्यं च सांवर्तं च यमंस्मृतम् । शाङ्खं चौशनसं चेतितामसानिरयप्रदाः ।
किमत्र बहुनोक्तेन पुराणेषु स्मृतिष्वपि । तामसा नरकायैव वर्जयेत्तान्विचक्षणः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

…ते सर्वमाख्यातं प्रसङ्गाच्छुभदर्शने !। शेषं च वैभवावस्थां हरेर्वक्ष्यामि ते शृणु ॥
…ति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे तामसशास्त्रकथनं नाम षट्त्रिंशदधिकद्विशततमोऽध्यायः ॥ २३६ ॥

---

## सप्तत्रिंशदधिकद्विशततमोऽध्यायः

…उमामहेश्वरसम्वादे विष्णोर्वैभवावस्थावर्णनक्रमेसनकादिभिर्जयविजयाभ्यांशापदानंशापोपहतयोस्तयोरक्षोयोनिधारणंतदर्थवराहावतारवर्णनं हिरण्याक्षवधवर्णनञ्च.

श्रीरुद्र उवाच ।

…रण्यकहिरण्याक्षौ काश्यपेयौ महाबलौ । दितिपुत्रौ महावीर्यौ सर्वदैत्यपती उभौ॥
…कुण्ठनगरस्याऽऽस्तां पश्चिमद्वारपालकौ । नाम्ना तौ जयविजयौ श्वेतद्वीपे हरिं गतौ
तस्मिन्प्रविष्टान्योगीन्द्रान्सनकादीन्महाबलौ ।
वारयामासतुर्देवि ! हरिसन्दर्शनोत्सुकान् ॥
तैः प्रशप्तौ महावीर्यौ द्वारपालौ सुरोत्तमौ ॥ ३ ॥

सनकादयऊचुः ।

उत्पत्स्यतः पृथिव्यां तु द्वाःस्थौ देवस्य किङ्करौ ॥ ४ ॥

रुद्र उवाच ।

…ति शापं तयोर्दत्त्वा तत्र तस्थुर्मुनीश्वराः । देवस्तमर्थं ज्ञात्वा च तानाहूय च तावपि
तौ द्वाःस्थावब्रवीत्तत्र भगवान्भूतभावनः ॥ ५ ॥

भगवानुवाच ।

…जानन्तौ महावीर्यौविपराध्यं महात्मनाम् । नातिक्रमणीयमिदं भवद्भ्यां द्वारपालकौ



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दासत्वं सप्तजन्मानियुवांभक्तौममाऽनघौ। अमित्रतांतथात्रीणिजन्मानिमजतो

रुद्र उवाच।

इत्युक्तौ तौ महावीर्यावब्रूतां परमेश्वरम् ॥ ८ ॥

जयविजयावूचतुः।

चिरकालं महीं गन्तुं न समर्थौस्वमानद !। तस्मात्त्रीण्येवजन्मानिचिद्विट्त्वंच
देव ! त्वयैव निहतौ प्राप्स्यावो भवदन्तिकम् ॥ ९ ॥

रुद्र उवाच।

इत्युक्त्वा द्वारपालौ तौ पूर्वं जातौ महाबलौ। कश्यपस्यमहावीर्यौ दितिगर्भे
हिरण्यकशिपुर्ज्येष्ठो हिरण्याक्षः कनिष्ठकः। उभौतौलोकविख्यातौ महावीर्य
अप्रमाणशरीरः स हिरण्याक्षो महोद्धतः। उत्पाट्य बाहुसाहस्रैः पृथिवीं सम
ससागरां द्वीपयुतां सर्वप्राणिसमन्विताम्। उत्पाट्य शिरसा धृत्वा प्रविवेश
ततो देवगणाः सर्वे चुक्रुशुर्भयपीडिताः। शरणं प्रययुर्देवं नारायणमनामयम् ॥
ततस्तदद्भुतं ज्ञात्वा शङ्खचक्रगदाधरः। वाराहं रूपमास्थाय विश्वरूपं जनार्दनः।
अनादिमध्यान्तवपुः सर्वदेवमयो विभुः। विश्वतः पाणिपच्चक्षुर्महादंष्ट्रो मह
एकया दंष्ट्रया दैत्यं जघान परमेश्वरः। संचूर्णितमहागात्रो ममार दितिजाधम
पतितां धरणीं दृष्ट्वा दंष्ट्रयोद्धृत्य पूर्ववत्। संस्थाप्य धारयामास शेषे कूर्मवपु
तं दृष्ट्वा देवताः सर्वाः क्रोडरूपं महाहरिम्। तुष्टुवुर्मुनयश्चैव भक्तिनम्रात्म

देवाऊचुः।

नमोयज्ञवराहाय कृष्णाय शतबाहवे। नमस्ते वेदवेदाङ्गतनवे विश्वरूपिणे।
सर्गस्थितिस्वरूपाय सर्वयज्ञस्वरूपिणे। कलाकाष्ठानिमेषादिकालरूपाय ते
भूतात्मने नमस्तुभ्यमृग्वेदवपुषे तथा। सुरात्मने नमस्तुभ्यं सामवेदाय ते
ॐकाराय नमस्तुभ्यं यजुर्वेदस्वरूपिणे। आथर्वणस्वरूपाय चतुर्वेदमयाय च
नमस्ते वेदवेदाङ्गसाङ्गोपाङ्गाय ते नमः। नमो भगवते तुभ्यं वराय वपुषे सदा
नमो भूर्भुवस्स्वःपतये महईशायते नमः। जनस्तपस्सत्यपतये सर्वलोकेश्वराय

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

...ओङ्कारात्मने तुभ्यं यज्ञरूपाय ते नमः । गोविन्दाय नमस्तुभ्यमनादिनिधनाय च ॥
...स्ते विदचिद्वस्तुविशिष्टैकस्वरूपिणे । श्रीभूनीलाधिपतये जगत्पित्रे नमोनमः ॥

रुद्र उवाच ।

इत्यादिस्तुतिभिः स्तुत्वा देवं वाराहरूपिणम् ।
अर्चयामासुरात्मेशं गन्धपुष्पादिभिर्हरिम् ॥ २८ ॥

...मानस्तैर्देवैस्तेषां ... वरं ददौ । गन्धर्वैरप्सरोभिश्च गीयमानो मुदा हरिः ॥
...र्षिभिःस्तूयमानस्तत्रैवाऽन्तरधीयत । ...र्भिःस्तुत्वा नरो भक्त्या प्रातरुत्थाय भक्तिमान् ॥
...सितांल्लभते भूमिं चिरं सस्यफलान्विताम् । एतत्ते सर्वमाख्यातं वाराहं वैभवं हरेः
नारसिंहं तथा वक्ष्ये शृणु देवि ! वरानने ! ॥ ३१ ॥

...ति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे वराहावतार-
कथनं नाम सप्तत्रिंशदधिकद्विशततमोऽध्यायः ॥ २३७ ॥

---

## अष्टात्रिंशदधिकद्विशततमोऽध्यायः

हिरण्यकशिपुपापाचारेणपीड़िताया स्त्रिलोक्याःसमुद्धारे वैष्णवप्रह्लाद-
कथाप्रसङ्गे नृसिंहावतारवर्णनम्

रुद्र उवाच ।

...रं निहतं ज्ञात्वा हिरण्यकशिपुस्ततः । तपस्तेपे महादैत्यो मेरोः पार्श्वे च मां प्रति
...वर्षसहस्राणि वायुभक्षो महाबलः । जपन्पञ्चाक्षरं मन्त्रं पूजयामास मां शुभे !॥
...प्रसन्नमनसा तमवोचं महासुरम् । वरं वृणीष्व दैतेय ! यत्ते मनसि वर्त्तते ॥
ततः प्रोवाच दैतेयो मां प्रसन्नं शुभानने ! ॥ ३ ॥

हिरण्यकशिपुरुवाच ।

...सुरमनुष्याणां गन्धर्वोरगरक्षसाम् । पशुपक्षिमृगाणां च सिद्धानां वै महात्मनाम्

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यक्षविद्याधराणां च किन्नराणान्तथैव च। सर्वेषामेव रोगाणामायुधानां तथैव

सर्वेषामृषिमुख्यानामवध्यत्वं प्रयच्छ मे ॥ ५॥

रुद्र उवाच।

एवमस्त्विति तद्रक्षस्त्वब्रवं प्रियदर्शने!। मत्तो महद्वरं प्राप्य स दैतेयो महा

जित्वामहेन्द्रंदेवांश्चसत्रैलोक्येश्वरोऽभवत्। सर्वांश्चयज्ञभागांश्चस्वयमेवाऽग्रही

त्रातारं नाधिगच्छन्ति देवतास्तेन निर्जिताः। तस्यैव किङ्कराःसर्वे गन्धर्वादेव

यक्षाश्च नागाः सिद्धाश्च साध्याश्च वशवर्तिनः।

उत्तानपादस्य सुतां कल्याणीं नाम कन्यकाम् ॥ ६॥

उपयेमे विधानेन दैत्यराजो महाबलः। तस्यां जातो महातेजाः प्रह्लादो दैत्यरा

अनुरक्तोहृषीकेशे गर्भवासेऽपि यो हरौ। सर्वावस्थासु कृत्येषु मनोवाक्कायक

नान्यंजानाति देवेशात्प्रसन्नात्मासनातनात्। सकालेनोपनीतः सन्गुरुगेहेऽवस

अधीत्य सर्ववेदांश्च शास्त्राणि विविधानि च।

कस्यचित्त्वथ कालस्य गुरुणा सह दैत्यजः ॥ १३॥

पितुः समीपमागत्य ववन्दे विनयान्वितः। तं परिष्वज्य बाहुभ्यां तनयं शुभ

अङ्के निधाय दैत्येन्द्रः प्रोवाचेदं सुविस्मितम् ॥ १४॥

हिरण्यकशिपुरुवाच।

प्रह्लाद! चिरकालंत्वं गुरुगेहे निवेशितः। यदुक्ता गुरुणा विद्या तन्ममाऽऽचक्ष्व

रुद्र उवाच।

इतिपृष्टः स्वपित्रा वै प्रह्लादो जन्मवैष्णवः। प्राह दैत्येश्वरं प्रीत्या वचनं कलुष

प्रह्लाद उवाच।

यो वै सर्वोपनिषदामर्थः पुरुषईश्वरः। तं वै सर्वगतं विष्णुं नमस्कृत्य ब्रवी

रुद्र उवाच।

इति विष्णुस्तुतिं श्रुत्वा दैत्यराड्विस्मयान्वितः।

उवाच तं गुरुं रोषात्किं त्वयोक्तं ममात्मजे ॥ १८॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

...ऽऽत्मजस्यदुर्बुद्धे! हरिसंस्तवमीदृशम् । किमर्थमुक्तवाञ्जाड्यमकार्यंब्राह्मणोचितम्
...न्यं मदमित्रस्यस्तवमेतं ममाऽग्रतः । बालेनाऽपि कृतं त्वेतत्त्वत्प्रसादाद्द्विजाधम!
...क्त्वा परितोवीक्ष्यदैत्यराट्क्रोधमूर्च्छितः । उवाच दैत्यमेकं तु बन्धयैनंद्विजाधमम्
...राजवचः श्रुत्वा स ववन्ध भृगोः सुतम् । वध्यमानं गुरुं दृष्ट्वा प्रह्लादो ब्राह्मणप्रियः
...व पितरं तात! इदं मे नोक्तवान्गुरुः । कृपया देवदेवस्य शिक्षितोऽस्मि हरेः प्रभो!
...वो गुरुर्मे भवति स एव प्रेरको हरिः । श्रोता मन्ता तथा वक्ता द्रष्टा सर्वग ईश्वरः

हरिरेवाऽक्षयः कर्त्ता नियन्ता सर्वदेहिनाम् ।
तदनागा ह्यसौ विप्रो मोक्तव्योऽयं गुरुः प्रभो ! ॥ २५ ॥

रुद्र उवाच ।

...पुत्रवचःश्रुत्वा हिरण्यकशिपुस्ततः । तम्ब्राह्मणं मोचयित्वा स्वसुतंप्राहविस्मयात्

किं वत्स ! त्वं भ्रमस्येवं मिथ्यावाक्यैर्द्विजन्मनः ।
को विष्णुः किं तु तद्रूपं कुत्राऽसौ संस्थितो हरिः ॥ २७ ॥

...मेवेश्वरो लोके त्रैलोक्याधिपतिर्मतः । मामेवार्चय गोविन्दं त्यज शत्रुं दुरासदम् ॥
...वा शङ्करं देवं रुद्रं लोकगुरुं प्रभुम् । अर्चयस्व सुराध्यक्षं सर्वैश्वर्यप्रदं शिवम् ॥
...पुण्ड्रधारणं कृत्वा भस्मना दैत्यपूजितम् । पूजयस्व महादेवं पाशुपत्योक्तमार्गतः ॥

रुद्र उवाच ।

इति दैत्यपतेर्वाक्यं श्रुत्वोचुस्तत्पुरोहिताः ॥ ३१ ॥

पुरोहिताऊचुः ।

...व महाभाग ! कुरुष्व वचनं पितुः । त्यज शत्रुं कैटभारिं पूजयस्व त्रिलोचनम् ॥
...परतरो देवोवास्ति सर्वप्रदोनृणाम् । पितातवाऽपि तस्यैव प्रसादादीश्वरोऽभवत्

रुद्र उवाच ।

इति तेषां वचः श्रुत्वा प्रह्लादः प्राह वैष्णवः ॥ ३४ ॥

प्रह्लाद उवाच ।

...भगवतः श्रैष्ठ्यंयन्मायामोहितं जगत् । अहो वेदान्तविद्वांसः सर्वलोकेषुपूजिताः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ब्राह्मणाअपि चापल्याद्वदन्त्येवं मदान्विताः । नारायणः परं ब्रह्मतत्त्वं नारायणः
नारायणः परोध्याता ध्यानं नारायणःपरम् । गतिर्विश्वस्य जगतःशाश्वतं शिवम
धाता विधाता जगतो वासुदेवः सनातनः । विश्वमेवेदं पुरुषस्तद्विश्वमुपजीवनि
हिरण्मयवपुर्नित्यः पुण्डरीकनिभेक्षणः । श्रीभूनीलापतिः सौम्यो निर्मलः शुभ
तेनैव सृष्टौ ब्रह्मेशौ सर्गसंहारकारकौ । तस्यैवाऽऽज्ञां पुरस्कृत्य वर्त्तते ब्रह्म

भीषाऽस्माद्वाति पवनो भीषोदेति दिवाकरः ।
भीषाऽस्मादग्निश्चेन्द्रोऽथ मृत्युर्धावति पञ्चमः ॥ ४१ ॥

आसीदेको हरिर्दिव्योदेवो नारायणः परः । ब्रह्मा नेन्द्रो नचेशानो नच चन्द्र
नवाद्यावापृथिव्यौच नक्षत्राणि दिवौकसः । तस्य विष्णोः परंधाम सदापश्य
एवं सर्वोपनिषदामर्थंहित्वा द्विजोत्तमाः । रागाल्लोभाद्भयाद्वापि किम्वा ब्रूथ
तं सर्वरक्षकं देवं त्यक्त्वासर्वेश्वरं हरिम् । कथं पाषण्डमाश्रित्य पूजयामि
लक्ष्मीपतिं देवदेवमनन्तं पुरुषोत्तमम् । इन्दीवरदलश्यामं पद्मपत्रायतेक्षणम्
श्रीवत्सलक्षितोरस्कं सर्वाभरणभूषितम् । सदाकुमारं सर्वेशं नित्यानन्दसुख
कृष्णं दध्युर्महात्मानो योगिनः सनकादयः । यमर्चयन्ति ब्रह्मेशशक्राद्या देव
यस्य पत्न्याः कटाक्षार्द्धदृष्ट्या दृष्टा दिवौकसः । ब्रह्मेन्द्ररुद्रवरुणयमसोमधना
यन्नामस्मरणादेव पापिनामपि सत्वरम् । मुक्तिर्भवति जन्तूनां ब्रह्मादीनां सु
स एव रक्षकः श्रीशो देवानामपि सर्वदा । तमेव पूजयिष्यामि लक्ष्म्या संयु

प्राप्स्यामि सुसुखेनैव तद्विष्णोः परमं पदम् ॥ ५१ ॥

रुद्र उवाच ।

इतितस्यवचःश्रुत्वा हिरण्यकशिपुस्ततः । क्रोधेनमहताऽऽविष्टो जज्वालाऽग्नि

परितो वीक्ष्य दैतेयानित्याह क्रोधमूर्च्छितः ॥ ५२ ॥

हिरण्यकशिपुरुवाच ।

भीषणैः शस्त्रसङ्घातैः प्रह्लादं पापकारिणम् । ममाऽऽज्ञया घातयध्वं शत्रुप
रक्षिता हरिरेवेति प्रोच्यते तेन वाक्छलात् । अद्यैव सफलं तस्य पश्येयं ह

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

रुद्र उवाच ।

द्यतास्त्रा दैतेया हन्तुं दैत्येश्वरात्मजम् । परिवार्य महात्मानं तस्थुर्दैत्येश्वराज्ञया
दोऽपि तदा विष्णुं ध्यात्वा हृदयपङ्कजे । जपन्नष्टाक्षरंमन्त्रं तस्थौ गिरिरिवाऽपरः
घ्नुः परितो वीराः शूलतोमरशक्तिभिः । प्रह्लादस्य वपुस्तत्र हरिसंस्मरणाच्छुभे !
विष्णोः प्रभावाद्दुर्द्धर्षं वज्रभूतमभूद्भृशम् ।
ततः सम्प्राप्य तद्गात्रं महास्त्राणि सुरद्विषाम् ॥ ५८ ॥
लोत्पलदलानीव पेतुश्छिन्नाःक्षितौ शुभे !। अल्पमप्यस्य तद्गात्रं भेत्तुंदैत्या न च क्षमाः
स्मितावाङ्मुखास्तस्थुर्दैत्यराजान्तिकेभटाः । तादृग्विधंमहात्मानंदृष्ट्वापुत्रम्महाबलम्
स्मयंपरमंगत्वा दैत्यराट्क्रोधमूर्च्छितः । आदिदेश ततः सर्वान्दन्दशूकान्महाविषान्
वासुकिप्रभृतीन्धीमान्खादयध्वमितिक्रुधा ।
आदिष्टास्तेनराज्ञाऽथ तेनागाःसुमहाबलाः ॥ ६२ ॥
लितास्या महाभीमास्तं चखादुर्महाबलम् । गरुडध्वजभक्तन्तं विदश्य गरलायुधाः॥
निर्विषाश्छिन्नदशना बभूवुरनिलाशनाः । वैनतेयसहस्रेण च्छिन्नगात्राः सुविह्वलाः ॥
दुद्रुवुर्दिशः सर्वा वमन्तो रुधिरंभृशम् । तादृग्विधान्महासर्पान्दृष्ट्वा दैत्यपतिस्तदा ॥
आदिदेश ततः क्रुद्धो दिग्गजान्सुमदान्वितान् ।
निर्दिष्टास्तेन राज्ञाऽथ दिग्गजाश्च मदोद्धताः ॥ ६६ ॥
रिवार्याऽथ तं जघ्नुर्दन्तैः पृथुतरैर्भृशम् । अथ दिग्गजदन्ताश्च च्छिन्नमूलास्ततोऽपतन्
न्तैर्विना कृतानागा भयार्त्ता वै प्रदुद्रुवुः । तान्दृष्ट्वाऽथ महानागान्दैत्येन्द्रःकुपितोबली
ज्वाल्यचमहावह्निं चिक्षेप सुतमात्मनः । जलशायिप्रियं दृष्ट्वा प्रह्लादं हव्यवाहनः ॥
ददाह च तं धीरं सुशीतः समभूच्छिखी । अदह्यमानं तं बालं दृष्ट्वा राजा सुविस्मितः
दात्तस्मै विषं घोरं सर्वभूताहितन्तदा । तस्य विष्णोःप्रभावाच्चविषमस्याऽमृतंभवेत्
रणात्तस्य देवस्य विषं चामृतमश्नुते । एवमाद्यैर्वधोपायैर्घोररूपैः सुदारुणैः ॥७२॥
बाधयित्वाऽऽत्मजं राजा तस्याऽवध्यत्वमीक्ष्य च ।
ततः साम्ना सुतं प्राह दैत्यराड्विस्मयाकुलः ॥ ७३ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

हिरण्यकशिपुरुवाच ।

त्वया विष्णोःपरत्वंच सम्यगुक्तं ममाग्रतः । व्यापित्वात्सर्वभूतानां विष्णुरित्यभि
योऽसौ सर्वगतो देवः स एव परमेश्वरः । तस्य सर्वगतत्वं वै प्रत्यक्षं दर्शयस्व मे
ऐश्वर्यशक्तितेजांसि ज्ञानवीर्यबलानि च । पश्येयं तस्य परमं रूपं गुणविभूतयः
सम्यग्दृष्ट्वा प्रयत्नेन विष्णुं मन्ये दिवौकसम् । मम प्रतिबलो लोके नास्ति देवेषु
ईशानवरदानेन सर्वभूतेष्ववध्यताम् । प्राप्तवान्सर्वभूतानां दुर्जयत्वं च मान
ईश्वरत्वं लभेद्विष्णुर्मां जित्वा बलवीर्यतः ॥ ७८ ॥

रुद्र उवाच ।

इति तस्य वचः श्रुत्वा प्रह्लादः प्राह विस्मितः । हरेः प्रभावं दैत्यस्य कथयामास

प्रह्लाद उवाच ।

योऽसौ नारायणःश्रीमान्परमात्मा सनातनः । वसनात्सर्वभूतेषु वासुदेवः स
सर्वव्यापी जगद्धाता विष्णुरित्यभिधीयते । न किञ्चिदस्मादन्यत्तु जगत्स्थावरज
सर्वत्र चिदचिद्वस्तुरूपं तस्यैव नान्यथा । त्रिपाद्व्याप्तिःपरंव्योम्नि पादव्याप्ति
योऽसौ चक्रगदापाणिः पीतवासा जनार्दनः ।
योगिभिर्दृश्यते भक्त्या नाऽभक्त्या दृश्यते क्वचित् ॥ ८३ ॥
द्रष्टुं न शक्यो रोषाच्च मत्सराद्वा जनार्दनः । देवतिर्यङ्मनुष्येषु स्थावरेष्वपि
व्याप्य तिष्ठति सर्वेषु क्षुद्रेष्वपि महत्सु च ॥ ८५ ॥

रुद्र उवाच ।

इतिप्रह्लादवचनं श्रुत्वा दैत्यवरस्तदा । उवाच रोषताम्राक्षो भर्त्सयंश्च सुतं

हिरण्यकशिपुरुवाच ।

असौ सर्वगतो विष्णुरपि चेत्परमःपुमान् । प्रत्यक्षं दर्शयस्वाऽद्य बहुभिः किं प्रल

महादेव उवाच ।

इत्युक्त्वा सहसा दैत्यः प्रासादस्तम्भमात्मनः ।
ताडयामास हस्तेन प्रह्लादमिदमब्रवीत् ॥ ८७ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

हिरण्यकशिपुरुवाच ।

[अस्मि]न्दर्शयतं विष्णुं यदि सर्वगतो भवेत् । अन्यथा त्वां हनिष्यामि मिथ्यावाक्यप्रलापिनम्

रुद्र उवाच ।

[इत्यु]क्त्वा सहसा खड्गमाकृष्य दितिजेश्वरः । प्रह्लादोरसि चिक्षेप हन्तुं खड्गेन तं रुषा

[तस्मि]न्क्षणे महाशब्दः स्तम्भे संश्रूयते भृशम् । सम्वर्ताशनिसंरावैः खमिव स्फुटितान्तरम्

[ते]न शब्देन महता दैत्यश्रोत्रविघातिना । सर्वे निपातिता भूमौ छिन्नमूला इव द्रुमाः॥

विश्यति संप्लुतं दैत्या मेनिरे वै जगत्त्रयम् ।

तां स्थूणां तु द्विधा भित्त्वा निष्क्रान्तो वै महाहरिः ॥ ९२ ॥

[ननाद] स महाघोरं जगत्क्षयनिभस्वनम् । तेन नादेन महता तारकाः पतिता भुवि ॥

[नृ]सिंहवपुरास्थाय तत्रैवाऽऽविरभूद्धरिः । अनेककोटिसूर्याग्नितेजसा स समावृतः ॥

[सिं]हपञ्चाननप्रख्यः शरीरे मानुषाकृतिः । दंष्ट्राकरालवदनस्त्र्यक्षश्च त्रिसटोद्धतः ॥९५॥

[ज्व]ालावलितकेशान्तस्सस्फुलिंगेक्षणो विभुः । सहस्रबाहुभिर्दीर्घैः सर्वायुधसमन्वितैः॥

[यथा]ऽसौ मेरुरिवाभाति बहुशाखानगान्वितः । दिव्यमाल्याम्बरधरो दिव्यगन्धानुलेपनः ॥

[श्री]वत्सकौस्तुभोरस्को दिव्याभरणभूषितः । तस्थौ नृकेसरी तत्र संहर्तुं सर्वदानवान्

[दृ]ष्ट्वा घोरसङ्काशं नरसिंहं महाबलम् । दग्धाक्षिपक्ष्मा दैत्येन्द्रो विह्वलाङ्गः पपात ह

[प्रह्ला]दोऽपि तदा दृष्ट्वा नारसिंहोपमं हरिम् । जयशब्देन देवेशं नमश्चक्रे जनार्दनम् ॥

[दद]र्श तस्य गात्रेषु नृसिंहस्य महात्मनः । लोकान्समुद्रान्सद्वीपान्सुरगन्धर्वमानुषान् ॥

[ब्रह्म]ाण्डानां सहस्रं तु सटाग्रे तस्य दृश्यते । दृश्यन्ते तस्य नेत्रेषु सोमसूर्यादयस्तथा ॥

[श्रोत्र]योरश्विनौ देवौ दिशश्च विदिशस्तथा । ललाटे ब्रह्मरुद्रौ च नभो वायुश्च नासिके

इन्द्राग्नी तस्य वक्त्रान्ते जिह्वायां तु सरस्वती ।

दंष्ट्रासु सिंहशार्दूलाः शरभाश्च महोरगाः ॥ १०४ ॥

[कण्]ठे च दृश्यते मेरुः स्कन्धेऽपि च महाद्रयः । देवतिर्यङ्मनुष्याश्च बाहुष्वपि महात्मनः

[नाभौ] चास्यान्तरिक्षं च पादयोः पृथिवी तथा । मेर्वादयः पर्वताश्च दृश्यन्तेऽङ्गुलिपङ्क्तिषु

[रोमस्वो]षधयः सर्वाः पादपानखपङ्क्तिषु । निःश्वासेषु च वेदाश्च साङ्गोपाङ्गसमन्विताः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

आदित्या वसवो रुद्रा विश्वेदेवा मरुद्गणाः । सर्वाङ्गेषु प्रदृश्यन्ते गन्धर्वाप्सरसा
इत्थं विभूतयस्तस्य दृश्यन्ते परमात्मनः । श्रीवत्सकौस्तुभोरस्कं वनमालाविभू
शङ्खचक्रगदाखड्गशार्ङ्गाद्यैर्हेतिभिर्युतम् । सर्वोपनिषदामर्थं दृष्ट्वा दैत्येश्वरात्मजः ॥
हर्षाश्रुजलसिक्ताङ्गः प्रणनाम मुहुर्मुहुः । दैत्येन्द्रस्तु हरिं दृष्ट्वा क्रोधान्मृत्युवशे
योद्धुं खड्गं समुद्यम्य नृसिंहं तमभिद्रवत् । अथ दैत्यगणाः सर्वे लब्धसञ्ज्ञा मह

स्वान्यायुधानि चाऽऽदाय हरिं जघ्नुस्त्वरान्विताः ।
पलालकाण्डानि यथा वह्नौ क्षिप्तान्यनेकशः ॥ ११३ ॥

तथैव भस्मतां यान्ति महास्त्राणि हरेस्तनौ । तान्यनीकानि दैत्यानां दृष्ट्वा नरहरि
सटैर्ददाह च ज्वालामालाविरचितस्फुटैः । नृकेसरिसटोद्भूतवह्निना दानवा भृ
निहतास्तत्क्षणात्सर्वे निःशेषंतदभूद्बलम् । प्रह्लादं सानुगं हित्वाभस्मितेर्वाक्षम
क्रोधाद्दैत्यपतिः खड्गमाकृष्याऽभिप्रपद्यत । खड्गहस्तं तु दैत्येन्द्रं जग्राहैकेन बा
पातयामास देवेशो यथा शाखां महानिलः । गृहीत्वा पतितं भूमौ महाकायं कं
स्वोत्सङ्गे स्थापयामास ददर्शाऽसौ मुखं हरेः । विष्णुनिन्दाकृतंपाप द्रोहवैष्णव
नृसिंहस्पर्शनादेव निर्भस्मितमभूत्तदा । अथ दैत्येश्वरस्याऽथ महद्गात्रं नृकेसरी
नखैर्विदारयामास तीक्ष्णैर्वज्रनिभैर्नखैः । सनिर्मलात्मा दैत्येन्द्रः पश्यन्साक्षान्नृ
नखनिर्भिन्नहृदयः कृतार्थो विजहावसून् । तद्गात्रं शतधा भित्त्वा नखैस्तीक्ष्णैर

आकृष्याऽन्त्राणि दीर्घाणि कण्ठे संसक्तवान्प्रियान् ।
अथ देवगणास्सर्वे दृष्ट्वा तत्र नृकेसरिम् ॥ १२३ ॥

प्रदहन्तं जगद्दीपं कालाग्निमिव मेनिरे । अथ देवगणाः सर्वे मुनयश्च तपोधना
ब्रह्मरुद्रौ पुरस्कृत्य शनैः स्तोतुं समाययुः । ते प्रसादयितुं भीता ज्वलन्तंविश्वतो
मातरं जगतां धात्रीं चिन्तयामासुरीश्वरीम् । हिरण्यवर्णां हरिणींसर्वोपद्रवना

विष्णोर्नित्यानवद्याङ्गीं ध्यात्वा नारायणीं शुभाम् ।
देवीसूक्तजपैर्भक्त्या नमश्चक्रुः सनातनीम् ॥ १२७ ॥

तैश्चिन्त्यमाना सा देवी तत्रैवाऽऽविरभूत्तदा । चतुर्भुजाविशालाक्षी सर्वाभरण

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

...कुलवस्त्रसहितां दिव्यमालानुलेपनाम् । तां दृष्ट्वा देवदेवस्य प्रियां सर्वे दिवौकसः ॥
...स्तुः प्राञ्जलयो देवीं प्रसन्नं कुरुते प्रियम् । त्रैलोक्यस्याऽभयंस्वामीयथा दद्यात्तथाकुरु

रुद्र उवाच ।

...त्युक्ता सहसादेवी प्रियं प्राप्य जनार्दनम् । प्रणिपत्य नमस्कृत्य साप्रसीदेत्युवाचतम्
...तां दृष्ट्वा महिषीं स्वस्य प्रियां सर्वेश्वरोहरिः । रक्षःशरीरजंक्रोधंतत्याजप्रीतवत्क्षणात्
...ङ्कमादाय तां देवीं समाश्लिष्य दयानिधिः । कृपासुधार्द्रदृष्ट्या वै निरैक्षतसुरान्हरिः
...तो जयजयेत्युच्चैः स्तुवतांनमतां तदा । तद्भयाद्दृष्टिद्रष्टानां सानन्दः सम्भ्रमोऽभवत्
...तो देवगणाः सर्वे हर्षनिर्भरमानसाः । ऊचुः प्राञ्जलयो देवं नमस्कृत्य जगत्पतिम् ॥

देवगणाऊचुः ।

...दृष्टुमत्यद्भुतं तेजो न शक्तास्ते जगत्पते ! । अत्यद्भुतमिदं रूपं बहुबाहुपदाङ्कितम् ॥
...जगत्त्रयसमाक्रान्तं तेजस्तीक्ष्णतरं तव । द्रष्टुं स्थातुं न शक्ताःस्मः सर्व एवदिवौकसः

महादेव उवाच ।

...इत्यर्थितस्तु विबुधैस्तेजस्तदतिभीषणम् । उपसंहृत्य देवेशो बभूव सुखदर्शनः॥१३८॥
...शरत्कोटीन्दुसङ्काशः पुण्डरीकनिभेक्षणः । सुधामयसटापुञ्जविद्युत्कोटिनिभः शुभः ॥
...नानारत्नमयैर्दिव्यः केयूरः कटकान्वितैः । बाहुभिः कल्पवृक्षस्य शाखौघैरिव सत्फलैः
...चतुर्भिः कोमलैर्दिव्यैरन्वितः परमेश्वरः । जपाकुसुमसङ्काशैः शोभितः करपङ्कजैः ॥
...शङ्खचक्रगृहीताभ्यामुद्बाहुभ्यां विराजितः । वरदाभयहस्ताभ्यामितराभ्यां नृकेसरी ॥
...श्रीवत्सकौस्तुभोरस्को वनमालाविभूषितः । उद्यद्दिनकराभ्यांचकुण्डलाभ्यांविराजितः
...हारकेयूरकटकैर्भूषणैः समलङ्कृतः । सव्याङ्गस्थश्रिया युक्तो राजते नरकेसरी॥१४४॥
...लक्ष्मीनृसिंहं तं दृष्ट्वा देवताः समहर्षयः । आनन्दाश्रुजलैः सिक्ता हर्षनिर्भरचेतसः ॥
...आनन्दसिन्धुमग्नास्ते नमश्चक्रुर्निरन्तरम् । अर्चयामासुरात्मेशं दिव्यपुष्पसमर्पणैः ॥
...रत्नकुम्भैः सुधापूर्णैरभिषिच्य सनातनम् । वस्त्रैराभरणैर्गन्धैः पुष्पैर्धूपैर्मनोरमैः ॥
...दिव्यैर्नीराजितैर्दीपैरर्चयित्वा नृकेसरिम् । तुष्टुवुः स्तवनैर्दिव्यैर्नमश्चक्रुर्मुहुर्मुहुः॥१४८॥
ततः प्रसन्नो लक्ष्मीशस्तेषामिष्टान्वरान्ददौ ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ततो देवगणैः सार्धं सर्वेशो भक्तवत्सलः ॥ १४६ ॥

प्रह्लादं सर्वदैत्यानां चक्रे राजानमव्ययम् । आश्वास्य भक्तं प्रह्लादमभिषिच्य सुरो
ददौ तस्मै वरानिष्टान्भक्तिंचाऽव्यभिचारिणीम् । ततोदेवगणैःसर्वैःस्तूयमानोनृके
विकीर्णपुष्पवर्षैश्च तत्रैवाऽन्तरधीयत । ततः सुरगणाः सर्वे स्वं स्वं स्थानं प्रपे
पुनश्च यज्ञभागान्स्वान्बुभुजुः प्रीतमानसाः । ततो देवाः सगन्धर्वानिरातङ्कास्तदा
तस्मिन्हते महादैत्ये सर्व एव प्रहर्षिताः । प्रह्लादस्तु तदा चक्रे राज्यं धर्मेण वै
हरेः प्रसादाल्लब्धं तु राज्यं वैष्णवसत्तमः । बहुभिर्यज्ञदानाद्यैरर्चयित्वा नृकेस
काले हरिपदं प्राप योगिगम्यं सनातनम् । एतत्प्रह्लादचरितं ये तु शृण्वन्ति नि
न्ते सर्वे पापनिर्मुक्ता यास्यन्ति परमां गतिम् । एतत्ते कथितं देवि ! नृसिंहं वैभवं
शेषां च वैभवावस्थां शृणु देवि ! यथाक्रमम् ॥ १५७ ॥

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे उमामहेश्वरसं
नृसिंहप्रादुर्भावो नामाऽष्टात्रिंशदधिकद्विशततमोऽध्यायः ॥ २३८ ॥

---

## एकोनचत्वारिंशदधिकद्विशततमोऽध्यायः

### बलिराजोपाख्याने वामनप्रादुर्भाववर्णनम्

रुद्र उवाच ।

प्रह्लादस्य सुतो जज्ञे विरोचनइतीरितः । तस्य पुत्रो महाबाहुर्बलिर्वैश्वानरः प्रभुः
स तु धर्मविदां श्रेष्ठः सत्यसन्धो जितेन्द्रियः । हरेः प्रियतमोभक्तोनित्यंधर्मरतः शु

स जित्वा सकलान्देवान्सेन्द्रांश्च समरुद्गणान् ।
त्रीँल्लोकान्स्ववशे स्थाप्य राज्यं चक्रे महाबलः ॥ ३ ॥

अकृष्टपच्या पृथिवी बहुसस्यफलप्रदा । गावः पूर्णदुघाः सर्वाः पादपाः फलपुष्प
स्वधर्मनिरताः सर्वे नराः पापविवर्जिताः । अर्चयन्ति हृषीकेशं सदा विगतज्वर

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

एवं चकार धर्मेण राज्यं दैत्यपतिर्बली । इन्द्रादित्रिदशास्तस्य किङ्कराः समुपस्थिताः
ऐश्वर्यं त्रिषु लोकेषु बुभुजे वलदर्पहृत् । भ्रष्टराज्यं सुतं दृष्ट्वा तस्याऽपि हितकाम्यया॥
कश्यपो भार्यया सार्द्धं तपस्तेपे हरिं प्रति । अदित्या सह धर्मात्मा पयोव्रतसमन्वितः
अर्चयामास देवेशं पद्मनाभं जनार्दनम् । ततो वर्षसहस्राणि तेन सम्पूजितो हरिः ॥६॥
तत्रैवाऽऽविरभूत्तस्य देव्या सह सनातनः । तं दृष्ट्वा पुण्डरीकाक्षं शङ्खचक्रगदाधरम् ॥
इन्द्रनीलमणिश्यामं सर्वाभरणभूषितम् । स्फुरत्किरीटकेयूरहारकुण्डलशोभितम् ॥११

कौस्तुभोद्भासितोरस्कं पीतवस्त्रेण वेष्टितम् ।
श्रिया सह समासीनं मण्डपेन्द्रे महात्मनि ॥ १२ ॥

तं दृष्ट्वा जगतामीशं हर्षनिर्भरचेतसा । पत्न्या सह नमस्कृत्य तुष्टाव द्विजसत्तमः ॥

कश्यप उवाच ।

नमो नमस्ते लक्ष्मीश सर्वज्ञ जगदीश्वर !। सर्वात्मन्सर्वदेवेश! सृष्टिसंहारकारक ! ॥
अनादिनिधनानन्तवपुषे विश्वधारिणे । नमस्ते वेदवेदाङ्गवपुषे सर्वचक्षुषे ॥ १५ ॥
सर्वात्मने नमस्तुभ्यं नमः सूक्ष्मतराय च । कल्याणगुणपूर्णाय योगिध्येयात्मने नमः
नमो नित्यकुमाराय श्रीभूनीलाधिपाय च । नित्यमुक्तैकभोगाय परधाम्नि स्थिताय च
चतुरात्मन्नमस्तुभ्यं चतुर्व्यूह नमोऽस्तुते । पञ्चावस्थाय वै तुभ्यं नमस्ते पाञ्चकालिक!

पाञ्चकालिकनिष्ठैस्तु योगिभिः पूज्यसे सदा ।
पञ्चार्थतत्त्वविदुषां पञ्चसंस्कारशालिनाम् ॥ १६ ॥

पञ्चावस्थं स्वरूपं ते विज्ञेयं सततं हरे !। चतुर्धापरिपूर्णात्मन्नियतं कवयो विदुः ॥२०
यत्प्रसूति जगत्सर्वं पुनन्ति तव किङ्कराः । त्रयीमयाः कर्मनिष्ठा ये द्विजा भक्तवत्सलाः
येषां दयेक्षणादेव भवबन्धविमुक्तये । नमोऽस्तु त्रिजगद्धात्रे स्वयं धात्रेऽखिलात्मने
धात्रे विधात्रे विश्वाय विश्वरूपायते नमः । नारायणाय कृष्णाय वासुदेवाय शार्ङ्गिणे

विष्णवे जिष्णवे तुभ्यं शुद्धसत्त्वाय ते नमः ॥ २२ ॥

महादेव उवाच ।

इत्यादिस्तुतिभिः सम्यक्स्तूयमानो महर्षिणा । प्राहगम्भीरयावाचा परितुष्टो जनार्दनः .

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

श्रीभगवानुवाच ।

सन्तुष्टोऽहं द्विजश्रेष्ठ त्वयाभक्त्या समर्चितः । वरंवृणीष्व भद्रंतेकरोमि तववाञ्छि

महादेव उवाच ।

ततः प्राह हृषीकेशं भार्यया सह कश्यपः ॥

कश्यप उवाच ।

पुत्रत्वंममदेवेश!सम्प्राप्य स्वर्गिणांहितम् । कुरुष्व वलिनादेव त्रैलोक्यं निर्जितं
इन्द्रस्याऽवरजो भूत्वा उपेन्द्रइति विश्रुतः । येन केन च मार्गेण वलिंनिर्जित्य
त्रैलोक्यं मम पुत्राय देहि शक्राय शाश्वतम् ॥ २८ ॥

महादेव उवाच ।

इत्युक्तस्तेन विप्रेण तथेत्याह जनार्द्दनः । संस्तूयमानस्त्रिदशैस्तत्रैवाऽन्तरधीयत ।
एतस्मिन्नेव काले तु कश्यपस्य महात्मनः । अदित्या गर्भमागच्छद्भगवान्भूतभा
तस्मिन्काले वलिर्यागं दीर्घसत्रं महातपाः । यष्टुं महर्षिभिः सार्द्धमारेभे तद्वि
इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे उमामहेश्वरसं
वामनप्रादुर्भावोनामैकोनचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २३९ ॥

---

# चत्वारिंशदधिकद्विशततमोऽध्यायः

वटुवेषधारिणावामनेनवलियागेगत्वायज्ञार्थंत्रिपदक्रमंपृथिव्यायाचनं
तत्स्वीकृतौ च पदद्वयेनभूर्लोकादिब्रह्मलोकमापनं ब्रह्मण्डलेगङ्गोत्पत्ति

श्रीमहादेव उवाच ।

अथवर्षसहस्रान्ते सर्वलोकमहेश्वरम् । अदितिर्जनयामास वामनं विष्णुमच्युत
श्रीवत्सकौस्तुभोरस्कं पूर्णेन्दुसदृशद्युतिम् । सुन्दरं पुण्डरीकाक्षमतिखर्वतनुं

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

...पधरं देवं सर्ववेदाङ्गगोचरम् । मेखलाजिनदण्डादिचिह्नैरङ्कितमीश्वरम् ॥ ३ ॥
...दृष्ट्वा देवताः सर्वे शतक्रतुपुरोगमाः । स्तुत्वा महर्षिभिः सार्द्धं नमश्चक्रुर्महौजसम्
ततः प्रसन्नो भगवान्प्रोवाच सुरसत्तमान् ॥ ४ ॥

वामन उवाच ।

किं कर्तव्यं मया चाऽद्य तद्ब्रूत सुरसत्तमाः ! ॥ ५ ॥

श्रीशङ्कर उवाच ।

ततः प्रहृष्टास्त्रिदशास्तमूचुः परमेश्वरम् ॥ ६ ॥

देवाऊचुः ।

...स्मिन्काले बलेर्यज्ञो वर्त्तते मधुसूदन !। अप्रत्याख्यानकालोऽयं तस्य दैत्यपतेःप्रभो!
याचित्वा त्रिदिवं लोकं तन्नस्त्वं दातुमर्हसि ॥ ७ ॥

शङ्कर उवाच ।

...युक्तस्त्रिदशैस्सर्वैराजगाम बलिं हरिः । यागदेशे समासीनमृषिभिस्सार्द्धमष्टभिः ॥
...भ्यागतं तु तं दृष्ट्वा सहसोत्थाय दैत्यराट् । अभ्यागतः स्वयं विष्णुरितिहाससमन्वितः
...जयामास विधिना निवेश्य कुसुमासने । प्रणिपत्य नमस्कृत्य प्राह गद्गदया गिरा ॥

बलिरुवाच ।

धन्योऽस्मि कृतकृत्योऽस्मि सफलं मम जीवितम् ।
त्वामर्चयित्वा विप्रेन्द्र ! किं करोमि तव प्रियम् ॥ ११ ॥
...गतोऽसियदर्थन्त्वं मामुद्दिश्य द्विजोत्तम !। तत्प्रयच्छामि ते शीघ्रंब्रूहि वेदविदांवर!

शङ्कर उवाच ।

ततः प्रहृष्टमनसा तमुवाचमहीपतिम् ॥ १३ ॥

वामन उवाच ।

...णु राजेन्द्र! वक्ष्यामि ममागमनकारणम् । अग्निकुण्डस्य पृथिवीं देहि दैत्यपते! मम
...म त्रिविक्रममितां नान्यदिच्छामि मानद !। सर्वेषामेव दानानां भूमिदानमनुत्तमम् ॥
...यो ददाति महीं राजा विप्रायाऽकिञ्चनाय वै । अङ्गुष्ठमात्रामपिवा स भवेत्पृथिवीपतिः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न भूमिदानसदृशं पवित्रमिह विद्यते। भूमिं यः प्रतिगृह्णाति भूमिं यश्च प्रयच्छति
उभौ तौपुण्यकर्माणौनिधने स्वर्गगामिनौ। तस्माद्भूमिं महाराज! प्रयच्छ त्रिप
एतदल्पां महीं दातुं माविशङ्क महीपते!। जगत्त्रयप्रदानं तन्नाम भूप! भविष्यति

शङ्कर उवाच।

ततः प्रहृष्टवदनस्तथेत्याह महीपतिः। तस्मै महीप्रदानं तु कर्तुं मेने विधानतः।
तं दृष्ट्वा दैत्यराजं तं तदा तस्य पुरोहितः। उशना ह्यब्रवीद्वाक्यं मा राजन्दीयतां

शुक्र उवाच।

एषविष्णुःपरेशोऽथदेवैः सम्प्रार्थितोनृप!। वञ्चयित्वामहींसर्वां त्वत्तःप्राप्तुमिहा
तस्मान्मही न दातव्या तस्मै राजन्महात्मने। अन्यमर्थं प्रयच्छस्व वचनान्मम

श्रीशङ्कर उवाच।

ततः प्रहस्य राजाऽसौ तं गुरुं प्राह धैर्यतः॥ २४॥

बलिरुवाच।

प्रीतयेवासुदेवस्यसर्वं पुण्यंकृतंमया। अद्य धन्योऽस्म्यहं विष्णुः स्वयमेवाऽऽ
तस्यप्रदेयमेवाऽद्य जीवितंचमहत्सुखम्। तस्मादस्मैप्रयच्छामि त्रिलोकीमपि

श्रीशङ्कर उवाच।

इत्युक्त्वा भूपतिस्तस्यपादौ प्रक्षाल्यभक्तितः। वाञ्छितांप्रददौ भूमिंवारिपूर्वं वि
परिणीय नमस्कृत्य दत्त्वा वै दक्षिणां वसु। प्रोवाचतं वटुं विप्रं प्रहृष्टेनाऽन्त

बलिरुवाच।

धन्योऽस्मि कृतकृत्योऽस्मि तव दत्त्वा महीं द्विज!।
यत्रेष्टं तव विप्रेन्द्र! तद्गृहाण महीमिमाम्॥ २६॥

श्रीशङ्कर उवाच।

तमुवाच नृपं विष्णूराजंस्तव समीपतः। मापयामि पदेनाऽद्य पृथिवीं तव
इत्युक्त्वा खर्वरूपं तद्विहाय परमेश्वरः। त्रिविक्रमवपुर्भूत्वा जग्राह पृथिवीम
पञ्चाशत्कोटिविस्तीर्णां ससमुद्रमहीधराम्। ससागरां च सद्वीपां सदेवासुर

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

...दैतेन वपुषो विक्रस्य मधुसूदनः । उवाच दैत्यराजेन्द्र किङ्करोमीति शाश्वतः ॥३३
... त्रैविक्रमं रूपमीश्वरस्य महौजसम् । हितार्थमपिदेवानामृषीणां च महात्मनाम् ॥
...द्रष्टुमपि शक्यं स्याद्ब्रह्मणः शङ्करस्यच । तत्पदं पृथिवीं सर्वामाक्रम्य गिरिजेशुभे!
...तिरिक्तं समभवच्छतयोजनमायतम् । दिव्यं चक्षुर्ददौ तस्मै दैत्यराजे सनातनः ॥३६
...स्मै सन्दर्शयामास स्वकं रूपं जनार्दनः । तद्विश्वरूपं देवस्य दृष्ट्वा दैत्येश्वरो बलिः॥
...हर्षमतुलं लेभे सानन्दाश्रुपरिप्लुतः । दृष्ट्वा देवं नमस्कृत्य स्तुत्वा स्तुतिभिरेव च ॥
प्राह गद्गदया वाचा प्रहृष्टेनाऽन्तरात्मना ॥ ३८ ॥

बलिरुवाच ।

...न्योऽस्मि कृतकृत्योऽस्मि त्वांदृष्ट्वापरमेश्वरम् । लोकत्रयं त्वमेवैतद्गृहाण परमेश्वर!

श्रीशङ्कर उवाच ।

...थ सर्वेश्वरो विष्णुर्द्वितीयं पदमव्ययम् । ऊर्ध्वं प्रसारयामास ब्रह्मलोकान्तमच्युतः॥
...नक्षत्रग्रहोपेतं सर्वदेवसमावृतम् । पदेन परिपूर्णोऽभूदच्युतस्य शुभानने ॥ ४१ ॥
...ः पितामहो ब्रह्मा चक्रपद्मादिचिह्नितम् । पादं तद्देवदेवस्य हर्षसङ्कुलचेतसा ॥४२॥
धन्योऽस्मीति वदन्ब्रह्मा गृहीत्वा स्वकमण्डलुम् ।
भक्त्या प्रक्षालयामास तत्र संस्थितवारिणा ॥ ४३ ॥
...ण्यमभवत्तोयं तस्य विष्णोः प्रभावतः । तत्तीर्थं मेरुशिखरे पपात विमलं जलम् ॥
...तः पावनार्थं वै चतुर्दिक्षु प्रवाहितम् । सिता चाऽलकनन्दा च चक्षुर्भद्रा यथाक्रमम्
...क्ष्याऽलकनन्दाच मेरोर्दक्षिणतःस्मृता । त्रिधानाम्ना त्रिपथगा त्रिस्रोतालोकपावनी
...र्गं मन्दाकिनी प्रोक्ता त्वधो भोगवतीतथा । मध्ये वेगवतीगङ्गा पावनार्थं नृणांप्रिया
...दृष्ट्वा मेरुमध्येतु प्रस्रवन्तीं शुभानने !। आत्मनः पावनार्थाय शिरसाऽहमधारयम्॥
...र्षं वर्षसहस्रं तु धृत्वा गङ्गाजलं शुभम् । शिवत्वमगमं देवि! सर्वलोकेषु पूजितः ॥
...वहेच्छिरसा गङ्गातोयं विष्णुपदोद्भवम् । प्राशयेद्वा जगत्पूज्यो भविष्यतिनसंशयः
...गङ्गेति योब्रूयाद्यो जनानां शतैरपि । मुच्यते सर्वपापेभ्यो विष्णुलोकं स गच्छति
...सो भगीरथो राजा गौतमश्च महातपाः । तपसा पूजयित्वा मां गङ्गार्थं समयाचत



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्वलोकहितार्थाय तां गङ्गां वैष्णवीं शिवाम् ।
तयोरहं तामददां प्रीत्या देवि ! सरिद्वराम् ॥ ५३ ॥

गौतमेन समानीता गौतमी तेन कीर्त्तिता । भागीरथीति विख्याता तेनराज्ञा कृता... प्रसङ्गात्ते समाख्यातं गङ्गाजन्माऽत्यनुत्तमम् । ततो नारायणः श्रीमान्वलेर्दैत्यपते... रसातलं शुभं लोकं प्रददौ भक्तवत्सलः । सर्वेषां दानवानां तु नागानां यादसाम्... राजानं तु वलिं चक्रे यावदाभूतसम्प्लवम् । प्रतिगृह्य वलेर्लोकान्वटुवेषेण दैत्यहा... महेन्द्राय ददौ प्रीत्या काश्यपो विष्णुरव्ययः । ततोदेवाः सगन्धर्वा ऋषयश्च महा... तुष्टुवुः स्तवनैर्दिव्यैः पूजयामासुरच्युतम् । संक्षिप्य तन्महद्रूपं तेषां सन्दर्शनात्... सम्पूज्यमानस्त्रिदशैरन्तर्द्धानं ययौ हरिः । इत्थं सुरक्षितः शक्रो विष्णुना प्रभवि... त्रैलोक्यं महदैश्वर्यमवाप त्रिदिवेश्वरः । एतत्ते सर्वमाख्यातं वामनं वैभवं शु...

शेषं यद्वैभवं देवि ! तद्वक्ष्यामि यथाक्रमात् ॥ ६१ ॥

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे उमामहेश्वर सम्वादे वामनप्रादुर्भावो नाम चत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४० ॥

---

## एकचत्वारिंशदधिकद्विशततमोऽध्यायः

परशुरामचरित्रप्रसङ्गे जमदग्निहैहयाधिपत्योः कामधेनुप्राप्त्यैविवादो... जमदग्निहननम्परशुरामकृतानिःक्षत्रापृथ्वीवर्णनम्

ईश्वर उवाच ।

भृगुपुत्रो महानासीज्जामदग्निर्द्विजोत्तमः । समस्तवेदवेदाङ्गपारगश्च महातपाः... तपस्तेपे स धर्मात्मा महेन्द्रं प्रति भामिनि !। सहस्रवर्षपर्यन्तं गङ्गायाः पुलिने शु...

ततः प्रसन्नः प्राहेदं भगवान्पाकशासनः ॥ २ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इन्द्र उवाच ।

वरं वृणीष्व विप्रेन्द्र ! यत्ते मनसि वर्त्तते ॥३॥

ईश्वर उवाच ।

ततः प्रोवाच विप्रर्षिः परितुष्टं शतक्रतुम् ॥ ४ ॥

जमदग्निरुवाच ।

सुरभिं देहि मे देव ! सर्वकामदुघां सदा ॥ ५ ॥

ईश्वर उवाच ।

प्रसन्नो देवेशस्तस्मै विप्राय गोत्रभित् । प्रददौ सुरभिं देवीं सर्वकामदुघां तदा॥

लब्ध्वा सुरभिं देवीं जमदग्निर्महातपाः । उवास महदैश्वर्यः शतक्रतुरिवाऽपरः ॥७॥

कस्य सुतां रम्यां रेणुकां नामनामतः । उपयेमे विधानेन जमदग्निर्महातपाः ॥८॥

सह स धर्मात्मा रेमे वर्षाण्यनेकशः । पौलोम्या शुभयादेव्या यथासङ्क्रन्दनोविभुः

सपुत्रकामत्वादिष्टिं चक्रेसुधार्मिकः । इष्ट्या सन्तोषयामास पाकशासनमीश्वरम्

तुष्टः शचीभर्त्ता ददौ पुत्रं महाबलम् । महौजसं महाबाहुं सर्वशत्रुप्रतापनम् ॥११॥

कालेन विप्रेन्द्रो रेणुकायां शुचिस्मिते !। पुत्रमुत्पादयामास महावीर्यं बलान्वितम्

ष्णोरंशांशभागेन सर्वलक्षणलक्षितम् । तस्मिन्सुते महावीर्ये भृगुस्तस्य पितामहः॥

चास्मैददौ हर्षाद्विष्णोरंशोपलक्षितम् । चक्रेऽथ नामधेयन्तु रामइत्यस्यशोभनम्

ग्नेः समुत्पन्नो जामदग्न्य इतीरितः । तद्भार्गवान्वयः सोऽपि ववृधे द्विजपुङ्गवः ॥

नीतस्तदा काले सर्वविद्याविशारदः । तपस्तप्तुं जगामाऽथ शालिग्रामाचलं प्रति ॥

कश्यपं तत्र ब्रह्मर्षिममितौजसम् । दृष्ट्वा प्रणम्य हर्षेण पूजयामास भार्गवः ॥१७

सम्पूजितस्सम्यङ्मरीचितनयो द्विजः । विधिना प्रददौ तस्मै मन्त्रं वैष्णवमव्ययम्

मन्त्रस्तदा रामः कश्यपात्तु महात्मनः । पूजयामास विधिना सतदा कमलापतिम्

रं महामन्त्रं जपन्नेव दिवानिशम् । ध्यायन्कमलपत्राक्षं विष्णुं सर्वगतं हरिम् ॥

पे स धर्मात्मा बहुवर्षाणि भार्गवः । जितेन्द्रियस्तु यतवाक्तदा तस्थौ महातपाः

दग्निस्तु विप्रर्षिः स्थितो गङ्गातटे शुभे । चकार विधिवद्धर्मं यज्ञदानादिकं महत् ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

धेन्वाः प्रसादादिन्द्रस्य सम्पूर्णास्तस्य सम्पदः ।
कस्यचित्त्वथ कालस्य हैहयाधिपतिः प्रभुः ॥ २३ ॥

विजित्वा सर्वराष्ट्राणि सर्वसैन्यसमावृतः । भार्गवस्याऽऽश्रमम्प्राप्यजमदग्निमे...
समीक्ष्य तं महाभागं ववन्दे मुनिसत्तमम् । पृष्ट्वा तु कुशलं तस्य महर्षेर्भावित...
प्रददौ नृपतिस्तस्मै वस्त्राण्याभरणानि च । स च सम्पूजयामास राजानं गृह...
मधुपर्केण विधिना पूजयित्वा नृपोत्तमम् । ससैन्याय नृपेन्द्राय भोजनं प्रदं...
प्रार्थिता सुरभिस्तेन भार्गवेण सुधीमता । सम्पूर्णमन्नपानादि ससर्ज शवला...
अक्षय्यमन्नपानादि तया सृष्टं महातपाः । ससैन्याय नृपेन्द्राय प्रददौ मुनिस...
तांदृष्ट्वा शवलांराजा कुतूहलसमन्वितः । स्पृहां चाऽप्यकरोद्राजा तस्यांगवि मु...
अयाचत्सुरभिं तत्र जमदग्निं नृपोत्तमः ॥ ३० ॥

कार्त्तवीर्योवाच ।

शवलां देहि मे विप्र! कपिलां सर्वकामदाम् । अन्यधेनुसहस्राणि दास्यामि तव मु...

ईश्वर उवाच ।

इत्युक्तस्तेन राज्ञाऽऽह जमदग्निर्महातपाः ॥ ३२ ॥

जमदग्निरुवाच ।

न देया शवला राजन्मया तव महीपते !। इयं च देवदेवेन शक्रेण परिप...
देवतानां धनं राजन्दातव्यं स्यात्कथं मया ॥ ३३ ॥

ईश्वर उवाच ।

इत्युक्तः स तदा राजा क्रोधेन कलुषीकृतः । बलाज्जग्राह शवलां सर्वसैन्यस...
ततः क्रुद्धा महाभागा शवला वरवर्णिनि !। जघान तस्य सैन्यानि शृङ्गैः खुर...
घातयित्वा मुहूर्त्तेन तत्सैन्यंशबलाबलात् । अन्तर्द्धानंगता देवी ययौशक्रान्ति...
स्वसैन्यं निहतं दृष्ट्वा सोऽर्जुनः क्रोधमूर्च्छितः । मुष्टिना ताडयामास भार्गवं द्विज...
ताडितस्तेन बहुशो विकलाङ्गः प्रकल्पितः । पपात सहसा भूमौ ममार द्विज...
हत्वा मुनिवरं तत्र पापात्मा हैहयाधिपः । महासैन्यपरीवारो विवेश नगरं...

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

...स्तु देवदेवेशं पूजयामास भार्गवः । तेन सम्पूजितो देवः प्रसन्नः प्राह केशवः ॥

श्रीभगवानुवाच ।

...तोऽस्मि तपसा वत्स! भवतो नियतात्मनः । सम्प्रदास्यामि ते विप्र मच्छक्तिं परमां शुभाम् ।
...शितोऽथ मच्छक्त्या जहि दुष्टान्नृपोत्तमान् । भूभारकविनाशाय देवतानां हिताय वै ॥

ईश्वर उवाच ।

...क्त्वा प्रददौ देवः परशुं शत्रुधर्षणम् । वैष्णवं च महच्चापं दिव्याण्यस्त्राण्यनेकशः ।
दत्त्वा प्रोवाच भगवाञ्जामदग्न्यं जनार्दनः ॥ ४३ ॥

श्रीभगवानुवाच ।

...त्कटान्नृपान्हत्वा वहुशः परवीरहा । गृहाण पृथिवीं सर्वां सागरान्तां द्विजोत्तम !
...स्व च धर्मेण वीर्येण महतावृतः । कालेन मत्पदं चाऽपि मत्प्रसादाद्गमिष्यसि ॥

ईश्वर उवाच ।

...क्त्वाऽन्तर्हितो देवं वरं दत्त्वा द्विजन्मने । रामोऽपि चाऽथ सहसा प्रययौ पितुराश्रमम् ।
...रं निहतं दृष्ट्वा भार्गवः क्रोधमूर्च्छितः । निःक्षत्रां कर्तुमन्विच्छन्महीं नृपसमाकुलाम् ।
...म हैहयपतेर्नगरं नृपसम्वृतम् । क्रोधावेशज्वलद्गात्रो द्वार्यतिष्ठदुदायुधः ॥ ४८ ॥
...ष्ट्वा तत्पुरजना जामदग्न्यं महौजसम् । जाज्वल्यमानं वपुषा कालाग्निमिव मेनिरे ॥
...र्ता विद्रुताः सर्वे राजानं हैहयाधिपम् । शशंसुस्तं महासत्त्वं सर्वायुधसमन्वितम् ।
श्रुत्वा स राजा तद्वाक्यं प्राह विस्मितचेतसा ॥ ५० ॥

हैहयाधिप उवाच ।

...सौ मम पुरद्वारि सायुधः संस्थितो बलात् । महेन्द्रो वा यमो वाऽपि रुद्रो वा धनदोऽपि वा ।
सायुधो मत्पुरद्वारि स्थातुं शक्तो न कर्हिचित् ॥ ५२ ॥

महादेव उवाच ।

...क्त्वा पार्थिवेन्द्रोऽसौ किङ्करान्सुमहाबलान् । प्रेरयामास तं दुष्टं गृह्णीतेत्याह दुर्मतिः ।
...त्वा ददृशुर्वीरं पुरद्वारि महाबलम् । ज्वलन्तमिव कालाग्निं दुर्निरीक्ष्यं स्वतेजसा ।
...स्य सन्दर्शनेऽप्यत्र न शक्तास्ते महाबलाः । ग्रहीतुकामास्तं वीरं समन्तात्प्रययुर्भृशम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तान्दृष्ट्वा सायुधान्सर्वान्पार्थिवेन्द्रस्य किङ्करान् । प्रहसन्प्राह विप्रेन्द्रो जामदग्न्यो

परशुराम उवाच ।

भार्गवस्य सुतो रामः सम्प्राप्तोऽहं नराधमाः ! ।

स्वपितुर्निधनात्सर्वान्हनिष्यामि नृपोत्तमान् ॥ ५७ ॥

कार्तवीर्यस्य रुधिरं मत्पित्रे तिलसंयुतम् । दास्यामि पिण्डदानं च तच्छ्रु

महादेव उवाच ।

इत्युक्तास्ते महावीर्याः किङ्करास्तस्य भूपतेः । शरैस्तं ताडयामासुःपलालै

ततः क्रुद्धो महावीर्यो रामस्सत्यपराक्रमः । वैष्णवं चापमाकृष्य ज्यानिनादमथा

तेन नादेन महता पूरितं भुवनत्रयम् । देवानामपि सन्त्रासो बभूव महदद्भुतम्

ततः पावकसङ्काशैराशुगैः सुमहाबलः । ताडयामास तान्वीरान्किङ्करान्वै महा

हत्वा तु किङ्करांस्तस्य पार्थिवस्य महात्मनः । कालाग्निरिवसन्तस्थौ सर्वभूत

श्रुत्वा तु किङ्करान्स्वस्य हतान्रामेणधीमता । हैहयाधिपतिर्वीरः क्रोधसंरक्त

निर्ययौ सहसैन्येनयत्राऽऽस्तेभार्गवोऽव्ययः । तं दृष्ट्वा घोरसङ्काशं ज्वलन्तं

त्रस्ताः सर्वे जनास्तत्र शङ्कमाना जनक्षयम् । ततो युद्धं महाघोरं रामस्य नृपं

शस्त्रास्त्रपातनैर्भीमैर्मेघयोरिव वर्षतोः । ततो रामो महातेजास्तत्सैन्यं नृपते

निर्ददाह क्षणात्सर्वं वैष्णवास्त्रेणलीलया । ततः परशुना रामस्तीक्ष्णेनाऽमित

चिच्छेद बाहुसाहस्रं कार्तवीर्यस्य दुर्मतेः । न शशाक महावीर्यो योद्धुं रामेण

नष्टवीर्यो बभूवाऽत्र पापेन स्वेन दुर्मतिः । चिच्छेद तच्छिरः क्रुद्धो रेणुकातन

महाद्रिशृङ्गं वज्रेण यथा देवपतिर्बली । हत्वा सहस्रबाहुं तं जामदग्न्यः प्रताप

जघान पार्थिवान्सर्वान्क्रुद्धः परशुना मृधे । रामं दृष्ट्वा महारौद्रं पार्थिवाः पृथि

भयार्त्ता विद्रुताः सर्वे नागाः केसरिणं यथा । विद्रुतानपि भूपालान्पितुर्निधन

जघान भार्गवः क्रुद्धो नागानिव खगेश्वरः । निःक्षत्रं कृतवान्सर्वं जामदग्न्यः प्रत

ररक्ष भगवानेकमिक्ष्वाकोः सुमहत्कुलम् । मातामहस्यान्वयत्वाद्रेणुकावच

तान्भ्रष्टराज्यान्कृत्वा वै मातामहकुलोद्भवान् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न हत्वा मनुवंशांस्तान्रामो नृपकुलान्तकः ॥ ७६ ॥
एवं तु भूभृतां वंशं नाशयामास वीर्यवान् । कृत्वा चोर्वीं तु निःक्षत्रां जमदग्निसुतो बली
अश्वमेधं महायज्ञं चकार विधिवद्‌द्विजः । प्रददौ विप्रमुख्येभ्यः सप्तद्वीपवतीं महीम् ॥
दत्त्वा महीं स विप्रेभ्यो जामदग्न्यःप्रतापवान् । तपस्तप्तुंययौसोऽथनरनारायणाश्रमम्
एतत्ते कथितं देवि जामदग्न्यमहात्मनः । शक्त्यावेशावतारस्य चरितं शार्ङ्गिणः प्रभोः
नोपास्यं हि भवेत्तस्यशक्त्यावेशान्महात्मनः । उपास्यो भगवद्भक्तैर्विप्रमुख्यैर्महात्मभिः
रामकृष्णावतारौ तु परिपूर्णौ हि सद्‌गुणैः । उपास्यमानावृषिभिरपवर्गप्रदौ नृणाम्
इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे उमामहेश्वर-
सम्वादे परशुरामचरितं नामैकचत्वारिंशदधिकद्विशततमोऽध्यायः ॥२४१ ॥

---

# द्विचत्वारिंशदधिकद्विशततमोऽध्यायः

## श्रीरामावतारवर्णनेस्वायम्भुवमनोस्तपःकरणंत्रेतायांदशरथस्यराज्ञोगृहे-रामावतारः श्रीरामवनवासोद्भववृत्तान्तवर्णनम्

रुद्र उवाच ।

स्वायम्भुवो मनुः पूर्वं द्वादशार्णं महामनुम् । जजाप गोमतीतीरे नैमिषे विमले शुभे ॥
तेन वर्षसहस्रेण पूजितः कमलापतिः । मत्तो वरं वृणीष्वेति तं प्राह भगवान्हरिः ॥

मनुरुवाच ।

मत्त्वं भज देवेश त्रीणि जन्मानिचाच्युत ॥ त्वां पुत्रलालसत्वेन भजामि पुरुषोत्तमम्

रुद्र उवाच ।

इत्युक्तस्तेन लक्ष्मीशः प्रोवाच सुमहागिरा ॥ ४ ॥

विष्णुरुवाच ।

भविष्यति नृपश्रेष्ठ यत्ते मनसि काङ्क्षितम् । ममैव च महाप्रीतिस्तव पुत्रत्वहेतवे॥५॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्थितिप्रयोजने काले तत्र तत्र नृपोत्तम !। त्वयि जातेत्वहमपि जातोऽस्मि तत्पुत्र

परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।
धर्म्मसंस्थापनार्थाय सम्भवामि तवाऽनघ ! ॥ ७ ॥

रुद्र उवाच ।

एवं दत्त्वा वरं तस्मै तत्रैवाऽन्तर्दधेहरिः । अस्याभूत्प्रथमं जन्म मनोः स्वायम्भुव

रघूणामन्वयेपूर्वं राजा दशरथो ह्यभूत् । द्वितीयो वसुदेवोऽभूद्वृष्णीनामन्वये

कलेर्दिव्यसहस्राब्दप्रमाणस्यान्त्यपादयोः । शम्भलग्रामके मुख्ये ब्राह्मणः स

ततो मुक्तिर्भवेत्तस्य मनोर्जन्मत्रयान्तरे । राघवः प्रथमं जज्ञे कृष्णस्तु तदनन्तरम्

कल्किरूपी हरिः पश्चाद्ब्राह्मणस्य जनिष्यति ।
तस्य पत्नी महाभागा सुशीला नाम भामिनी ॥ १२ ॥

कौसल्या समभूत्पत्नी राज्ञो दशरथस्य हि । यदुवंशस्य सवाऽथ देवकी नाम

हरिव्रतस्य विप्रस्य भार्या देवप्रभा पुनः । एवंमातृत्वमापन्ना त्रीणि जन्मानि

पूर्वं रामस्य चरितं वक्ष्यामि तव सुव्रते !। यस्य स्मरणमात्रेण विमुक्तिः पापि

हिरण्यकहिरण्याक्षौ द्वितीयं जन्मसंश्रितौ । कुम्भकर्णदशग्रीवावजायेतां महा

पुलस्त्यस्य सुतो विप्रो विश्रवानाम धार्मिकः ।
तस्य पत्नी विशालाक्षी राक्षसेन्द्रसुताऽनघे ! ॥ १७ ॥
सुकेशितनया सा स्यात्सुमालेर्दानवस्य च ।
केकसी नाम कन्याऽऽसीत्तस्य भार्या दृढव्रता ॥ १८ ॥

कामोद्रिक्तातु सा देवी सन्ध्याकालेमहामुनिम् । रमयामास तन्वङ्गी यथेष्टं शुभ

तत्कालसम्भवौ गर्भौतस्यां जातौमहाबलौ । रावणःकुम्भकर्णश्च राक्षसौलोक

कन्याशूर्पणखानामजाताऽतिविकृतानना । कस्यचित्त्वथकालस्यतस्यांजातोवि

सुशीलो भगवद्भक्तः सत्यवाग्धर्मवाञ्छुचिः । रावणः कुम्भकर्णश्च हिमवत्पर्वते

महोग्रतपसा मां वै पूजयामासतुर्भृशम् । रावणस्त्वथ दुष्टात्मा स्वशिरःकमलैः

पूजयमास मां देवि! दारुणेनैव कर्मणा । ततस्तमब्रवं सुभ्रूः प्रहृष्टेनान्तरात्मना

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

[व]रं वृणीष्व मे वत्स यत्ते मनसि वर्त्तते । ततः प्रोवाच दुष्टात्मा देवदानवरक्षसाम् ॥
[अ]वध्यत्वं प्रदेहीति सर्वलोकजिगीषया । ततोऽहं दत्तवांस्तस्मै राक्षसाय दुरात्मने ॥
[दे]वदानवयक्षाणामवध्यत्वं वरानने !। राक्षसोऽसौ महावीर्यो वरदानात्तु गर्वितः ॥२७
[त्रीँ]ल्लोकान्पीडयामास देवदानवमानुषान् । तेन सम्बाध्यमानाश्च देवा ब्रह्मपुरोगमाः॥
[आ]र्त्ताः शरणं जग्मुरीश्वरं कमलापतिम् । ज्ञात्वाऽथ वेदनां तेषामभयाय सनातनः॥
उवाच त्रिदशान्सर्वान्ब्रह्मरुद्रपुरोगमान् ॥ २९ ॥

श्रीभगवानुवाच ।

[भू]त्वो दशरथस्याहमुत्पत्स्यामि रघोःकुले । हनिष्यामि दुरात्मानं रावणं सहबान्धवम्
[मा]नुषं वपुरास्थाय हन्मि दैवतकण्टकम् । नन्दिशापाद्भवन्तोऽपि वानरत्वमुपागताः ॥
कुरुध्वं मम साहाय्यं गन्धर्वाप्सरसोत्तमाः ॥ ३० ॥

रुद्र उवाच ।

[इत्यु]क्ता देवतास्सर्वा देवदेवेन विष्णुना । वानरत्वमुपागम्य जज्ञिरे पृथिवीतले॥३२॥
[पू]र्वेण प्रदत्ता तु मही सागरमेखला । दत्ता महर्षिभिः पूर्वं रघूणां सुमहात्मनाम् ॥
[वै]वस्वतमनोः पुत्रो राज्ञां श्रेष्ठो महाबलः । इक्ष्वाकुरिति विख्यातस्सर्वधर्मविदाम्वरः॥
[त]दन्वये महातेजा राजा दशरथो बली । अजस्य नृपतेः पुत्रः सत्यवाञ्छीलवाञ्छुचिः
[स] राजा पृथिवींसर्वां पालयामासवीर्यतः । राज्येषु स्थापयामास सर्वान्पार्थिवसत्तमान्
[को]सलस्यनृपस्याऽथ पुत्री सर्वाङ्गशोभना । कौसल्या नाम तांकन्यामुपयेमे स पार्थिवः
मागधस्य नृपस्याऽथ तनया च शुचिस्मिता ।
सुमित्रानाम नाम्ना च द्वितीया तस्य भामिनी ॥३८ ॥
[तृ]तीया केकयस्याऽथ नृपतेर्दुहिता तथा । भार्याऽभूत्पद्मपत्राक्षी कैकेयी नाम नामतः
ताभिः स्म राजा भार्याभिस्तिसृभिर्धर्मसंयुतः ।
रमयामास काकुत्स्थः पृथिवीं चाऽनुपालयन् ॥ ४० ॥
[अ]योध्यानामनगरी सरयूतीरसंस्थिता । सर्वरत्नसुसम्पूर्णा धनधान्यसमाकुला ॥४१॥
[प्र]ाकारगोपुरैर्जुष्टा हेमप्राकारसङ्कुला । उत्तमैर्गार्गतुरगैर्महेन्द्रस्ययथापुरी ॥ ४२ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तस्यां राजा स धर्मात्मा उवास मुनिसत्तमैः । पुरोहितेन विप्रेण वसिष्ठेन महा
राज्यंच कारयामास सर्वं निहतकण्टकम् । यस्मादुत्पत्स्यते तस्यां भगवान्पुरु
तस्मात्तुनगरीपुण्या साप्ययोध्येतिकीर्तिता । नगरस्यपरंधाम्नो नामतस्याप्य
यत्राऽऽस्ते भगवान्विष्णुस्तदेव परमं पदम् । तत्र सद्यो भवेन्मोक्षः सर्वकर्म
जाते तत्र महाविष्णौ नराःसर्वे मुदं ययुः । स राजा पृथिवीं सर्वां पालयित्वा
अयजद्वैष्णवेष्ट्याच पुत्रार्थी हरिमच्युतम् । तेन सम्पूजितः श्रीशो राज्ञा सर्व
वैष्णवेन तु यज्ञेन वरदः प्राह केशवः । तस्मिन्नाविरभूदग्नौ यज्ञरूपो हरिस्तदा
शुद्धजाम्बूनदप्रख्यः शङ्खचक्रगदाधरः । शुक्लाम्बरधरः श्रीमान्सर्वभूषणभूषितः
श्रीवत्सकौस्तुभोरस्को वनमालाविभूषितः । पद्मपत्रविशालाक्षश्चतुर्बाहुरु
सव्याङ्कस्थश्रिया सार्द्धमाविरासीद्रमेश्वरः । वरदोऽस्मीति तं प्राह राजानं भक्त
तं दृष्ट्वा सर्वलोकेशं राजा हर्षसमाकुलः । ववन्दे भार्यया सार्द्धं प्रहृष्टेनान्तरा
प्राञ्जलिः प्रणतो भूत्वा हर्षगद्गदया गिरा । पुत्रत्वं मे भजेत्याह देवदेवं जना
ततः प्रसन्नो भगवान्प्राह राजानमच्युतः ॥५४ ॥

विष्णुरुवाच ।

उत्पत्स्येऽहं नृपश्रेष्ठ! देवलोकहिताय वै । परित्राणाय साधूनां राक्षसानां व
मुक्तिं प्रदातुं लोकानां धर्मसंस्थापनाय च ॥ ५५ ॥

महादेव उवाच ।

इत्युक्त्वापायसं दिव्यं हेमपात्रस्थितंश्रृतम् । लक्ष्म्याहस्तस्थितं शुभ्रं पार्थिवाय

विष्णुरुवाच ।

इदं वै पायसं राजन्पत्नीभ्यस्तव सुव्रत ! । देहि ते तनयास्तासु उत्पत्स्यन्ते म

महादेव उवाच ।

इत्युक्त्वा मुनिभिःसर्वैः स्तूयमानोजनार्दनः । स्वात्मानंदर्शयित्वाऽथतथैवान्त
स राजा तत्र दृष्ट्वा च पत्नीं ज्येष्ठां कनीयसीम् ।
विभज्य पायसं दिव्यं प्रददौ सुसमाहितः ॥ ५६ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

एतस्मिन्नन्तरे पत्नी सुमित्रा तस्य मध्यमा । तत्समीपं प्रयातासापुत्रकामा सुलोचना
तां दृष्ट्वा तत्र कौसल्या कैकेयी च सुमध्यमा । अर्द्धमर्द्धं प्रददतुस्ते तस्यैपायसं स्वकम्
तत्प्राश्यपायसं दिव्यं राजपत्न्यःसुमध्यमाः । सम्पन्नगर्भाः सर्वास्ता विरेजुः शुभ्रवर्चसः
तासां स्वप्नेषु देवेशः पीतवासा जनार्दनः । शङ्खचक्रगदापाणिराविर्भूतस्तदा हरिः ॥
अथ काले मनोरम्ये मधुमासि शुचिस्मिते । शुक्ले नवम्यां विमले नक्षत्रेऽदितिदैवते
मध्याह्नसमये लग्ने सर्वग्रहशुभान्विते । कौसल्या जनयामास पुत्रं लोकेश्वरं हरिम् ॥
इन्दीवरदलश्यामं कोटिकन्दर्पसन्निभम् । पद्मपत्रविशालाक्षं सर्वाभरणशोभितम् ॥६६
श्रीवत्सकौस्तुभोरस्कं सर्वाभरणभूषितम् । उद्यद्दिनकरप्रख्यकुण्डलाभ्यां विराजितम्
अनेकसूर्यसङ्काशं तेजसा महतावृतम् । परेशस्य तनो रम्यं दीपादुत्पन्नदीपवत् ॥६८॥
ईशानं सर्वलोकानां योगिध्येयं सनातनम् । सर्वोपनिषदामर्थमनन्तं परमेश्वरम् ॥६९॥
जगत्सर्गस्थितिलये हेतुभूतमनामयम् । शरण्यं सर्वभूतानां सर्वभूतमयं विभुम् ॥७०॥
समुत्पन्ने जगन्नाथे देवदुन्दुभयो दिवि । विनेदुः पुष्पवर्षाणि ववृषुः सुरसत्तमाः ॥

प्रजापतिमुखा देवा विमानस्था नभस्तले ।
तुष्टुवुर्मुनिभिः सार्द्धं हर्षपूर्णाङ्गविह्वलाः ॥ ७२ ॥

जगुर्गन्धर्वपतयो ननृतुश्चाऽप्सरोगणाः । ववुःपुण्याःशिवा वाताः सुप्रभोऽभूद्दिवाकरः
जज्वलुश्चाग्नयः शान्ता विमलाश्चदिशो दश । ततस्स राजा हर्षेण पुत्रं दृष्ट्वा सनातनम्
पुरोधसा वसिष्ठेन जातकर्मतदाऽकरोत् । नाम चाऽस्मैददौरम्यं वसिष्ठो भगवांस्तदा
श्रियः कमलवासिन्या रमणोऽयंमहान्प्रभुः । तस्माच्छ्रीरामइत्यस्यनामसिद्धंपुरातनम्

सहस्रनाम्नां श्रीशस्य तुल्यं मुक्तिप्रदं नृणाम् ।
विष्णुमासे समुत्पन्नो विष्णुरित्यभिधीयते ॥ ७७ ॥

एवंनामाऽस्यदत्त्वाऽथ वसिष्ठो भगवानृषिः । परिणीयनमस्कृत्यस्तुत्वास्तुतिभिरेवच
संकीर्त्यनामसाहस्रं मङ्गलार्थं महात्मनः । विनिर्ययौमहातेजास्तस्मात्पुण्यतमाद्गृहात्
राजाऽथ विप्रमुख्येभ्यो ददौ बहुधनं मुदा । गवामयुतदानं च कारयामास धर्मतः ॥
ग्रामाणां शतसाहस्रं ददौ रघुकुलोत्तमः । वस्त्रैराभरणैर्दिव्यैरसङ्ख्येयैर्धनैरपि ॥८१॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विष्णोस्संतुष्टये तत्र तर्पयामास भूसुरान् । कौसल्याचसुतं दृष्ट्वा रामं राजीवलोचनम्
फुल्लहस्तारविन्दाभं पद्महस्ताम्बुजान्वितम् । तस्य श्रीपादकमले पद्माब्जे च वराङ्कि
शङ्खचक्रगदापद्मध्वजवज्रादिचिह्निते । दृष्ट्वा वक्षसि श्रीवत्सं कौस्तुभं वनमालया
तस्याऽङ्के सा जगत्सर्वं सदेवासुरमानुषम् । स्मितवक्त्रे विशालाक्षी भुवनानि चतु
निःश्वासे तस्य वेदांश्च सेतिहासान्महात्मनः । द्वीपानब्धीन्गिरींस्तस्य जघने
नाभ्यां ब्रह्मशिवौ तस्य कर्णयोश्च दिशःशुभाः । नेत्रयोर्वह्निसूर्यौ चघ्राणे वायुं महा
सर्वोपनिषदामर्थं दृष्ट्वा तस्य विभूतयः । कृत्स्ना भीता वरारोहा प्रणम्य च पुनःपुनः

हर्षाश्रुपूर्णनयना प्राञ्जलिर्वाक्यमब्रवीत् ॥ ८८ ॥

कौसल्योवाच ।

धन्याऽस्मि देवदेवेश!लब्ध्वा त्वां तनयं प्रभो !। प्रसीद मे जगन्नाथ! पुत्रस्नेहं प्र

ईश्वर उवाच ।

एवमुक्तो हृषीकेशो मात्रा सर्वगतो हरिः । मायामानुषतां प्राप्य शिशुभावाद्रुरोद
अथ प्रमुदिता देवी कौसल्या शुभलक्षणम् । पुत्रमालिङ्ग्यहर्षेणस्तन्यं प्रादात्सुम
तस्याः स्तन्यं पपौ देवो बालभावात्सनातनः । उवास मातुरुत्सङ्गे जगद्भर्ता मह
तस्मिन्दिने शुभे रम्ये सर्वकामप्रदे नृणाम् । उत्सवं चक्रिरे पौरा दृष्ट्वा जानपदा
कैकेय्यां भरतो जज्ञे पाञ्चजन्यांशसम्भवः । सुमित्रा जनयामास लक्ष्मणंशुभलक्ष
शत्रुघ्नं च महाभागा देवशत्रुप्रतापनम् । अनन्तांशेन सम्भूतो लक्ष्मणः पर
सुदर्शनांशाच्छत्रुघ्नः सञ्जज्ञेऽमितविक्रमः । ते सर्वे ववृधुस्तत्र वैवस्वतमनोः कुले
संस्कृतास्ते सुताः सम्यग्वसिष्ठेनमहौजसा । अधीतवेदास्ते सर्वेश्रुतवन्तस्तथा
सर्वशास्त्रार्थतत्त्वज्ञा धनुर्वेदे च निष्ठिताः । बभूवुः परमोदारा लोकानां हर्षवर्द्धना
युग्मं बभूवतुस्तत्र राजानौ रामलक्ष्मणौ । तथा भरतशत्रुघ्नौ पायसांशवशात्
अथ लोकेश्वरी लक्ष्मीर्जनकस्य निवेशने । शुभक्षेत्रे हलोत्खाते सुनासा सुशुभे

बालार्ककोटिसङ्काशा रक्तोत्पलकराम्बुजा ।
सर्वलक्षणसम्पन्ना सर्वाभरणभूषिता ॥ १०१ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

धृत्वा वक्षसि चार्वङ्गी मालामम्लानपङ्कजाम् । सीतामुखे समुत्पन्ना बालभावेनसुन्दरी
तां दृष्ट्वा जनको राजा कन्यां वेदमयींशुभाम् । उद्धृत्याऽपत्यभावेनपुपोषमिथिलापतिः
जनकस्य गृहे रम्ये सर्वलोकेश्वरप्रिया । ववृधे सर्वलोकस्य रक्षणार्थं सुरेश्वरी॥१०४॥
एतस्मिन्नन्तरे देवि! कौशिको लोकविश्रुतः । सिद्धाश्रमे महापुण्ये भागीरथ्यास्तटेशुभे
क्रतुप्रवरमारेभे यष्टुं तत्र महामुनिः । वर्त्तमानस्य तस्याऽस्य यज्ञस्याऽथ द्विजन्मनः॥
क्रतुविध्वंसिनोऽभूवन्रावणस्य निशाचराः । कौशिकश्चिन्तयित्वाऽथरघुवंशोद्भवंहरिम्

आनेतुमैच्छद्धर्मात्मा लोकानां हितकाम्यया ।

स गत्वा नगरीं रम्यामयोध्यां रघुपालिताम् ॥ १०८ ॥

नृपश्रेष्ठं दशरथं ददर्श मुनिसत्तमः । राजाऽपिकौशिकं दृष्ट्वा प्रत्युत्थाय कृताञ्जलिः ॥
पुत्रैः सह महातेजा ववन्दे मुनिसत्तमम् । धन्योऽहमस्मीति वदन्हर्षेण रघुनन्दनः ॥
अर्चयामास विधिना निवेश्य परमासने । परिणीय नमस्कृत्य किंकरोमीत्युवाच तम्

ततः प्रोवाच हृष्टात्मा विश्वामित्रो महातपाः ॥ ११२ ॥

विश्वामित्र उवाच ।

देहि मे राघवं राजन्रक्षणार्थं क्रतोर्मम । साफल्यमस्तु मे यज्ञे राघवस्य समीपतः ॥

तस्माद्रामं रक्षणार्थं दातुमर्हसि भूपते ! ॥ ११३ ॥

ईश्वर उवाच ।

तच्छ्रुत्वा मुनिवर्यस्य वाक्यं सर्वविदाम्वरः । प्रददौ मुनिवर्याय राघवं सह लक्ष्मणम्
आदाय राघवौ तत्र विश्वामित्रो महातपाः । स्वमाश्रममतिप्रीतः प्रययौ द्विजसत्तमः॥
ततः प्रहृष्टास्त्रिदशाः प्रयाते रघुसत्तमे !। ववृषुः पुष्पवर्षाणि तुष्टुवुश्च महौजसः ॥
अथाजगाम हृष्टात्मा वैनतेयो महाबलः । अदृश्यस्सर्वभूतानां सम्प्राप्य रघुसत्तमौ ॥

ताभ्यां दिव्ये च धनुषी तूणौ चाक्षयसायकौ ।

दिव्यान्यस्त्राणि शस्त्राणि दत्त्वा च प्रययौ द्विजः ॥ ११८ ॥

तौ रामलक्ष्मणौवीरौ कौशिकेन सहाऽध्वनि । गच्छन्तौविपिनेघोरेराक्षसींघोरदर्शनाम्
नाम्ना तु ताटकांदेवि!भार्यांसुन्दस्यरक्षसः । जघ्नतुस्तौ महावीरौबाणैर्दिव्यधनुश्च्युतैः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

निहता राघवेणाऽथ राक्षसी घोरदर्शना । त्यक्त्वा तनुं घोररूपां दिव्यरूपा बभूव ह ।
जाज्वल्यमाना वपुषा सर्वाभरणभूषिता । प्रययौ वैष्णवं लोकं प्रणम्य च रघूत्तमम् ।

तां हत्वा राघवः श्रीमान्कौशिकस्याऽऽश्रमं शुभम् ।
प्रविवेश महातेजा लक्ष्मणेन महात्मना ॥ १२३ ॥

ततः प्रहृष्टा मुनयः प्रत्युद्गम्य रघूत्तमम् । निवेश्य पूजयामासुरर्घाद्यैः परमासने ।
कौशिकः कृतदीक्षस्तु यष्टुं यज्ञमनुत्तमम् । आरेभे मुनिभिःसार्द्धं विधिना मुनिसत्तम ।
वर्त्तमाने महायज्ञे मारीचो नाम राक्षसः । भ्रात्रा सुबाहुना तत्र विघ्नं कर्तुमवाविशत् ।
दृष्ट्वा तौ राक्षसौ घोरौ राघवः परवीरहा । जघानैकेन बाणेन सुबाहुं राक्षसेश्वरम् ।
पवनास्त्रेण महता मारीचं तु निशाचरम् । सागरे पातयामास शुष्कपर्णमिवाऽनिलः ।
स रामस्य महावीर्यं दृष्ट्वा राक्षससत्तमः । न्यस्तशस्त्रस्तपस्तप्तुं प्रययौ महदाश्रमम् ।
विश्वामित्रो महातेजाः समाप्ते महति क्रतौ । प्रहृष्टमनसा तत्र पूजयामास राघवम् ।
समाश्लिष्य महात्मानं काकपक्षधरं हरिम् । नीलोत्पलदलश्यामं पद्मपत्रायतेक्षणम् ।
उपाघ्राय तदा मूर्ध्नि तुष्टाव मुनिसत्तमः । एतस्मिन्नन्तरे राजा मिथिलाया अधीश्वरः ।
वाजपेयं क्रतुं यष्टुमारेभे मुनिसत्तमैः । तं द्रष्टुं प्रययुस्सर्वे विश्वामित्रपुरोगमाः ।
मुनयो रघुशार्दूलसहिताः पुण्यचेतसः । गच्छतस्तस्य रामस्य पादाब्जेन महात्मनः ।
अभूत्सुरूपा वनिता समाक्रान्ता महाशिला । साऽपि शप्ता पुरा भर्त्रा गौतमेन द्विजन्मना ।
अहल्या रघुनाथस्यपादस्पर्शाच्छुभाभवत् । अथ सम्प्राप्यनगरीं मिथिलां मुनिसत्तमाः ।
राघवाभ्यां तु सहिता बभूवुः प्रीतमानसाः । समागतान्महाभागान्दृष्ट्वा राजा महामनाः ।
प्रत्युद्गम्य प्रणम्याऽथ पूजयामास मैथिलः । रामं पद्मविशालाक्षमिन्दीवरदलप्रभम् ।
पीताम्बरधरं श्लक्ष्णं कोमलावयवोज्ज्वलम् । अवधीरितकन्दर्पकोटिलावण्यसुन्दरम् ।
सर्वलक्षणसम्पन्नं सर्वाभरणभूषितम् । स्वस्य हृत्पङ्कजे ध्येयं परेशस्य तनोर्हि यत् ।
उत्पन्नं दीपवद्दीपात्सौशील्यगुणसागरम् । तं दृष्ट्वा रघुनाथं स जनको हृष्टमानसः ।
परेशमेव तं मेने रामं दशरथात्मजम् । पूजयामास काकुत्स्थं धन्योऽस्मीति मुहुर्मुहुः ।

प्रसादं वासुदेवस्य विष्णोर्मेने नरेश्वरः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रदातुं दुहितां तस्मै मनसा चिन्तयन्प्रभुः ॥ १४३ ॥
तज्ञौ रघुवंशस्य ज्ञात्वा तत्र नृपोत्तमः । पूजयामास धर्मेण वस्त्रैराभरणैः शुभैः॥
र्पात्समर्चयामास मधुपर्कादिपूजनैः । ततोऽवसाने यज्ञस्य रामो राजीवलोचनः ॥
भङ्क्त्वा शैवं धनुर्दिव्यं जितवाञ्जनकात्मजाम् ।
अथाऽसौ वीर्यशुल्केन महता परितोषितः ॥ १४६ ॥
धरणिजां तस्मै प्रददौ मिथिलाधिपः । केशवाय श्रियमिव यथा पूर्वं महार्णवः ॥
दूतं प्रेषयामास राघवं मिथिलाधिपः । पुत्राभ्यांसहधर्मात्मा मिथिलायां विवेश ह
सिष्ठवामदेवाद्यैः प्रीतैः सह महीपतिः । उपवास नगरे रम्ये जनकस्य रघूत्तमः ॥
स्मिन्नेव शुभे काले रामस्य धरणीसुताम् । विवाहमकरोद्राजा मैथिलेन समर्चितः
लक्ष्मणस्योर्मिलांनाम कन्यांजनकसम्भवाम् । जनकस्याऽनुजस्याऽथतनये शुभवर्चसौ
माण्डवींश्रुतकीर्तिश्च सर्वलक्षणलक्षिते । भरतस्य च सौमित्रेर्विवाहमकरोन्नृपः ॥
वर्त्यौद्वाहिकं तत्र राजा दशरथो वली । अयोध्यां प्रस्थितः श्रीमान्पौरैर्जानपदैर्वृतः
रिवहं समादाय मैथिलेन च पूजितः । ससुतः सस्नुषः साश्वः सगजः सबलानुगः॥
ध्वनि महावीर्यो जामदग्न्यः प्रतापवान् । गृहीत्वा परशुं चापं संक्रुद्धइव केसरी ॥
थावच्च काकुत्स्थं योद्धुकामो नृपान्तकः । सम्प्राप्य राघवंदृष्ट्वा वचनंप्राहभार्गवः

## परशुराम उवाच ।

रामममहाबाहो श्रृणुष्व वचनं मम । वहुशः पार्थिवान्हत्वा संयुगे भूरिविक्रमान्
ब्राह्मणेभ्यो महींदत्त्वा तपस्तप्तुमहंगतः । तव वीर्यबलं श्रुत्वा त्वयायोद्धुमिहाऽऽगतः
क्ष्वाकवो न वंध्यामे मातामहकुलोद्भवाः । वीर्यं क्षत्रवलं श्रुत्वा न शक्यं सहितुं मम
दं चापं दुराधर्षं भज्यमानं त्वया नृप !। तस्माद्वदान्य! युद्धं मे दीयतां रघुसत्तम !
रं तु वैष्णवं चापं तेन तुल्यमरिन्दम!। आरोपयस्ववीर्येण निर्जितोऽस्मि त्वयैवहि
थवा त्यज शस्त्राणि पुरस्ताद्बलिनोमम । शरणंभजकाकुत्स्थ! कातरोऽस्यपिचेदिह

## ईश्वर उवाच ।

मुक्तस्तुकाकुत्स्थो भार्गवेण प्रतापवान् । तच्चापं तस्यजग्राह तच्छक्तिंवैष्णवीमपि

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शक्त्या विमुक्तस्सतदा जामदग्न्यःप्रतापवान् । निर्वीर्यो नष्टतेजाश्च कर्महीनोऽभवत्
विनष्टतेजसं दृष्ट्वा भार्गवं नृपसत्तमाः । साधुसाध्विति काकुत्स्थं प्रशशंसुर्मुहुर्मुहुः
काकुत्स्थस्तन्महच्चापं गृहीत्वाऽऽरोप्य लीलया ।
सन्धाय बाणं तच्चापे भार्गवं प्राह विस्मितम् ॥

राम उवाच ।

अनेन शरमुख्येण किंकर्त्तव्यं मया द्विज !। छेद्मि लोकद्वयं चापि स्वर्गं वाहनिमे
ईश्वर उवाच ।

तं दृष्ट्वा घोरसङ्काशं बाणं रामस्य भार्गवः । ज्ञात्वा तं परमात्मानं प्रहृष्टो राम
परशुराम उवाच ।

रामराममहाबाहो! न वेद्मित्वां सनातनम् । जानाम्यद्यैव काकुत्स्थ! तववीर्यंगुण
त्वमादिपुरुषः साक्षात्परं ब्रह्मपरोऽव्ययः । त्वामनन्तो महाविष्णुर्वासुदेवः
नारायणस्त्वं श्रीशस्त्वमीश्वरस्त्वं त्रयीमयः ।
त्वं कालस्त्वं जगत्सर्वमकाराख्यस्त्वमेव च ॥ १७१ ॥
स्रष्टा धाता च संहर्त्ता त्वमेव परमेश्वरः ।
त्वमचिन्त्यो महद्भूतं विश्वरूपस्त्वणुर्महान् ॥ १७२ ॥
चतुः षट्पञ्चगुणवांस्त्वमेव पुरुषोत्तमः । त्वं यज्ञस्त्वं वषट्कारस्त्वमोङ्कार
व्यक्ताव्यक्तस्वरूपस्त्वं गुणभृन्निर्गुणः परः । स्तोतुं त्वाहमशक्तश्च वेदानामप
यच्चाऽपमानंकृतवांस्त्वां युयुत्सुतया प्रभो !। तत्क्षन्तव्यं त्वया नाथ! कृपया
तव शक्त्या नृपान्सर्वाञ्जित्वा दत्त्वा महीं द्विजान् ।
त्वत्प्रसादवशादेवं शान्तिमाप्नोमि नैष्ठिकीम् ॥ १७६ ॥

ईश्वर उवाच ।

एवमुक्त्वा तु काकुत्स्थं जामदग्न्यो महातपाः । परिणीय नमस्कृत्य राघवंलो
शतक्रतुकृतं स्वर्गं तदस्त्राय न्यवेदयत् । राघवोऽथ महातेजा ववन्दे तं महामु
विधिवत्पूजयामास पाद्यार्घ्याचमनादिभिः । तेन सम्पूजितस्तत्र जामदग्न्यो

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

...स्ततुं ययौ रम्यं नरनारायणाश्रमम् । राजा दशरथः सोऽथ पुत्रैर्दारसमन्वितैः ॥
...ां पुरीं सुमुहूर्त्तेन प्रविवेश महाबलः । राघवो लक्ष्मणश्चैव शत्रुघ्नो भरतस्तथा ॥
...त्स्वान्दारानुपागम्य रेमिरे हृष्टमानसाः । तत्र द्वादशवर्षाणि सीतया सह राघवः ॥
...यामास धर्मात्मा नारायणइव श्रिया । तस्मिन्नेव तु राजाऽथ काले दशरथः सुतम्
...ौवराज्येन संयोक्तुमैच्छत्प्रीत्यामहीपतिः । तस्यभार्याऽथ कैकेयी पुरा दत्तवराप्रिया
...ाचत नृपश्रेष्ठं भरतस्याऽभिषेचनम् । विवासनं च रामस्य वत्सराणि चतुर्दश ॥
...राजा सत्यवचनाद्रामं राज्यादहो सुतम् । विवासयामास तदा दुःखेन हतचेतनः ॥
...ोऽपि राघवस्तस्मिन्राज्यं सन्त्यज्य धर्मतः । दशग्रीववधार्थाय पितुर्वचनहेतुना
...ं जगाम काकुत्स्थो लक्ष्मणेनच सीतया । राजा पुत्रवियोगार्त्तः शोकेनच ममारसः

नियुज्यमानो भरतस्तस्मिन्राज्ये स मन्त्रिभिः ।
नैच्छद्राज्यं स धर्मात्मा सौभ्रात्रमनुदर्शयन् ॥ १८६ ॥

...मागम्य काकुत्स्थमयाचद्भ्रातरं ततः । रामस्तु पितुरादेशान्नैच्छद्राज्यमरिन्दमः ॥
...पादुके ददौ तस्मै भक्त्यासोऽप्यग्रहीत्तथा । रामस्य पादुके राज्यमवाप्य भरतःशुभे ।
...हं गन्धपुष्पैश्च पूजयन्कैकयीसुतः । तपश्चरणयुक्तेन तस्मिंस्तस्थौ नृपोत्तमः ॥
...दागमनं तस्य राघवस्य महात्मनः । तावद्व्रतपराः सर्वे बभूवुः पुरवासिनः ॥१६२
...वश्चित्रकूटाद्रौ भरद्वाजाश्रमे शुभे । रमयामास वैदेह्या मन्दाकिन्या जले शुभे ॥
...ाचिदङ्के वैदेह्याः शेते रामो महामनाः । ऐन्द्रिः काकस्समागम्य तस्मिन्नेव चचारह
...ष्ट्वा जानकीं तत्र कन्दर्पशरपीडितः । विददार नखैस्तीक्ष्णैः पीनोन्नतपयोधरम् ॥
...ष्ट्वा वायसं रामः कुशंजग्राह पाणिना । ब्रह्मणोऽस्त्रेण संयोज्य चिक्षेप धरणीधरः ।
...णं घोरसङ्काशं ज्वालारचितविग्रहम् । दृष्ट्वा काकः प्रदुद्राव विमुञ्चन्कातरं स्वरम्
...काकं प्रत्यनुययौ रामस्याऽस्त्रंसुदारुणम् । वायसस्त्रिषु लोकेषु बभ्राम भयपीडितः
...यत्र ययौ काकः शरणार्थी स वायसः । तत्र तत्र तदस्त्रन्तु प्रविवेश भयावहम् ॥
...ाणमिन्द्रं रुद्रं च यमं वरुणमेव च । शरणार्थी जगामाऽऽशु वायसः शस्त्रपीडितः
...ष्ट्वावायसं सर्वे रुद्राद्या देवदानवाः । न शक्ताः स्मो वयं त्रातुमिति प्राहुर्मनीषिणः



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अथ प्रोवाच भगवान्ब्रह्मा त्रिभुवनेश्वरः ॥ २०२ ॥

ब्रह्मोवाच ।

भोभोवलिभुजां श्रेष्ठ ! तमेव शरणं व्रज । सएव रक्षकः श्रीमान्सर्वेषां करुणा...
रक्षत्येव क्षमासारो वत्सलश्शरणागतान् । ईश्वरः सर्वभूतानां सौशील्यादिगुण...
रक्षिता जीवलोकस्य पितामातासखासुहृत् । शरणं व्रज देवेशं नान्यत्र शरणं...

महादेव उवाच ।

इत्युक्तस्तेन बलिभुग्ब्रह्मणा रघुनन्दनम् । उपेत्य सहसा भूमौ निपपात भय...
प्राणसंशयमापन्नं दृष्ट्वा सीताऽथ वायसम् । त्राहित्राहीति भर्तारमुवाच विनय...
पुरतः पतितं देवी धरण्यां वायसं तदा । तच्छिरःपादयोस्तस्य योजयामास...
समुत्थाप्य करेणाऽथ कृपापीयूषसागरः । ररक्ष रामो गुणवान्वायसं दयया...
तमाह वायसं रामो माभैरिति दयानिधिः । अभयन्तेप्रदास्यामि गच्छगच्छ...
प्रणम्य राघवायाऽथ सीतायैच मुहुर्मुहुः । स्वर्लोकं प्रययावाशु राघवेण च...

तत्तो रामस्तु वैदेह्या लक्ष्मणेन च धीमता ।
उवास चित्रकूटाद्रौ स्तूयमानो महर्षिभिः ॥ २१२ ॥

तस्मिन्सम्पूज्यमानस्तु भरद्वाजेन राघवः । जगामात्रेस्सुविपुलमाश्रमं रघु...
समागतं रघुवरं दृष्ट्वा मुनिवरोत्तमः । भार्यया सह धर्मात्मा प्रत्युद्गम्य मुदा...
आसने सुशुभे मुख्ये निवेश्यसह सीतया । अर्घ्यं पाद्यंतथाऽचामंवस्त्राणिविवि...
मधुपर्कं ददौ प्रीत्या भूषणं चाऽनुलेपनम् । तस्य पत्न्यनसूया तु दिव्याम्बर...
सीतायै प्रददौ प्रीत्या भूषणानि द्युमन्तिच । दिव्यान्नपानभक्ष्याद्यैर्भोजयामास...
तेन सम्पूजितस्तत्र भक्त्या परमया नृपः । उवास दिवसं तत्र प्रीत्या रामस्स...
प्रभाते विमले रामः समुत्थाय महामुनिम् । परिणीय प्रणम्याऽथ गमनायो...
अनुज्ञातस्ततस्तेन रामो राजीवलोचनः । प्रययौ दण्डकारण्यं महर्षिकुल...

तत्राऽतिभीषणं घोरं विराधं नाम राक्षसम् ।
हत्वाऽथ शरभङ्गस्य प्रविवेशाऽऽश्रमं शुभम् ॥ २२१ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स तु दृष्ट्वाऽथ काकुत्स्थं सद्यःसंक्षीणकल्मषः।
प्रययौ ब्रह्मलोकं तु गन्धर्वाप्सरसान्वितम् ॥ २२२ ॥

सुतीक्ष्णस्याऽप्यगस्त्यस्यह्यगस्त्यभ्रातुरेवच। क्रमेण प्रययौ रामस्तैश्चसंपूजितस्तथा
पञ्चवट्यां ततो रामो गोदावर्यास्तटे शुभे। उवास सुचिरं कालं सुखेन परमेण च॥
... गत्वा मुनिश्रेष्ठास्तापसा धर्मचारिणः। पूजयामासुरात्मेशं रामं राजीवलोचनम्
भयं विज्ञापयामासुस्तस्य रक्षोगणोत्थितम्।
तानाश्वास्य तु काकुत्स्थो ददौ चाऽभयदक्षिणाम् ॥ २२६ ॥

... तु सम्पूजितास्तेन स्वाश्रमान्सम्प्रपेदिरे। तस्मिन्नथोदशाब्दानि रामस्य परिनिर्ययुः
... गोदावर्यास्तटे रम्ये पञ्चवट्यां मनोरमे। कस्यचित्त्वथ कालस्य राक्षसी घोररूपिणी
रावणस्य स्वसा तत्र प्रविवेश दुरासदा। सा तु दृष्ट्वा रघुवरं कोटिकन्दर्पसन्निभम्
इन्दीवरदलश्यामं पद्मपत्रायतेक्षणम्। प्रोन्नतांसं महाबाहुं कम्बुग्रीवं महाहनुम्॥
पूर्णचन्द्रसदृशसस्मिताननपङ्कजम्। भृङ्गावलिनिभैः स्निग्धैः कुटिलैः शीर्षजैर्वृतम्॥
अरविन्दसदृशपद्महस्ततलाङ्कितम्। निष्कलङ्केन्दुसदृशनखपङ्क्तिविराजितम् ॥२३२
...धकोमलदूर्वाभं सौकुमार्यनिधिं शुभम्। पीतकौशेयवसनं सर्वाभरणभूषितम्॥
...कुमारवयसं जगन्मोहनविग्रहम्। दृष्ट्वा तं राक्षसी रामं कन्दर्पशरपीडिता॥
अब्रवीत्समुपेत्याऽथ रामं कमललोचनम् ॥ २३४ ॥

राक्षस्युवाच।

...त्वं तापसवेषेण वर्तसे दण्डकावने। आगतोऽसि किमर्थं च राक्षसानां दुरासदे
शीघ्रमाचक्ष्व तत्त्वेन नाऽनृतं वक्तुमर्हसि ॥ २३५ ॥

महेश्वर उवाच।

इत्युक्तः स तदा रामः सम्प्रहस्याऽब्रवीद्वचः ॥ २३६ ॥

राम उवाच।

...दशरथस्याऽहम्पुत्रो रामइतीरितः। असौममाऽनुजो धन्वीलक्ष्मणोनामचाऽनघः
...चेयं च मे सीता जनकस्याऽऽत्मजा प्रिया। पितुर्वचननिर्देशादहंवनमिहाऽऽगतः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विचरामो महारण्यमृषीणां हितकाम्यया । आगताऽसि किमर्थं त्वमाश्रमं मम
का त्वं कस्य कुले जाता सर्वं सत्यं वदस्व मे ॥ २३९ ॥

महेश्वर उवाच ।

इत्युक्ता सा तु रामेण प्राह वाक्यमशङ्किता ॥ २४० ॥

राक्षस्युवाच ।

अहं विश्रवसः पुत्री रावणस्य स्वसा नृप !। नाम्ना शूर्पणखानाम त्रिषुलोकेषु
इदं च दण्डकारण्यं भ्रात्रा दत्तं मम प्रभो !। भक्षयन्त्यृषिसङ्घान्वै विचरामि
त्वां तु दृष्ट्वा मुनिवरं कन्दर्पशरपीडिता । रन्तुकामात्वयासार्धमागताऽस्मि
मम त्वं नृपशार्दूल ! भर्ताभवितुमर्हसि । इमां तव सतीं सीतां भक्षयिष्यामि
वनेषु गिरिमुख्येषु विचरामि त्वया सह ॥ २४५ ॥

महेश्वर उवाच ।

इत्युक्त्वा राक्षसीं सीतां ग्रसितुं वीक्ष्य चोद्यताम् ।
श्रीरामः खड्गमुद्यम्य नासाकर्णौ प्रचिच्छिदे ॥ २४६ ॥

रुदन्ती सभयं शीघ्रं राक्षसीविकृतानना । खरालयं प्रविश्याऽऽह तस्य रामस्य
स तु राक्षससाहस्रैर्दूषणत्रिशिरोवृतः । आजगाम भृशं योद्धुं राघवं
तान्रामः कानने घोरे बाणैःकालान्तकोपमैः । निजघानमहाकायान्राक्षसांस्तान्
खरं त्रिशिरसं चैव दूषणं तु महाबलम् । रणे निपातयामास बाणैराशीविषैः
निहत्य राक्षसान्सर्वान्दण्डकारण्यवासिनः । पूजितः सुरसङ्घैश्च स्तूयमानो
उवास दण्डकारण्ये सीतया लक्ष्मणेन च । राक्षसानांवधं श्रुत्वारावणः क्रोध
आजगाम जनस्थानं मारीचेन दुरात्मना । सम्प्राप्य पञ्चवट्यां तु दशग्रीवः
मायाविना मारीचेन मृगरूपेण राक्षसः । अपहृत्याऽऽश्रमाद्दूरे तौ तु दशरथ
जहार सीतां रामस्य भार्यां स्ववधकाङ्क्षया ।
ह्रियमाणां तु तां दृष्ट्वा जटायुर्गृध्रराड्बली ॥ २५५ ॥

रामस्य सौहृदात्तत्र युयुधे तेन रक्षसा । तं हत्वा बाहुवीर्येण रावणः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विवेश पुरीं लङ्कां राक्षसैर्बहुभिर्वृताम् । अशोकवनिकामध्ये निक्षिप्य जनकात्मजाम्
तं रामबाणेन काङ्क्षन्स्वगृहमाविशत् । रामस्तु राक्षसं हत्वा मारीचं मृगरूपिणम्
प्रविश्य तत्राऽथ भ्रात्रासौमित्रिणाततः । राक्षसापहृतां भार्यांज्ञात्वा दशरथात्मजः
शोकसन्तप्तो विललाप महामतिः । मार्गमाणो वने सीतां पथि गृध्रं महाबलम् ॥
छिन्नपादपक्षं च पतितं धरणीतले । रुधिरापूर्णसर्वाङ्गं दृष्ट्वा विस्मयमागतः ॥

पप्रच्छ राघवः श्रीमान्केन किं त्वं जिघांसितः ।
गृध्रस्तु राघवं दृष्ट्वा मन्दम्मन्दमुवाच ह ॥ २६२ ॥

गृध्र उवाच ।

रावणेन हृता राम! तव भार्या बलीयसा । तेन राक्षसमुख्येन सङ्ग्रामेनिहतोऽस्म्यहम्

महेश्वर उवाच ।

उक्त्वा राघवस्याग्रे सोऽभवत्त्यक्तजीवितः । संस्कारमकरोद्रामस्तस्य ब्रह्मविधानतः
पदं च ददौ तस्मै योगिगम्यं सनातनम् । राघवस्य प्रसादेन स गृध्रः परमम्पदम्
सामान्यरूपेण मुक्तिं प्राप खगोत्तमः । माल्यवन्तं ततो गत्वामतङ्गस्याऽऽश्रमेशुभे

अभ्यगच्छन्महाभागां शबरीं धर्मचारिणीम् ।
सा तु भागवतश्रेष्ठा दृष्ट्वा तौ रामलक्ष्मणौ ॥ २६७ ॥

उद्गम्य नमस्कृत्य निवेश्यकुशविष्टरे । पादप्रक्षालनं कृत्वा वन्यैः पुष्पैः सुगन्धिभिः
र्चयामास भक्त्या वै हर्षनिर्भरमानसा । फलानि च सुगन्धीनि मूलानि मधुराणि च
निवेदयामास तदा राघवाभ्यांदृढव्रता । फलान्यास्वाद्य काकुत्स्थस्तस्यैमुक्तिंददौपराम्
क्रौञ्चवटीं गत्वा राघवः शत्रुसूदनः । जघान राक्षसं तत्र कबन्धं घोररूपिणम् ॥
निहत्य महावीर्यो ददाह स्वर्गतश्च सः । ततो गोदावरीं गत्वा रामो राजीवलोचनः

पप्रच्छ सीतां गङ्गे ! त्वं किं तां जानासि मे प्रियाम् ।
न शशंस तदा तस्मै सा गङ्गा तमसावृता ॥ २७३ ॥

शाप राघवः क्रोधाद्रक्ततोया भवेति ताम् । ततो भयात्समुद्विग्ना पुरस्कृत्यमहामुनीन्
प्राञ्जलिपुटा दीना राघवं शरणं गता । ततो महर्षयस्सर्वे रामं प्राहुस्सनातनम् ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ऋषयऊचुः ।

त्वत्पादकमलोद्भूता गङ्गात्रैलोक्यपावनी । त्वमेव हि जगन्नाथ तां शापान्मोक्तुमर्हसि

महेश्वर उवाच ।

ततः प्रोवाच धर्मात्मा रामः शरणवत्सलः ॥ २७७ ॥

राम उवाच ।

शवर्याः स्नानमात्रेण संगता शुभवारिणा । मुक्ता भवतु मच्छापाद्गङ्गेयं पापनाशिनी
एवमुक्त्वा तु काकुत्स्थः शवरीतीर्थमुत्तमम् । गङ्गया सङ्गतं चक्रे शार्ङ्गकोट्याम...
महाभागवतानां च तीर्थं यस्योदरेऽभवत् । तच्छरीरं जगद्वन्द्यंभविष्यति न सं...
एवमुक्त्वा तु काकुत्स्थ ऋष्यमूकं गिरिं ययौ । ततः पम्पासरस्तीरे वानरेण ह...
संगतस्तस्य वचनात्सुग्रीवेण समागतः । सुग्रीववचनाद्धत्वा वालिनं वानरे...
सुग्रीवमेव तद्राज्ये रामोऽसावभ्यषेचयत् । स तु सम्प्रेषयामासदिदृक्षुर्जनका...
हनुमत्प्रमुखान्वीरान्वानरान्वानराधिपः । स लङ्घयित्वा जलधिं हनूमान्मारुता...
प्रविश्य नगरीं लङ्कां दृष्ट्वा सीतां दृढव्रताम् । उपवासकृशांदीनांभृशंशोकपरा...
मलपङ्केनदिग्धाङ्गीं मलिनाम्बरधारिणीम् । निवेदयित्वाऽभिज्ञानं प्रवृत्तिंच निवे...
सप्तमन्त्रिसुतांस्तत्र रावणस्य सुतन्तथा । तोरणस्तम्भमुत्पाट्य निजघान स्वयं...
समाश्वास्यच वैदेहीं बभञ्जोपवनं तदा । वनपालान्किङ्करांश्च पञ्चसेनाग्रनायका...
रावणस्य सुतेनाऽथ निगृहीतो यदृच्छया । दृष्ट्वा च राक्षसेन्द्रन्तु सम्भाष्य तु...
ददाह नगरीं लङ्कां स्वलाङ्गूलाग्निना कपिः । तया दत्तमभिज्ञानं गृहीत्वा पुन...
सोऽभिगम्य महातेजा रामं कमललोचनम् । न्यवेदयद्वानरेन्द्रो दृष्टा सीतेति त...
सुग्रीवसहितो रामो वानरैर्बहुभिर्वृतः । महोदधेस्तटं गत्वा तत्राऽनीकं न्यवे...
रावणस्याऽनुजो भ्राता विभीषणइतीरितः । धर्मात्मा सत्यसन्धश्च महाभाग...
ज्ञात्वा समागतं रामं परित्यज्य स्वपूर्वजम् । राज्यं सुतांश्चदारांश्च राघवं शरण...
परिगृह्य च तं रामो मारुतेर्वचनात्प्रभुः । तस्मैदत्त्वाऽभयंसौम्यं रक्षोराज्येऽभ्य...
ततस्समुद्रं काकुत्स्थस्तर्तुकामः प्रपद्य वै । सुप्रसन्नजलं तं तु दृष्ट्वा रामो म...

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शार्ङ्गमादायबाणोघैः शोषयामास वारिधिम् ।
ततस्तु सरितामीशः काकुत्स्थं करुणानिधिम् ॥ २९७ ॥
[illegible] शरणं देवमर्चयामास वारिधिः । पुनरापूर्य जलधिं वरुणास्त्रेण राघवः ॥२९८॥
[illegible]र्वचनात्सेतुं सागरे मकरालये । गिरिभिर्वानरानीतैर्नलं सेतुमकारयत् ॥२९९॥
[illegible]तो गत्वा पुरींलङ्कां सन्निवेश्य महाबलम् । सम्यगायोधनं चक्रे वानराणांचरक्षसाम्
[illegible] दशास्यतनयः शक्रजिद्राक्षसो बली । बबन्ध नागपाशैश्च तावुभौ रामलक्ष्मणौ॥
[illegible]तेयः समागत्य तान्यस्त्राणि प्रमोचयत् । राक्षसा निहतास्सर्वे वानरैश्च महाबलैः॥
[illegible]वणस्याऽनुजं वीरं कुम्भकर्णं महाबलम् । निजघान रणे रामो बाणैरग्निशिखोपमैः
[illegible]ास्त्रेणेन्द्रजित्क्रुद्धः पातयामास वानरान् । हनूमता समानीतो महौषधिमहीधरः ॥
[illegible]ानीतस्य च स्पर्शात्सर्वएव समुत्थिताः । ततो रामानुजो वीरः शक्रजेतारमाहवे
[illegible]पातयामास शरैर्वृत्रं वज्रधरो यथा । निर्ययावथ पौलस्त्यो योद्धं रामेण संयुगे ॥
[illegible]तुरङ्गबलैः सार्द्धं मन्त्रिभिश्च महाबलः । समन्ततोऽभवद्युद्धं वानराणांच रक्षसाम् ॥
[illegible]रावणयोश्चैव तथा सौमित्रिणा सह । शक्त्या निपातयामास लक्ष्मणं राक्षसेश्वरः
[illegible]क्रुद्धो महातेजा राघवो राक्षसान्तकः । जघान राक्षसान्वीराञ्छरैः कालान्तकोपमैः
[illegible]र्बाणसाहस्रैः कालदण्डोपमैर्भृशम् । छादयामास काकुत्स्थो दशग्रीवंचराक्षसम्
[illegible]तु निर्भिन्नसर्वाङ्गो राघवास्त्रैर्निशाचरः । भयात्प्रदुद्राव रणाल्लङ्कांप्रतिनिशाचरः
[illegible]दाममयं पश्यन्निर्वेदाद्गृहमाविशत् । ततो हनूमता नीतो महौषधिमहागिरिः ॥
[illegible] रामानुजस्तूर्णं लब्धसञ्ज्ञोऽभवत्तदा । दशग्रीवस्ततो होममारेभे जयकाङ्क्षया ॥
[illegible]सितं वानरेन्द्रैस्तदभिचारात्मकं रिपोः । पुनर्युद्धाय पौलस्त्यो रामेण सह निर्ययौ
[illegible] स्यन्दनमारुह्य राक्षसैर्बहुभिर्युतः । ततः शतमखो दिव्यं रथं हर्यश्वसंयुतम् ॥
[illegible]ाय ससूतं हि प्रेषयामास बुद्धिमान् । रथं मातलिनाऽऽनीतं समारुह्य रघूत्तमः ॥
[illegible]मानःसुरगणैर्युयुधे तेन रक्षसा । ततो युद्धमभूद्घोरं रामरावणयोर्महत् ॥ ३१७ ॥
[illegible]ाहिकमहोरात्रं शस्त्रास्त्रैरतिभीषणम् । विमानस्थाः सुरास्सर्वे ददृशुस्तत्र संयुगम्
[illegible]ग्रीवस्य चिच्छेद शिरांसि रघुसत्तमः । समुत्थितानि बहुशो वरदानात्कपर्दिनः ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ब्राह्ममस्त्रं महारौद्रं वधायाऽस्य दुरात्मनः । ससर्ज राघवस्तूर्णं कालाग्निसदृश
तदस्त्रं राघवोत्सृष्टंरावणस्य स्तनान्तरम् । विदार्य धरणीं भित्त्वा रसातलतले
सम्पूज्यमानं भुजगैराघवस्य करं ययौ । सगतासुर्महादैत्यः पपात च ममार
ततोदेवगणास्सर्वे हर्षनिर्भरमानसाः । ववृषुः पुष्पवर्षाणि महात्मनि जगद्गु
जगुर्गन्धर्वपतयो ननृतुश्चाऽप्सरोगणाः । ववुः पुण्यास्तथा वाताः सुप्रभोऽभूद्दि
तुष्टुवुर्मुनयः सिद्धा देवगन्धर्वकिन्नराः । लङ्कायां राक्षसश्रेष्ठमभिषिच्य विभीष
कृतकृत्यमिवाऽऽत्मानं मेने रघुकुलोत्तमः । रामस्तत्राऽब्रवीद्वाक्यमभिषिच्यविभ

राम उवाच ।

यावच्चन्द्रश्च सूर्यश्च यावत्तिष्ठति मेदिनी । यावन्मम कथा लोके तावद्राज्यं
गत्वा मम पदं दिव्यं योगिगम्यं सनातनम् । सपुत्रपौत्रः सगणः सम्प्राप्नुहि

ईश्वर उवाच ।

एवं दत्त्वा वरं तस्मै राक्षसाय महाबलः । सम्प्राप्य मैथिलीं तत्र परुषं
उवाच राघवः सीतां गर्हितं वचनं बहु । सा तेन गर्हितासाध्वी विवेश ज्वलनं
ततो देवगणास्सर्वे शिवब्रह्मपुरोगमाः । दृष्ट्वा तु मातरं वह्नौ प्रविशन्तीं भया
समागम्य रघुश्रेष्ठं सर्वे प्राञ्जलयोऽब्रुवन् ॥ २२१ ॥

देवाऊचुः ।

राम ! राम ! महाबाहो ! शृणु त्वं चाऽतिविक्रम ! ।
सीताऽतिविमला साध्वी तव नित्याऽनपायिनी ॥ २२२ ॥

अनन्या हि त्वया सा तु भास्करेण प्रभायथा । सेयं लोकहितार्थाय समुत्पन्ना
माता सर्वस्य जगतः समस्तजगदाश्रया । रावणः कुम्भकर्णश्च भृत्यौ पूर्वपर
शापात्तौ सनकादीनां समुत्पन्नौ महीतले । तयोर्विमुक्तये वैदेही गृहीता दण्ड
तावुभौ वै वधं प्राप्तौ त्वया राक्षसपुङ्गवौ । तौ विमुक्तौ दिवं यातौ पुत्रपौत्र
त्वं विष्णुस्त्वं परं ब्रह्म योगिध्येयः सनातनः । त्वमेव सर्वदेवानामनादिनिधनो
त्वं हि नारायणः श्रीमान्सीता लक्ष्मीःसनातनी ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

माता सा सर्वलोकानां पिता त्वं परमेश्वर !॥ ३३८ ॥

सैवैषा जगन्माता तव नित्याऽनपायिनी । यथा सर्वगतस्त्वं हि तथा चेयं रघूत्तम!

तस्माच्छुद्धसमाचारां सीतां साध्वीं दृढव्रताम् ।

गृहाण सौम्य ! काकुत्स्थ ! क्षीराब्धेरिव माचिरम् ॥ ३४० ॥

ईश्वर उवाच ।

तस्मिन्नन्तरे तत्र लोकसाक्षी स पावकः । आदाय सीतां रामाय प्रददौ सुरसन्निधौ

अब्रवीत्तत्र काकुत्स्थं वह्निः सर्वशरीरगः ॥ ३४१ ॥

वह्निरुवाच ।

विशुद्धसमाचारा सीता निष्कल्मषा विभो !। गृहाण माचिरं राम! सत्यं सत्यं तवाब्रवम्

ईश्वर उवाच ।

ततोऽग्निवचनात्सीतां परिगृह्य रघूद्वहः । बभूव रामः संहृष्टः पूज्यमानः सुरोत्तमैः ॥

राक्षसैर्निहता ये तु सङ्ग्रामे वानरोत्तमाः । पितामहवरात्तूर्णं जीवमानाः समुत्थिताः

ततस्तु पुष्पकं नाम विमानं सूर्यसन्निभम् । भ्रात्रा गृहीतं सङ्ग्रामे कौवेरं राक्षसेश्वरः

राघवाय प्रददौ वस्त्राण्याभरणानि च । तेन सम्पूजितः श्रीमान्रामचन्द्रः प्रतापवान्

आरुरोह विमानाग्र्यं वैदेह्या भार्यया सह । लक्ष्मणेन च शूरेण भ्रात्रा दशरथात्मजः ॥

ऋक्षवानरसङ्घातैः सुग्रीवेण महात्मना । विभीषणेन शूरेण राक्षसैश्च महाबलैः ॥३४८

यथा विमाने वैकुण्ठे नित्यमुक्तैर्महात्मभिः । तथा सर्वैः समारुह्य ऋक्षवानरराक्षसैः ॥

अयोध्यांप्रस्थितो रामःस्तूयमानः सुरोत्तमैः । भरद्वाजाश्रमंगत्वा रामः सत्यपराक्रमः

भरतस्याऽन्तिकेतत्र हनूमन्तं व्यसर्जयत् । स निषादालयं गत्वागुहं दृष्ट्वाऽथ वैष्णवम्

रामागमनं तस्मै प्राह वानरपुङ्गवः । नन्दिग्रामं ततो गत्वा दृष्ट्वा तं राघवानुजम् ॥

न्यवेदयत्तथा तस्मै रामस्याऽऽगमनोत्सवम् । भरतश्चाऽऽगतं श्रुत्वा वानरेण रघूत्तमम्

हर्षमतुलं लेभे सानुजः ससुहृज्जनः । पुनरागत्य काकुत्स्थं हनूमान्मारुतात्मजः ॥

सर्वं शशंस रामाय भरतस्य च वर्तनम् । राघवस्तु विमानाग्र्यादवरुह्य सहाऽनुजः ॥

ववन्दे भार्यया सार्द्धं भरद्वाजं तपोनिधिम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स तु सम्पूजयामास काकुत्स्थं सानुजं मुनिः ॥ ३५६ ॥

पक्वान्नैः फलमूलाद्यैर्वस्त्रैराभरणैरपि । तेन सम्पूजितस्तत्र प्रणम्य मुनिसत्तमम् ॥ अनुज्ञातः समारुह्य पुष्पकं सानुगस्तदा । नन्दिग्रामं ययौ रामः पुष्पकेण सुहृद्वृ मन्त्रिभिः पौरमुख्यैश्च सानुजः केकयीसुतः । प्रत्युद्ययौ नृपवरैः सबलैः पूर्वजं मु सम्प्राप्य रघुशार्दूलं ववन्दे सोऽनुगैर्वृतः । पुष्पकादवरुह्याऽथ राघवः शत्रुताप भरतं चैव शत्रुघ्नमुपसम्परिषस्वजे । पुरोहितं वसिष्ठं च मातृवृद्धांश्च बान्धव प्रणनाम महातेजाः सीतया लक्ष्मणेनच । विभीषणंच सुग्रीवं जाम्बवन्तं तथाऽङ्ग हनुमन्तं सुषेणं च भरतःपरिषस्वजे । भ्रातृभिः सानुगैस्तत्र मङ्गलस्नानपूर्व दिव्यमाल्याम्बरधरो दिव्यगन्धानुलेपनः । आरुरोह रथं दिव्यं सुमन्त्राधिष्ठितं संस्तूयमानस्त्रिदशैर्वैदेह्या लक्ष्मणेन च । भरतश्चैव सुग्रीवः शत्रुघ्नश्च विभी अङ्गदश्च सुषेणश्च जाम्बवान्मारुतात्मजः । नीलो नलश्च सुभगः शरभो गन्धमाद

अन्ये च कपयः शूरा निषादाधिपतिर्गुहः ।
राक्षसाश्च महावीर्याः पार्थिवेन्द्रा महाबलाः ॥ ३६७ ॥
गजानश्वान्रथान्सम्यगारुह्य बहुशः शुभान् ।
नानामङ्गलवादित्रैः स्तुतिभिः पुष्कलैस्तथा ॥ ३६८ ॥

ऋक्षवानररक्षोभिर्निषादवरसैनिकैः । प्रविवेश महातेजाः साकेतं पुरमव्ययम् ॥

आलोक्य राजनगरीं पथि राजपुत्रो राजानमेव पितरं परिचिन्तयान
सुग्रीवमारुतिविभीषणपुण्यपादसञ्चारपूतभवनं प्रविवेश रामः ॥ ३

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे उमामहे सम्वादे रामस्याऽयोध्याप्रवेशो नाम द्विचत्वारिंशदधिकद्विशततमोऽध्यायः ॥

---

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# त्रिचत्वारिंशदधिकद्विशततमोऽध्यायः

## रामाभिषेचनपूर्वकंरामदर्शनार्थसमहेश्वरंसुराणामागमनं विश्वरूपदर्शनं-शिवकृतासीतारामस्तुतिस्तत्फलवर्णनञ्च

शङ्कर उवाच।

अथ तस्मिन्दिने पुण्ये शुभलग्ने शुभान्विते। राघवस्याऽभिषेकार्थं मङ्गलं चक्रिरेजनाः
वसिष्ठो वामदेवश्च जावालिरथ कश्यपः। मार्कण्डेयश्च मौद्गल्यः पर्वतो नारदस्तथा॥
एते महर्षयस्तत्र जपहोमपुरस्सरम्। अभिषेकं शुभं चक्रुर्मुनयो राजसत्तमम्॥ ३ ॥
नानारत्नमये दिव्ये हेमपीठे शुभान्विते। निवेश्य सीतया सार्द्धं श्रिया इव जनार्दनम्
सौवर्णकलशैर्दिव्यैर्नानारत्नमयैः शुभैः। सर्वतीर्थोदकैः पुण्यैर्माङ्गल्यद्रव्यसंयुतैः॥ ५॥
दूर्वाग्रतुलसीपत्रपुष्पगन्धसमन्वितैः। मन्त्रपूतजलैः शुद्धैर्मुनयः संशितव्रताः॥ ६ ॥
जपन्वैष्णवान्सूक्तांश्चतुर्वेदमयाञ्छुभान्। अभिषेकंशुभं चक्रुः काकुत्स्थं जगताम्पतिम्
तस्मिञ्छुभतमे लग्ने देवदुन्दुभयो दिवि। विनेदुः पुष्पवर्षाणि ववृषुश्च समन्ततः॥८
दिव्याम्बरैर्भूषणैश्च दिव्यगन्धानुलेपनैः। पुष्पैर्नानाविधैर्दिव्यैर्देव्या सह रघूद्वहः॥९॥
अलङ्कृतश्च शुशुभे मुनिभिर्वेदपारगैः। छत्रं च चामरं दिव्यं धृतवाँल्लक्ष्मणस्तदा॥
पार्श्वे भरतशत्रुघ्नौ तालवृन्तौ विवीजतुः। दर्पणं प्रददौ श्रीमान्राक्षसेन्द्रो विभीषणः॥
धार पूर्णकलशं सुग्रीवो वानरेश्वरः। जाम्बवांश्च महातेजाः पुष्पमालां मनोहराम्॥
वालिपुत्रस्तु ताम्बूलं सकर्पूरं ददौ हरेः। हनुमान्दीपिकांदिव्यां सुषेणश्च ध्वजं शुभम्
परिवार्य महात्मानं मन्त्रिणः समुपासत। सृष्टिर्जयन्तो विजयः सौराष्ट्रो राष्ट्रवर्द्धनः
अकोपोधर्मपालश्च सुमन्त्रो मन्त्रिणः स्मृताः। राजानश्च नरव्याघ्रा नानाजनपदेश्वराः
पौराश्चनैगमा वृद्धा राजानं पर्युपासत। ऋक्षैश्च वानरेन्द्रैश्च मन्त्रिभिः पृथिवीश्वरैः॥
राक्षसैर्द्विजमुख्यैश्च किङ्करैश्च समावृतः। परे व्योम्नि यथा लीनो दैवतैः कमलापतिः॥
तथा नृपवरः श्रीमान्साकेते शुशुभे तदा। इन्दीवरदलश्यामं पद्मपत्रनिभेक्षणम्॥१८॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

आजानुबाहुं काकुत्स्थं पीतवस्त्रधरं हरिम् । कम्बुग्रीवं महोरस्कं विचित्राभरणै
देव्या सह समासीनमभिषिक्तं रघूत्तमम् । विमानस्थाः सुरगणा हर्षनिर्भरमानस
तुष्टुवुर्जयशब्देन गन्धर्वाप्सरसां गणाः । अभिषिक्तस्ततो रामो वसिष्ठाद्यैर्महर्षि
शुशुभे सीतया देव्या नारायण इव श्रिया । अतिमर्त्यतया रूपमुपमातीतमुल
दृष्ट्वा तुष्टाव हृष्टात्मा शङ्करो हृष्टमानसः । कृताञ्जलिपुटो भूत्वा सानन्दो गद्गद

हर्षयन्सकलान्देवान्मुनीनपि च वानरान् ॥ २३ ॥

महादेव उवाच ।

नमो मूलप्रकृतये नित्याय परमात्मने । सच्चिदानन्दरूपाय विश्वरूपाय वेधसे
नमो निरन्तरानन्दकन्दमूलाय विष्णवे । जगत्त्रयकृतानन्दमूर्त्तये दिव्यमूर्त्तये ।
नमो ब्रह्मेन्द्रपूज्याय शङ्कराभयदाय च । नमो विष्णुस्वरूपाय सर्वरूप नमो नम
उत्पत्तिस्थितिसंहारकारिणे त्रिगुणात्मने । नमोऽस्तु निर्गतोपाधिस्वरूपाय
अनया विद्यया देव्या सीतयोपाधिकारिणे । नमः पुम्प्रकृतिभ्यां च युवाभ्यां जग
जगन्मातापितृभ्यां च जनन्यै राघवाय च । नमः प्रपञ्चरूपिण्यै निष्प्रपञ्चस्वरू
नमो ध्यानस्वरूपिण्यै योगिध्येयात्ममूर्त्तये । परिणामापरीणामरिक्ताभ्यां च

कूटस्थबीजरूपिण्यै सीतायै राघवाय च ।
सीता लक्ष्मीर्भवान्विष्णुः सीता गौरी भवाञ्छिवः ॥ ३१ ॥
सीता स्वयं हि सावित्री भवान्ब्रह्मा चतुर्मुखः ।
सीता शची भवाञ्छक्रः सीता स्वाहाऽनलो भवान् ॥ ३२ ॥

सीता संहारिणीदेवी यमरूपधरो भवान् । सीता हि सर्वसम्पत्तिः कुबेरस्त्वं
सीतादेवी च रुद्राणी भवान्रुद्रोमहाबलः । सीता तु रोहिणीदेवीचन्द्रस्त्वंलोक

सीता संज्ञा भवान्सूर्यः सीता रात्रिर्दिवा भवान् ।
सीता देवी महाकाली महाकालो भवान्सदा ॥ ३५ ॥

स्त्रीलिङ्गं तु त्रिलोकेषु यत्तत्सर्वं हि जानकी । पुन्नामलाञ्छितं यत्तु तत्सर्वं हि भ
सर्वत्र सर्वदेवेश! सीता सर्वत्रधारिणी । तदा त्वमपि च त्रातुं तच्छक्तिर्विश्व

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

[त]स्मात्कोटिगुणंपुण्यंयुवाभ्यांपरिचिह्नितम् । चिह्नितंशिवशक्तिभ्यांचरितंतव शान्तिदम्
[भ]वांराम! जगत्पूज्यौमम पूज्यौसदायुवाम् । त्वन्नामजापिनीगौरीत्वन्मन्त्रजपवानहम्
[मु]मूर्षोर्मणिकर्ण्यां तु अर्द्धोदकनिवासिनः । अहं दिशामि ते मन्त्रं तारकं ब्रह्मदायकम्
[अ]तस्त्वंजानकीनाथपरंब्रह्माऽसिनिश्चितम् । त्वन्मायामोहितास्सर्वेनत्वांजानन्तितत्त्वतः

ईश्वर उवाच ।

[इ]त्युक्तः शम्भुना रामः प्रसादप्रवणोऽभवत् । दिव्यरूपधरः श्रीमानद्भुताद्भुतदर्शनः ॥
[त]ं तथा रूपमालोक्य नरवानरदेवताः । न द्रष्टुमपि शक्तास्ते तेजसा महदद्भुतम् ॥४३॥
[भ]याद्वै त्रिदशश्रेष्ठाः प्रणेमुश्चाऽतिभक्तितः । भीता विज्ञाय रामोऽपि नरवानरदेवताः ॥
मायामानुषतां प्राप्य स देवानब्रवीत्पुनः ॥ ४४ ॥

रामचन्द्र उवाच ।

[शृ]णुध्वं देवता यो मां प्रत्यहंस्तोष्यतेबुधः । स्तवेन शम्भुनोक्तेन देवतुल्यो भवेन्नरः ॥
विमुक्तः सर्वपापेभ्यो मत्स्वरूपं समश्नुते । रणे जयमवाप्नोति न क्वचित्प्रतिहन्यते ॥
भूतवेतालकृत्याभिर्ग्रहैश्चाऽपि न बाध्यते । अपुत्रो लभते पुत्रं पतिं विन्दति कन्यका ॥
दरिद्रः श्रियमाप्नोतिसत्त्ववाञ्छीलवान्भवेत् । आत्मतुल्यबलःश्रीमाञ्जायतेनाऽत्रसंशयः
निर्विघ्नं सर्वकार्येषु सर्वारम्भेषु वै नृणाम् । यं यं कामयते मर्त्यः सुदुर्लभमनोरथम्
षण्मासात्सिद्धिमाप्नोति स्तवस्याऽस्य प्रसादतः । यत्पुण्यंसर्वतीर्थेषुसर्वयज्ञेषुयत्फलम्
तत्फलं कोटिगुणितं स्तवेनाऽनेन लभ्यते ॥ ५० ॥

ईश्वर उवाच ।

[इ]त्युक्त्वारामचन्द्रोऽसौविससर्जमहेश्वरम् । ब्रह्मादित्रिदशान्सर्वान्विससर्जसमागतान्
अर्चिता मानवाः सर्वे ऋक्षवानरदेवताः । विसृष्टा रामचन्द्रेण प्रीत्या परमया युताः ॥
इत्थं विसृष्टाः खलु ते च सर्वे स्वं स्वं पदं जग्मुरतीवहृष्टाः ।
परं पठन्तः स्तवमीश्वरोक्तं रामं स्मरन्तो वरविश्वरूपम् ॥ ५३ ॥

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे उमामहेश्वर-सम्वादे विश्वदर्शनं नाम त्रिचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४३ ॥

---

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

## चतुश्चत्वारिंशदधिकद्विशततमोऽध्यायः

उत्तररामचरिते गर्भवत्याःसीतायाःजनापवादभीत्यावाल्मीकेराश्रमे निम... कालेनसमयोलक्ष्मणद्वाराद्वाररक्षणं दुर्वाससआगमनमेकान्तेदुर्वासःक्षमाप... सूचनालक्ष्मणस्यदिव्यदेहधारणं रामस्यजनैःसहदिव्यधामपदार्पणम्

शङ्कर उवाच ।

अथ रामस्तु वैदेह्या राज्यभोगान्मनोरमान् । बुभुजे वर्षसाहस्रं पालयन्सर्वतो ... अन्तःपुरजनास्सर्वे राक्षसस्यगृहेस्थिताम् । गर्हयन्तिस्म वैदेहीं तथा जानपदा ... लोकापवादभीत्या च रामः शत्रुनिवारकः । दर्शयन्मानुषं धर्ममन्तर्वत्नीं नृपात्म... वाल्मीकेराश्रमे पुण्ये गङ्गातीरे महावने । विससर्ज महातेजा गर्भिणीं मुनिसं... सा भर्तुः परतन्त्रा हि उवास मुनिवेश्मनि । अर्चिता मुनिपत्नीभिर्वाल्मीकिमुनि... तत्रैवाऽसूत यमलौ नाम्ना कुशलवौ सुतौ । तौ च तत्रैव मुनिना ववृधाते सुसं... रामोऽपि भ्रातृभिस्सार्द्धं पालयामासमेदिनीम् । यमादिगुणसम्पन्नस्सर्वभोगवि... अर्चयन्सततं विष्णुमनादिनिधनं हरिम् । ब्रह्मचर्यपरो नित्यं शशास पृथिवीं ... शत्रुघ्नो लवणं हत्वा मथुरां देवनिर्मिताम् । पालयामास धर्मात्मा पुत्राभ्यां सह...

गन्धर्वान्भरतो हत्वा सिन्धोरुभयपार्श्वतः ।
स्वात्मजौ स्थापयामास तस्मिन्देशे महाबलौ ॥ १० ॥

पश्चिमे मद्रदेशे तु मद्रान्हत्वा च लक्ष्मणः । स्वसुतौ च महावीर्यावभिषिच्य म... गत्वा पुनरयोध्यां तु रामपादावुपास्पृशत् । ब्राह्मणस्य मृतं बालं कालधर्ममुप... जीवयामास काकुत्स्थः शूद्रं हत्वा चतापसम् । ततस्तु गौतमीतीरे नैमिषेऽजम... इयाज वाजिमेधेन राघवः परवीरहा । काञ्चनीं जानकीं कृत्वा तया सार्द्धं मह... चकार यज्ञान्बहुशो राघवः परमार्थवित् । अयुतान्यश्वमेधानि वाजपेयानि च ...

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अग्निष्टोमं विश्वजितं गोमेधं वैष्णवं क्रतुम् । चकार विविधान्यज्ञान्परिपूर्णान्सदक्षिणान्
तस्मिन्नन्तरे तत्र वाल्मीकिः सुमहातपाः । सीतामानीय काकुत्स्थमिदं वचनमब्रवीत्

वाल्मीकिरुवाच ।

पापां मैथिलीं राम त्यक्तुं नाऽर्हसि सुव्रत ! । इयं तु विरजाः साध्वी भास्करस्य प्रभा यथा
अनन्या तव काकुत्स्थ कस्मात्त्यक्ता त्वयाऽनघ ! ॥ १८ ॥

राम उवाच ।

पापां मैथिलीं ब्रह्मञ्जानामि वचनात्तव । रावणेन हृता साध्वी दण्डके विजने पुरा ॥
हत्वा समरे सीतां शुद्धामग्निमुखागताम् । पुनर्यातोऽस्म्ययोध्यायां सीतामादाय धर्मतः
लोकापवादः सुमहानभूत्पौरजनेषु च । त्यक्ता मया शुभाचारा तद्भयात्तव सन्निधौ ॥
तस्माल्लोकस्य सन्तुष्ट्यै सीता मम परायणा ।
पार्थिवानां महर्षीणां प्रत्ययं कर्तुमर्हति ॥ २२ ॥

महेश्वर उवाच ।

एवमुक्ता तदा सीता मुनिपार्थिवसंसदि । चकार प्रत्ययं देवी लोकाश्चर्यकरं सती ॥
पर्यन्त्यस्य लोकस्य रामस्याऽनन्यतां सती । अब्रवीत्प्राञ्जलिः सीता सर्वेषां जनसंसदि

सीतोवाच ।

यथाऽहं राघवादन्यं मनसाऽपि न चिन्तये । तथा मे धरणी देवी विवरं दातुमर्हति ॥
मनसा कर्मणा वाचा यथा रामं समर्चये । तथा मे धरणी देवी विवरं दातुमर्हति ॥२६
यथैव सत्यमुक्तं मे वेद्मि रामात्परं न च । तथा मे धरणी देवी विवरं दातुमर्हति ॥२७॥

महेश्वर उवाच ।

एवं शपन्त्यां वैदेह्यां धरणी सहसाऽभिनत् ॥ २८ ॥
ततो रत्नमयं पीठं पृष्ठे धृत्वा खगेश्वरः । रसातलादाविरभूद्विस्मयं जनयन्नृणाम् ॥२९
तत्रस्तु धरणीदेवीहस्ताभ्यां गृह्य मैथिलीम् । स्वागतेनाऽभिनन्द्यैनामासने संन्यवेशयत्
तामासनगतां दृष्ट्वा दिवि देवगणा भृशम् । पुष्पवृष्टिमविच्छिन्नां दिव्यां सीतामवाऽकिरन्
साऽपि दिव्याप्सरोभिस्तु पूज्यमाना सनातनी ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वैनतेयं समारुह्य तस्मान्मार्गाद्दिवं ययौ ॥ ३२ ॥

दासीगणैः पूर्वभागे सम्वृता जगदीश्वरी । सम्प्राप परमं धाम योगिगम्यं सन

रसातलप्रविष्टां तु तां दृष्ट्वा सर्वमानुषाः । साध्वीसाध्वीतिसीतेयमुच्चैःसर्वे प्र

रामः शोकसमाविष्टः संगृह्य तनयावुभौ । मुनिभिः पार्थिवेन्द्रैश्च साकेतं प्रविवे

अथ कालेन महता मातरः संशितव्रताः । कालधर्मं समापन्ना भर्त्रा स्वर्गं प्रपेदि

दशवर्षसहस्राणि दशवर्षशतानि च । चकार राज्यं धर्मेण राघवः संशितव्रतः

कस्यचित्त्वथ कालस्य राघवस्यनिवेशनम् । कालस्तापसरूपेण सम्प्राप्तोवाक्य

काल उवाच ।

रामराममहाबाहो!धात्रा सम्प्रेषितोऽस्म्यहम् । यद्ब्रवीमि रघुश्रेष्ठ! तच्छृणुष्व

द्वन्द्वमेवहि कार्यं स्यादावयोःपरिभाषितम् । तदन्तरे प्रविष्टो यस्स वध्योहि भ

महेश्वर उवाच ।

तथेति च प्रतिश्रुत्य रामो राजीवलोचनः । द्वाःस्थं कृत्वा तुसौमित्रिं कालेन

वैवस्वतोऽब्रवीद्वाक्यं रामं दशरथात्मजम् ॥ ४१ ॥

काल उवाच ।

शृणु राम! यथावृत्तं ममाऽऽगमनकारणम् । दशवर्षसहस्राणि दशवर्षशतानि

वसाऽस्मिन्मानुषे लोके हत्वा राक्षसपुङ्गवान् । एवमुक्तः सुरगणैरवतीर्णोऽसि

तदयं समयः प्राप्तःस्वर्लोकं गमितुं त्वया । सनाथाहि सुराःसर्वे भवन्त्वद्यत्व

महेश्वर उवाच ।

एवमस्त्वित्वति काकुत्स्थो रामःप्राह महाभुजः । एतस्मिन्नन्तरे तत्रदुर्वासास्तु

राजद्वारमुपागम्य लक्ष्मणं वाक्यमब्रवीत् ॥ ४५ ॥

दुर्वासा उवाच ।

मां निवेदय काकुत्स्थं शीघ्रं गत्वा नृपात्मज ! ॥ ४६ ॥

महेश्वर उवाच ।

तमब्रवील्लक्ष्मणस्तु असांनिध्यमितिद्विज !। ततः क्रोधसमाविष्टः प्राह तं मुनि

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दुर्वासा उवाच ।

शापं दास्यामि काकुत्स्थं रामं न यदि दर्शये: ॥ ४८ ॥

महेश्वर उवाच ।

...च्छापभयाद्विप्रं राघवाय न्यवेदयत् । तत्रैवाऽन्तर्दधे कालः सर्वभूतभयावहः॥४६

...यामास तं प्राप्तमृषिं दुर्वाससं नृपः । अग्रजस्य प्रतिज्ञां तु विज्ञाय रघुसत्तमः ॥

...ज मानुषं रूपं लक्ष्मणः सरयूजले । विसृज्य मानुषं रूपं प्रविवेश स्वकां तनुम् ॥

...सहस्रसंयुक्तं कोटीन्दुसमवर्चसम् । दिव्यमाल्याम्बरधरो दिव्यगन्धानुलेपनः ॥

...कन्यासहस्रैस्तु सम्वृतः समलङ्कृतः । विमानं दिव्यमारुह्य प्रययौ वैष्णवं पदम्

...णस्यगतिंसम्यग्विदित्वारघुसत्तमः । स्वयमप्यथकाकुत्स्थः स्वर्गं गन्तुमभीप्सितः

अभिषिच्याऽथ काकुत्स्थः स्वात्मजौ च कुशीलवौ ।

विभज्य रथनागाश्वं सधनं प्रददौ तयोः ॥ ५५ ॥

...वत्यां कुशं तं च शरवत्यां लवं तथा । स्थापयामास धर्मेण राज्ये स्वं रघुसत्तमः

...भिप्रायं तु विज्ञाय रामस्य विदितात्मनः । आजग्मुर्वानराःसर्वेराक्षसाः सुमहाबलाः

...भीषणोऽथ सुग्रीवो जाम्बवान्मारुतात्मजः । नीलो नलःसुषेणश्च निषादाधिपतिर्गुहः

...भिषिच्य सुतौ वीरौ शत्रुघ्नश्च महामनाः । सर्वएते समाजग्मुरयोध्यां रामपालिताम्

ते प्रणम्य महात्मानमूचुः प्राञ्जलयस्तथा ॥ ६० ॥

वानरप्रभृतयऊचुः ।

...र्लोकं गन्तुमुद्युक्तं ज्ञात्वा त्वां रघुसत्तम !। आगताः स्मो वयंसर्वेतवाऽनुगमनं प्रति

न शक्ताः स्मः क्षणं राम जीवितुं त्वां विना प्रभो ! ।

तस्मात्त्वया विशालाक्ष ! गच्छामस्त्रिदशालयम् ॥ ६२ ॥

महेश्वर उवाच ।

...वमुक्तः काकुत्स्थो बाढमित्यब्रवीत्ततः । अथोवाच महातेजा राक्षसेन्द्रं विभीषणम्

राम उवाच ।

...ज्यं प्रशाधि धर्मेण मा प्रतिज्ञां वृथा कृथाः । यावच्चन्द्रश्च सूर्यश्च यावत्तिष्ठति मेदिनी



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तावद्रमस्व सुप्रीतः काले मम पदं व्रज ॥ ६४ ॥

महेश्वर उवाच ।

इत्युक्त्वाऽथ स काकुत्स्थः स्वार्चां विष्णुं सनातनम् ।
श्रीरङ्गशायिनं सौम्यमिक्ष्वाकुकुलदैवतम् ॥ ६५ ॥

सम्प्रीत्या प्रददौ तस्मै रामो राजीवलोचनः । हनुमन्तमथोवाच राघवः॰प्रानु

राम उवाच ।

मत्कथाः प्रचरिष्यन्ति यावल्लोके हरीश्वर !। तावद्रमस्व मेदिन्यां काले मां व्र

महेश्वर उवाच ।

तमेवमुक्त्वा काकुत्स्थो जाम्बवन्तमथाऽब्रवीत् ॥ ६८ ॥

राम उवाच ।

द्वापरे समनुप्राप्ते यदूनामन्वये पुनः । भूभारस्य विनाशाय समुत्पत्स्ये त्वं
करिष्ये तत्र संग्रामं त्वया भल्लूकसत्तम ! ॥ ७१ ॥

महेश्वर उवाच ।

तमेवमुक्त्वा काकुत्स्थः सर्वांस्तानृक्षवानरान् । उवाचवाचागच्छध्व मिति राम
मन्त्रिणो नैगमाश्चैव भरतः कैकयीसुतः । राघवस्यानुगमने निश्चितास्ते स
ततः शुक्लाम्बरधरो ब्रह्मचारी ययौ परम् । कुशान्गृहीत्वा पाणिभ्यामावध्य प्र
रामस्य दक्षिणेपार्श्वे पद्महस्ता रमा गता । तथैव धरणी देवी दक्षिणेतरपा
वेदाः साङ्गाःपुराणानिसेतिहासानिसर्वतः । ॐकारोथवषट्कारःसावित्रीलोक
अस्त्रशस्त्राणि च तदा धनुराद्यानि पार्वति !। अनुजग्मुस्तथा रामं सर्वं पुरवासि
भरतश्चैव शत्रुघ्नः सर्वे पुरनिवासिनः । सपुत्रदाराः काकुत्स्थमनुजग्मुः सह
मन्त्रिणो भृत्यवर्गाश्च किङ्करा नैगमास्तथा । वानराश्चैव ऋक्षाश्च सुग्रीवसहि
सपुत्रदाराः काकुत्स्थमन्वगच्छन्महामतिम् । पशवः पक्षिणश्चैवसर्वे स्थावर
अनुजग्मुर्महात्मानं समीपस्था नरोत्तमाः । ये च पश्यन्तिकाकुत्स्थंस्वपथानु
ते तथाऽनुगता रामं निवर्त्तन्ते न केचन । अथ त्रियोजनं गत्वा नदींपश्चान्मु

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सरयूं पुण्यसलिलां प्रविवेश सहानुगः । ततः पितामहो ब्रह्मा सर्वदेवगणावृतः ॥८२॥
तुष्टाव रघुशार्दूलमृषिभिः सार्द्धमक्षरैः । अब्रवीत्तत्र काकुत्स्थं प्रविष्टं सरयूजले ॥८३॥

ब्रह्मोवाच ।

आगच्छ विष्णो ! भद्रं ते दिष्ट्या प्राप्तोऽसि मानद ! ।
भ्रातृभिस्सहदेवाभैः प्रविशस्व निजां तनुम् ॥ ८४ ॥

वैष्णवीन्तां महातेजां देवाकारांसनातनीम् । त्वं हि लोकगतिर्देव!नत्वां केचित्तुजानते
त्वामचिन्त्यं महात्मानमक्षरं सर्वसंग्रहम् । यमिच्छसि महातेजस्तां तनुं प्रविशस्व भोः

महेश्वर उवाच ।

तस्मिन्सूर्यकराकीर्णे पुष्पवृष्टिनिपातिते । उत्सृज्य मानुषं रूपं स्वां तनुम्प्रविवेश ह ॥
अंशाभ्यां शङ्खचक्राभ्यां शत्रुघ्नभरतावुभौ । प्रपेदाते महात्मानौ दिव्यतेजस्समन्वितौ
शङ्खचक्रगदाशार्ङ्गपद्महस्तश्चतुर्भुजः । दिव्याभरणसम्पन्नो दिव्यगन्धानुलेपनः ॥ ८६ ॥
दिव्यपीताम्बरधरः पद्मपत्रनिभेक्षणः । युवा कुमारः सौम्याङ्गः कोमलावयवोज्ज्वलः॥
सुस्निग्धनीलकुटिलकुन्तलः शुभलक्षणः । नवदूर्वाङ्कुरश्यामः पूर्णचन्द्रनिभाननः ॥९१॥

देवीभ्यां सहितः श्रीमान्विमानमधिरुह्य च ।
तस्मिन्सिंहासने दिव्ये मूलेकल्पतरोःप्रभुः ॥ ९२ ॥

रामप्रसाद महातेजाः सर्वदेवैरभिष्टुतः । राघवानुगता ये च ऋक्षवानरमानुषाः ॥९३॥
स्पृष्ट्वैव सरयूतोयं सुखेन त्यक्तजीविताः । रामप्रसादात्ते सर्वे दिव्यरूपधराः शुभाः
दिव्यमाल्याम्बरधरा दिव्यमङ्गलवर्चसः । आरुरुहुर्विमानं तदसङ्ख्यास्तत्र देहिनः ॥
सर्वैःपरिवृतः श्रीमान्रामो राजीवलोचनः । पूजितः सुरसिद्धौघैर्मुनिभिस्तु महात्मभिः
आययौ शाश्वतं दिव्यमक्षरं स्वपदं विभुः । यः पठेद्रामचरितं श्लोकं श्लोकार्धमेव वा

शृणुयाद्वा तथा भक्त्या स्मरेद्वा शुभदर्शने ! ।
कोटिजन्मार्जितात्पापाज्ज्ञानतोऽज्ञानतः कृतात् ॥ ९८ ॥

विमुक्तो वैष्णवं लोकं पुत्रदारैश्चबान्धवैः । समाप्नुयाद्योगगम्यमनायासेन वै नरः ॥
एतत्ते कथितंदेवि! रामस्यचरितंमहत् । धन्योऽस्म्यहंत्वया देवि! रामचन्द्रस्यकीर्त्तनात्

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

किमन्यच्छ्रोतुकामाऽसि तद्ब्रवीमि वरानने ! ॥ १०० ॥

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे उमामहेश्वरसं
श्रीरामचरितकथनं नाम चतुश्चत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४४ ॥

---

## पञ्चचत्वारिंशदधिकद्विशततमोऽध्यायः

श्रीकृष्णावतारकथाप्रसङ्गे कंसजरासन्धादिराक्षसानांसमुत्पातस्त्रस्तायाः
ब्रह्मसमीपेगमनं देवैःसहब्रह्मणोविष्णुसमीपेप्रार्थनं भुवोभारापहरणाय
विष्णुनाऽऽश्वासनं कारावासस्थवसुदेवगृहेजन्मवृन्दावनेकृष्ण-
नयनं कंसात्याचारवर्द्धनं पूतनादिमारणं कृष्णेन-
नानादिव्यलीलाप्रदर्शनं कंसवधश्च

श्रीपार्वत्युवाच ।

रघुनाथस्य चरितं साधूक्तं हि त्वया विभो ! ।
श्रुत्वा धन्याऽस्मि देवेश ! त्वत्प्रसादान्महेश्वर ! ॥ १ ॥

वसुदेवसुतस्याऽस्यकृष्णस्य चरितंमहत् । श्रोतुमिच्छामि देवेश! चरितं कल्म

रुद्र उवाच ।

श्रृणु देवि! प्रवक्ष्यामिकृष्णस्याऽस्य महात्मनः । चरितंवासुदेवस्य सर्वपापफल
यदूनामन्वये देवि ! वसुदेवइतीरितः । देवमीढस्य पुत्रोऽभूत्सर्वधर्मविदांवरः
देवकस्याऽत्मजां देवि देवकीं देववर्णिनीम् । उपयेमे विधानेन मथुरायां नृप
उग्रसेनस्य पुत्रोऽभूत्कंसः शूरो महाबलः । तयोरथ वरं तत्र चोदयामास स
समागतेषु तेष्वेवं पथि रम्ये शुभावहे । अन्तरिक्षेऽशरीरा वाक्प्राह गम्भीर

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

आकाशवागुवाच ।

अस्यास्तवाऽष्टमो गर्भः कंस प्राणान्हरिष्यति ॥ ८ ॥

रुद्र उवाच ।

[इत्यु]क्त्वा हन्तुमारेभे कंसोऽपि भगिनीं तदा । तमब्रवीत्सुसंरब्धं वसुदेवः सुबुद्धिमान्

वसुदेव उवाच ।

[न ह]न्तव्या महाभाग ! भगिनी धर्मतस्त्वया । गर्भानेवसमुत्पन्नाञ्जहि राजन्महाबल !॥

रुद्र उवाच ।

[इ]त्येत्याह तदा कंसो वसुदेवं च देवकीम् । निबध्य स्वगृहे रम्ये सर्वभोगे न्यवेशयत्

[ए]तस्मिन्नन्तरे देवि! भूमिभारप्रपीडिता । जगाम धरणी देवी सहसा ब्रह्मणोऽन्तिकम्

[स]मेत्य जगतामीशं ब्रह्माणं परमेष्ठिनम् । प्राह गम्भीरया वाचा धरणी लोकधारिणी॥

धरण्युवाच ।

प्रजापते ! न शक्ताऽस्मि भर्तुं लोकानिमान्प्रभो !।

राक्षसाः पापकर्माणः संस्थिता मयि सुव्रत ! ॥ १४ ॥

[ज]गतः सकलान्धर्मान्विध्वंसन्तो महाबलाः । अधर्मवर्तिनः सर्वे नराः पापविमोहिताः

[स्व]ल्पमल्पतरं धर्मं लोकेऽस्मिन्न च दृश्यते । धर्मेणैव धृता देव! सत्यशौचयुतेन च ॥

तस्मादधर्मसम्भूतं न लोकं धर्तुमुत्सहे ॥ १६ ॥

रुद्र उवाच ।

[इ]त्युक्त्वा धरणी देवी तत्रैवाऽन्तरधीयत । ततः सुरगणाः सर्वे ब्रह्मरुद्रपुरोगमाः ॥१७

[क्षी]राब्धेरुत्तरं कूलमधिगम्य जगत्पतिम् । तुष्टुवुः स्तुतिभिर्दिव्यैर्मुनयश्च महौजसः ॥

ततः प्रसन्नः प्राहेशः सर्वास्तान्मुनिसत्तमान् ॥ १८ ॥

श्रीभगवानुवाच ।

भोभो ! देवगणास्सर्वे किन्निमित्तमिहाऽऽगताः ॥ १९ ॥

रुद्र उवाच ।

ततः पितामहः प्राह देवदेवं जनार्दनम् ॥ २० ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ब्रह्मोवाच ।

देवदेव ! जगन्नाथ ! पृथिवी भारपीडिता । राक्षसा बहवो लोके समुत्पन्ना दुरा
जरासन्धश्च कंसश्च प्रलम्बो धेनुकादयः । दुरात्मानः प्रबाधन्ते सर्वलोकान्सना
भारावतरणं कर्तु पृथिव्यास्त्वमिहाऽर्हसि ॥ २२ ॥

रुद्र उवाच ।

एवमुक्तोहृषीकेशो ब्रह्मणा परमेष्ठिना । प्राह गम्भीरया वाचा जगतीपतिरव्ययः

श्रीभगवानुवाच ।

अवतीर्याऽथ लोकेऽस्मिन्यदूनामन्वये सुराः !। अवनीभारमव्यग्रमपास्यामि मह

रुद्र उवाच ।

एवमुक्ताः सुरास्सर्वे नमस्कृत्य जनार्दनम् ।
स्वान्स्वाँल्लोकान्समासाद्य परेशं तेऽन्वचिन्तयन् ॥
ततो नारायणीं मायां परमेशः समब्रवीत् ॥ २५ ॥

श्रीभगवानुवाच ।

हिरण्याक्षस्य षट्पुत्रान्समानीयाऽवनीतले । वसुदेवस्य पत्न्यान्तु देवक्यां स
अनन्तांशःसप्तमोऽत्र सम्प्रविष्टस्तुमाचिरम् । तस्याःसपत्न्यां रोहिण्यांददस्वशु
ततोऽष्टमेममांशस्तु देवक्यांसम्भविष्यति । नन्दगोपस्य पत्न्यान्तु यशोदायांसम
तेंऽशभूतामहानिद्रा विन्ध्यं गत्वा महाचलम् । तत्रसम्पूज्यमाना हि देवैरिन्द्रपु
हन्यादैत्यान्महावीर्याञ्छुम्भासुरपुरोगमान् ॥ २६ ॥

रुद्र उवाच ।

तथेत्युक्त्वा महामाया हिरण्याक्षसुतांस्तदा । पर्यायेण च देवक्याषड्गर्भान्संन्यवे
ताञ्जघान तदा कंसो जातमात्रान्महाबलः । ततस्तु सप्तमो गर्भो ह्यनन्तांशेन व
वर्धमानं तु गर्भंतं रोहिण्यां समुपानयत् । गर्भसङ्कर्षणात्तस्यां जातः सङ्कर्षणो
कृष्णाष्टम्यान्तु रोहिण्यां प्रौष्ठपद्यां शुभोदये । रोहिणी जनयामास पुत्रं सङ्कर्ष
ततस्तुदेवकीगर्भमापेदे भगवान्हरिः । आपन्नगर्भां तां दृष्ट्वा कंसो भयनिपीडित

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

...सुरगणाः सर्वे हर्षनिर्भरमानसाः । तुष्टुवुर्देवकीं तत्र विमानस्था नभस्तले ॥३५॥
...स्तु दशमे मासि कृष्णे नभसि पार्वति !। अष्टम्यामर्द्धरात्रेच तस्यां जातो जनार्दनः
...न्दीवरदलश्यामः पद्मपत्रायतेक्षणः । चतुर्भुजः सुन्दराङ्गो दिव्याभरणभूषितः ॥३७॥
...श्रीवत्सकौस्तुभोरस्को वनमालाविभूषितः । वसुदेवस्यजातोऽसौ वासुदेवः सनातनः
...दृष्ट्वा जगतां नाथं कृष्णमानकदुन्दुभिः । उवाचप्राञ्जलिर्भूत्वा नमस्कृत्य जगन्मयम्

वसुदेव उवाच ।

...जातोऽस्मि मे जगन्नाथ! भक्तकल्पतरो प्रभो !। त्वमेव सर्वदेवानामनादिः पुरुषोत्तमः॥
...त्वमचिन्त्यं महद्भूतं योगिध्येयः सनातनः । मम पुत्रत्वमापन्नो धरण्यां धरणीधर !
...एवैतदद्भुतं रूपमैश्वरं पुरुषोत्तमः । दानवाः पापकर्माणो न सहन्ते महौजसः ॥४२॥

रुद्र उवाच ।

...र्थितः स्तुतस्तेन पद्मनाभः सनातनः । उपसंहृतवान्रूपं चतुर्भुजसमन्वितम् ॥ ४३॥
...नुषेणैव भावेन द्विभुजेन व्यरोचत । ये चाऽङ्गरक्षकाः सर्वे दानवास्तत्र संस्थिताः॥
...चापि मायया तस्या मोहितास्तमसावृताः । एतस्मिन्नन्तरे देवमादायानकदुन्दुभिः
...ययौ नगरात्तूर्णं सर्वदेवैरभिष्टुतः । पयोधरे वर्षमाने नागराजो महाबलः ॥ ४६ ॥
...फणासहस्रेणाच्छाद्य भक्त्यादेवं समन्वगात् । तौ गोपुरकपाटौतु तत्पादस्पर्शनात्तदा

भिद्यमानौ सुविवृतौ तत्रस्थाश्च विमोहिताः ।

स्रोतस्विनी सुपूर्णा या यमुनाऽपि महात्मनः ॥ ४८ ॥

...वेशाज्जानुमात्रन्तु जलंसा चाप्युपावहत् । उत्तीर्यंयमुनां सोऽथाव्रजत्तत्तीरसंस्थितम्
...संस्तूयमानस्त्रिदशैः प्रविवेश यदूत्तमः । तत्र नन्दस्य पत्नी सा प्रसूता गोव्रजे शुभे ॥
...विमोहिता माययैव सुषुप्ता तमसावृता । तस्यास्तु शयने देवं विनिक्षिप्य स यादवः
...कन्यां समुपादाय प्रययौ मथुराम्पुनः । पत्न्यै दत्वाऽथतां बालामुवाससुसमाहितः
...रोद बालभावात्सा देवकीशयनंगता । अथ बालध्वनिं श्रुत्वा तद्गृहस्याऽङ्गरक्षकाः
...सायाऽऽवेदयामासुर्देवकीप्रसवं शुभम् । कंसस्तूर्णमुपेत्यैनां जग्राह बालिकां तदा॥

चिक्षेप च शिलापृष्ठे साऽपि तूर्णं वियत्स्थिता ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तस्योत्तमाङ्गे स्वपदं दत्त्वा तूर्णं खमास्थिता ॥
उवाचाऽष्टभुजादेवी तदा राक्षसपुङ्गवम् ॥ ५५ ॥

देव्युवाच ।

किंमया क्षिप्तया मन्द! जातोयस्त्वां हनिष्यति । सर्वस्यजगतः स्रष्टाधर्ताहर्ता
अस्मिँल्लोके समुत्पन्नः स ते प्राणान्हरिष्यति ॥ ५६ ॥

रुद्र उवाच ।

इत्युक्त्वा तेजसा देवी सहसा पूरयन्नभः । जगाम देवगन्धर्वैः स्तूयमाना हिम
कंसस्तदोद्विग्नमनाः समाहूय स्वदानवान् । प्रलम्बचाणूरमुखानुवाच भयर्पी

कंस उवाच ।

अस्माद्भयात्सुरगणा उपेत्य क्षीरसागरम् । आचचक्षुर्हरेः सर्वं रक्षोविध्वंसन
तेषान्तु वचनंश्रुत्वा धरण्यां धरणीधरः । मानुषेणैव भावेन समुत्पन्नो हि सो
तदद्य सर्वे यूयं वै राक्षसाः कामरूपिणः । समुद्रिक्तबलान्बालान्मारयध्वमश

रुद्र उवाच ।

इत्यादिश्यततःकंसो वसुदेवंचदेवकीम् । आश्वास्य मोचयित्वाऽथ स्ववेश्मा
वसुदेवस्ततो गत्वा नन्दव्रजमनुत्तमम् । तेन सम्पूजितस्तत्र निरीक्ष्य तनयं
उवाच नन्दपत्नीं तां यशोदां यदुनन्दनः ॥ ६२ ॥

वसुदेव उवाच ।

सुभगे! मत्सुतमिमं रोहिणीजठरोद्भवम् । स्वपुत्रमिव रक्षस्व भिया कंसादि

रुद्र उवाच ।

तथेत्याह तदा तन्वी नन्दपत्नी दृढव्रता । लब्ध्वैव पुत्रयुगलमुत्पुपोषमुदा
निक्षिप्य तनयौ गेहे नन्दगोपस्य यादवः । विश्रब्धः प्रययौ तूर्णं मथुरां कंस
ततो गर्गः शुभदिने वसुदेवेन नोदितः । नन्दगोपव्रजं गत्वा तत्रस्थैः पूजितो
विधिना जातकं कर्म कृत्वा देवस्य गोकुले । नाम चात्राऽकरोद्दिव्यं पुत्रयोर्
सङ्कर्षणो रौहिणेयो बलभद्रो महाबलः । रामइत्यादिनामानि पूर्वजस्याऽकरो

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

श्रीधरः श्रीकरः श्रीमान्कृष्णोऽनन्तो जगत्पतिः । वासुदेवो हृषीकेशइत्याद्यवरजस्य च
रामकृष्णावितिख्यातिमस्मिँल्लोके गमिष्यतः । एवमुक्त्वा द्विजश्रेष्ठः सम्पूज्यपितृदेवताः
सम्पूज्यमानो गोपालैराययौ मथुरां पुनः । कंसेन प्रेषिता रात्रौ पूतना बालघातिनी॥

विषलिप्तं स्तनं प्रादात्कृष्णायाऽमिततेजसे ।
कृष्णस्तु राक्षसीं ज्ञात्वा पपौ गाढं स्तनं भृशम् ॥ ७३ ॥

प्राणैः सह महातेजा राक्षस्या यदुपुङ्गवः । सा विह्वलाङ्गी सहसा विच्छिन्नस्नायुबन्धना
पपात वेपमाना सा ममार च महास्वना । तस्याः शब्देन महता पूरितं च नभस्तलम्
बलाःसर्वे ततो गोपा दृष्ट्वातां पतितांभुवि । कृष्णंचक्रीडमानन्तं राक्षस्यास्तु महोरसि
समुद्विग्नास्ततस्तूर्णमादाय तनयं तदा । रक्षोभिया तदा तस्मिन्गोपुरीषेण मूर्द्धनि ॥
सम्मार्जयामास तदा गोवालेन तदाननम् । नन्दगोपः समभ्येत्य सुतमादाय भामिनी
भगवन्नामभिस्तस्य सर्वाङ्गेषुप्रमार्जनम् । कृत्वातांतामसींभीमां वहिर्विन्यस्यगोव्रजात्
ददाह गोपवृन्दैश्च त्रासितैस्तत्र गोव्रजे । कदाचिच्छकटस्याऽधः शयानो भगवान्हरिः
प्रसार्य चरणौ तत्र रुरोद मधुसूदनः । तस्य पादप्रहारेण शकटं परिवर्तितम् ॥८१ ॥
विध्वस्तकुम्भभाण्डं तद्विपरीतं पपात वै । ततोगोप्यश्च गोपाश्च दृष्ट्वा तच्छकटं महत्
विस्मयं परमं जग्मुः किमेतदितिशङ्किताः । यशोदा च तदा तूर्णं बालं जग्राह विस्मिता
अल्पेनैव हि कालेन बालकौ तौ यदूत्तमौ । वर्द्धमानौ यशोदायाः स्तनपानेन पोषितौ
जानुभ्यामथहस्ताभ्यां रिङ्गमाणौविरेजतुः । तृणावर्तस्तमादाय गोविन्दं वियतिस्थितः
तं जघान जगन्नाथस्स पपात महासुरः । हत्वा तं राक्षसं घोरं तत्रैवाऽऽस्ते जगत्पतिः
विचचार ततः सर्वं गोव्रजं मधुसूदनः । नवनीतं जहाराऽऽशु गोपीनां च गृहे गृहे ॥
तदा यशोदा कुपिता दाम्नामध्ये उलूखले । निवध्य कृष्णं प्रययौ विक्रेतुंगोरसादिकम्
कर्षमाणस्ततः कृष्णो दाम्ना बद्धउलूखले । यमलार्जुनयोर्मध्ये जगाम धरणीधरः ॥८९
उलूखलेन गोविन्दः पातयामास तौ द्रुमौ । भग्नस्कन्धौ निपतितौ स्वरेण धरणीतले
तेन शब्देन महताऽऽजग्मुस्तत्र महौजसः । गोपवृद्धास्ततो दृष्ट्वा विस्मयं परमं गताः ॥
यशोदाऽपि समुद्विग्नाविमुच्यधरणीधरम् । तं विस्मितं समादायस्तनंप्रादान्महात्मने

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यस्मान्निर्बध्यमानस्तु दाम्ना मात्रा जगत्पतिः ।
तस्मान्महर्षिभिः सर्वैर्दामोदरइतीरितः ॥ ६३ ॥

तौ तु किन्नरतां प्राप्तौ विमुक्तौ यमलार्जुनौ । गोपवृद्धास्ततः सर्वे नन्दगोपपुरोग
महोत्पातमिमं ज्ञात्वा स्थानान्तरमुपाययुः । वृन्दावने मनोरम्ये यमुनायास्तटे शुभे
निवासं चक्रिरे रम्यं गवां गोपीजनस्य च । तत्र तौ रामकृष्णौतु वर्द्धमानौ महा
वत्सपालयुतौ वत्सान्पालयामासतुस्तदा । गोवत्समध्यगं कृष्णं बको नाम महा
बकरूपेण तं हन्तुमुद्युक्तोऽत्र यदूत्तमम् । तं दृष्ट्वा वासुदेवोऽपि लोष्टमुद्यम्य लील
ताडयामास पक्षान्ते पपातोर्व्यां महासुरः । ततः कतिपयाहस्तु गोवत्सान्पाल
छायायां जम्बुवृक्षस्य प्रसुप्तौ पल्लवे मृदौ । एतस्मिन्नन्तरे देवो ब्रह्मादेवगणै
द्रष्टुं कृष्णं समागम्य सुप्तौ दृष्ट्वा यदूत्तमौ । वत्सान्गोपशिशून्हृत्वा जगामनि

प्रबुद्धौ तौ समालोक्य विनष्टाञ्छिशुवत्सकान् ।
गोवत्सा गोपबालाश्च क गताइति विस्मितौ ॥ १०२ ॥

ज्ञात्वा कृष्णस्तु तत्कर्म प्रजापतिकृतं तदा । तथैव ससृजे बालान्गोवत्सांश्च
यथावर्णं यथारूपं तथैव मधुसूदनः । ससर्ज वत्सान्गोपालानविता जगता
दृष्ट्वा सायाह्नसमये गावस्त्वेषांच मातरः । स्वान्स्वान्वत्सानुपागम्य यथापूर्वं प्र
एवं सम्वत्सरैकाले गते तत्र महात्मनः । प्रजापतिः पुनस्तस्मै ददौवत्सान्सबाल
कृताञ्जलिपुटो भूत्वा परिणीय प्रणम्य च । भयादुवाच गोविन्दं ब्रह्मा त्रिभुवने

ब्रह्मोवाच ।

नमो नमस्ते सर्वात्मंस्तत्त्वज्ञानस्वरूपिणे । नित्यानन्दस्वरूपाय प्रयतात्मन्महा
अणुबृहत्स्थूलतररूपसर्वगताव्यय !। अनादिमध्यान्तरूप स्वरूपात्मन्नमोऽस्तु ते
नित्यज्ञानबलैश्वर्य वीर्यतेजोमयाय च । महाशक्ते! नमस्तुभ्यं पूर्णषाड्गुण्यमूर्तये
त्वं वेदपुरुषो ब्रह्मन्महापुरुषएव च । शरीरपुरुषस्त्वं च छन्दःपुरुष एव च ॥
चत्वारः पुरुषास्त्वं च पुराणः पुरुषोत्तमः । विभूतयस्तव ब्रह्मन्पृथिव्यन्यनि
तव वाचा समुद्भूतौ क्ष्मावह्नी जगदीश्वर !। अन्तरिक्षं च वायुश्च सृष्टौ प्राणे

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

चक्षुषा तव संसृष्टौ द्यौश्चादित्यस्तथाऽव्यय !। दिशश्चचन्द्रमाःसृष्टाःश्रोत्रेणतवचाऽनघ
प्राणं त्वावश्च वरुणो मनसा ते महेश्वर !। उक्ते महति मीमांसे एवं ब्रह्म प्रचक्षते ॥
तमेवाग्निमध्वर्युरेतमेव महाव्रते । छन्दोगा एतमप्येतं दिव्येतं वायुरैक्षत ॥ ११६ ॥
आकाशएतमप्स्वेतमोषधीष्वेतमेव च । तथावनस्पतिष्वेतं चन्द्रमस्येतमेव च ॥११७॥
नक्षत्रेषु च सर्वेषु ग्रहेष्वेतं दिवाकरे । सर्वभूतेष्वेतमेव ब्रह्मेत्याख्याति च श्रुतिः ॥
एव परमं ब्रह्म प्रज्ञातं परितोऽमृतम् । हिरण्मयोऽव्ययो यज्ञः शुचिः शुचिषदित्यपि॥
वैदिकान्यभिधेयानि तवैवान्यस्य न कचित् । चक्षुर्मयं श्रोत्रमयं छन्दोमयमनोमयम्
वाङ्मयं परमात्मानं परेशं शंसति श्रुतिः । इति सर्वोपनिषदामर्थस्त्वं कमलेक्षण ! ॥

स्तोतुं न शक्तोऽहं त्वां तु सर्ववेदान्तपारगम् ।
महापराधमेतत्ते वत्सापहरणं मया ॥
कृतं तत्क्षम्यतां नाथ ! शरणागतवत्सल ! ॥ १२२ ॥

महेश्वर उवाच ।

एवं स्तुत्वा हरिं वेधाः प्रणम्य चपुनःपुनः । वत्सान्दत्त्वा पुनस्तस्मैप्रययौस्वयमालयम्
प्रदक्षिणं कृत्वा सदा देवि! बालरूपं हरिं विधिः । उवास त्रिदशैःसार्द्धं हृष्टपुष्टो महातपाः॥
ब्रह्मणोनष्टा वत्सा वै पूर्वं वत्सास्तथार्भकाः । अवापुरैकतां तत्र पश्यतां त्रिदिवौकसाम्
कृष्णस्तु वत्सपालैर्वै प्रययौ नन्दगोकुलम् । ततः कतिपयाहस्सु गोपालैर्यदुपुङ्गवः ॥
गत्वाऽथ कालिन्द्यास्तत्रस्थं सुमहाविषम् । सहस्रशीर्षबलिनंनागराजमथाऽच्युतः
आपिष्य फणसाहस्रं पादेनैकेन लीलया । प्राणसंशयमापन्नं चकार मधुसूदनः ॥१२८
कालियो लब्धसञ्ज्ञस्तमेव शरणं ययौ । ररक्ष भगवान्कृष्णो नागं त्यक्तविषं तदा
वैनतेयभयाद्भीतं स्वपदेनाङ्क्यमूर्द्धसु । ह्रदाद्विवासयामास कालिन्द्या यदुपुङ्गवः॥१३०

त्यक्त्वा स तं ह्रदं तूर्णं पुत्रदारसमन्वितः ।
नमस्कृत्याऽथ गोविन्दं प्रययौ कालियस्तदा ॥ १३१ ॥

अद्रुमाःस्तुयेपूर्वंतत्तीरस्थाश्चशाखिनः । कृष्णेनवीक्षितास्तूर्णंफलिनःपुष्पिणोऽभवन्
कालेन कौमारमवाप्य मधुसूदनः । गोवृन्दं पालयामास सर्वदेवमयः प्रभुः॥१३३

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्वसमानवयोभिस्तु गोपालैस्तु यदूत्तमः। वृन्दावने मनोरम्ये स रामो विचचार
तत्र हत्वा महाघोरं सर्परूपं महासुरम्। अपहृत्य महाकायं मेरुमन्दरगौरवम्॥
धेनुकस्य वनं प्राप्य तालहिन्तालगह्वरम्। धेनुकं पर्वताकारं खगरूपधरं सदा॥

पादौ गृह्य समुत्क्षिप्य तालेन विजघान ह।
तत्क्षणादेव तत्पालास्तदन्ते रेमिरे तदा॥ १३७॥

निष्क्रम्य तद्वनात्तूर्णं भाण्डीरं वटमागताः। तत्र ते रामकृष्णाभ्यांचिक्रीडुर्बाल
गोपवेषेण तत्राऽगात्प्रलम्बो नाम राक्षसः। रामं स्वपृष्ठमारोप्य ययौ तूर्णं नभ

मत्वा तं राक्षसं रामो मुष्टिना तस्य मूर्द्धनि।
ताडयामास रोषेण विह्वलाङ्गस्ततोऽपतत्॥ १४०॥

राक्षसेनैव रूपेण विनदन्भैरवं स्वनम्। भिन्नशीर्षतनुस्तत्र ममार रुधिरो
ततः प्रदोषसमये गोव्रजेनन्दनन्दनः। उवास गोपकन्याभिः क्रीडन्कौमोद
अरिष्टनामा दैत्येशो गत्वा तत्र वृषाकृतिः। कृष्णं हन्तुं समागत्य जगर्जचमहा
तं दृष्ट्वा विद्रुताःसर्वे गोपालाभयपीडिताः। कृष्णोऽपि दृष्ट्वातं रौद्रमागतंदनुजा
तालवृक्षं समुत्पाट्य शृङ्गमध्ये व्यपीडयत्। स तु भग्नशिरःशृङ्गो वमन्वैरुधिरं
पपात भीमवेगेन निर्द्दंस्त्यक्तजीवितः। इत्थं हत्वा महाकायमरिष्टं दनुजा
आहूय गोपबालांश्च तत्रैवोवास गोव्रजे। ततः कतिपयाहस्सु केशीनाम महा
हयकायेन गोविन्दं हन्तुं व्रजमुपाययौ। स गत्वा गोव्रजं रम्यमुच्चैर्हेषामथा
तेन शब्देन महता पूरितं भुवनत्रयम्। भीताः सर्वे सुरगणाः शङ्कमाना युग

तत्रस्था मोहिताः सर्वे गोपा गोप्यश्च विह्वलाः।
लब्धसञ्ज्ञास्तु ते सर्वे विद्रुताश्च समन्ततः॥ १५०॥

गोप्यस्तु शरणं जग्मुः कृष्णं त्राहीति चाब्रुवन्। नभेतव्यंनभेतव्यमित्याहभ
समाश्वास्य ततस्तूर्णं मुष्टिनावासवानुजः। ताडयामास शिरसितस्य दैत्यस्य
विभिन्नदन्तनेत्रोऽसौ विननाद महास्वनम्। महाशिलांसमुत्क्षिप्यतस्याङ्गेवै
सतुचूर्णितसर्वाङ्गो निनदन्भैरवं स्वनम्। पपात सहसा भूमौ ममार च मह

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

[के]शिनं निहतं दृष्ट्वा दिवि देवगणा भृशम् । मुमुचुः पुष्पवर्षाणि साधु साध्विति चाऽब्रुवन्
इत्थं शिशुत्वे वै दैत्यान्हरिर्हत्वा बलोत्कटान् ।
स मुमोद सुखेनैव बलरामसमन्वितः ॥ १५६ ॥
[इन्]दीवरदलश्यामः पद्मपत्रनिभेक्षणः । पीताम्बरधरः स्रग्वी वनमालाविभूषितः ॥१५७॥
[कौ]स्तुभोद्भासितोरस्कश्चित्रमाल्यानुलेपनः । विचित्राभरणैर्युक्तःकुण्डलाभ्यांविराजितः
[आ]मुक्तुलसीमालः कस्तूरीतिलकाञ्चितः । सुस्निग्धनीलकुटिलकवरीकृतकेशवान् ॥
[ना]दैर्नानाविधैः पुष्पैर्बर्हिबर्हावतंसकः । रक्तारविन्दसदृशहस्तपादतलाधरः ॥ १६० ॥
[श]क्रमध्यगशीतांशुकलङ्कभ्रूलताननः । हारनूपुरकेयूरैः कटकाभ्यां विराजितः ॥१६१॥
[वृ]न्दावने महारम्ये फलपुष्पविराजिते । रम्यं निनादयन्वेणुं तत्राऽऽस्ते यदुनन्दनः ॥
[सर्व]श्रीरितकन्दर्पकोटिलावण्यमच्युतम् । सर्वा गोपस्त्रियो दृष्ट्वा मन्मथास्त्रेणपीडिताः
[पु]रा महर्षयः सर्वे दण्डकारण्यवासिनः । दृष्ट्वा रामं हरिं तत्र भोक्तुमैच्छन्सुविग्रहम् ॥
ते सर्वे स्त्रीत्वमापन्नाः समुद्भूतास्तु गोकुले ।
हरिं सम्प्राप्य कामेन ततो मुक्ता भवार्णवात् ॥ १६५ ॥
[क्र]ोधेनैव यथा दैत्याः समेत्य मधुसूदनम् । निधनं प्राप्य सङ्ग्रामे हता मुक्तिमवाप्नुयुः
[का]मक्रोधौ नृणां लोके निरयस्यैव कारणम् । हरिं समेत्य भावेन मुक्ता गोप्यः सुरद्विषः
[का]माद्भयाद्वा द्वेषाद्वा ये भजन्ति जनार्दनम् । ते प्राप्नुवन्ति वैकुण्ठं किम्पुनर्भक्तियोगतः
[त]स्य वेणुध्वनिं श्रुत्वा रजन्यां बल्लवाङ्गनाः । शयनादुत्थिताः सर्वा विकीर्णाम्बरमूर्द्धजाः
त्यक्त्वा पतीन्सुतान्बन्धूंस्त्यक्त्वा लज्जां कुलं स्वकम् ।
जगत्पतिं समाजग्मुः कन्दर्पशरपीडिताः ॥ १७० ॥
[स]मेत्य गोप्यः सर्वास्तु भुजैरालिङ्ग्य केशवम् । बुभुजुश्चाधरं देव्यः सुधामृतमिवाऽमराः
[ता]भिः सर्वाभिरात्मेशः क्रीडयामास गोव्रजे । तेनाऽपि ताः स्त्रियः सर्वा रेमिरे निर्भया व्रजे
[इ]त्येवं रमयामासुरहन्यहनि केशवम् । वृन्दावने मनोरम्ये कालिन्दीपुलिने तथा ॥१७३॥

पार्वत्युवाच ।

[ध]र्मसंरक्षणार्थाय जगत्यामवतीर्य सः । परदाराभिगमनं कथं कुर्याज्जनार्दनः ॥१७४॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

रुद्र उवाच ।

स्वशरीरपरिष्वङ्गाद्रतिर्नास्ति शुभानने !। सर्वं जगच्च तस्याऽङ्गं पृथगत्र न
स्त्रीपुम्भेदो न वै तस्य पुरुषस्य महात्मनः । निसर्गात्सर्वभर्तृत्वादात्मेशत्वा
तथाऽपहतपाप्मत्वसामर्थ्याद्व्यापिनःप्रभोः । दोषोऽत्र नास्तिसुभगेदेवस्यपर

वसिष्ठ उवाच ।

एवमुक्त्वातु गिरिजां रुद्रः श्रीत्रिपुरान्तकः । कृष्णस्य शेषं चरितमाख्यातुं

रुद्र उवाच ।

शरत्काले तु सम्प्राप्ते नन्दगोपपुरोगमाः । गोपामहोत्सवं कर्तुमारब्धास्त्रिदशे
तदुत्सवं तु गोविन्दो निवार्याऽथ शतक्रतोः । गोवर्द्धनाद्रिराजस्य कारयामास

ततः क्रुद्धः सहस्राक्षो नन्दगोपस्य गोव्रजे ।
ववर्ष च महावृष्टिं सप्तरात्रं निरन्तरम् ॥ १८१ ॥

गोवर्द्धनं समुत्पाट्य महाशैलं जनार्दनः । तेषां संरक्षणार्थाय धारयामास
तस्यच्छायां गिरेः प्राप्य गोपागोप्यश्च सुव्रते !। अवसंश्च सुखेनैव हर्म्यान्त
ततः शक्रः सहस्राक्षो भीतःसम्भ्रान्तचेतसा । वारयामास तद्वर्षंययौ नन्दस्य
कृष्णोऽपि तं महाशैलं यथापूर्वं न्यवेशयत् । गोपवृद्धाश्च ते सर्वे नन्दगोपपु
परिपूज्य च गोविन्दं परं विस्मयमाययुः । ततः शतक्रतुर्देवं समेत्य मधु

तुष्टाव प्राञ्जलिर्भूत्वा हर्षगद्गदया गिरा ॥ १८६ ॥

इन्द्र उवाच ।

नमस्ते पुण्डरीकाक्ष! सर्वज्ञाऽमितविक्रम !। त्रिगुणातीत सर्वेश विश्वस्यात्म

त्वं यज्ञस्त्वं वषट्कारस्त्वमोङ्कारः क्रतुर्हविः ।
त्वमेव सर्वदेवानां पिता माता च केशव ! ॥ १८८ ॥

अग्रे हिरण्यगर्भस्त्वं भूतस्य समवर्त्तत । त्वमेवैकः पतिरसि पुरुषस्त्वं हिर
पृथिवीं द्यामिमां देव! त्वमेव धृतवानसि । आत्मदः फलदो यश्च स्यादेवं
अवाप्तं तच्च त्रिदशैः प्रकाशं जगताम्पतेः । अमृतं चैव मृत्युश्च च्छाया तव

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

[तस्]मै देवाय भवते विधेमहविषा वयम् । हेमवन्तइमे यस्य समुद्भूता हिरण्मयाः ॥
[समु]द्रा रसना यस्य वाहस्तस्यैव केशव !। इमा दिशः प्रतिदिशो वायुर्यस्य तवाव्यय
[तस्]मै देवाय भवते विधेमहविषावयम् । येन त्वया समारूढा पृथिवी वर्द्धिता पुनः ॥
स्वर्लोकः स्तम्भितो येन त्वया ब्रह्मन्महेश्वर ! ।
त्वमन्तरिक्षे रजसोऽवसानः सर्वगोऽव्ययः ॥ १९५ ॥
[तस्]मै देवाय भवते विधेम हविषा वयम् । यं क्रन्दसो राजमाने तप्तभासे गुणान्विते॥
[अ]भ्यैक्षेतां च मनसा अवश्यं श्रीश्च सर्वदा । यत्राऽस्ति सूर उदितो विभाति परमे पदे
[तस्]मै देवाय भवते विधेम हविषा वयम् । यदापो बृहतीर्ब्रह्म विश्वमायं जनार्दनः ॥
[ग]र्भं दधानाः सर्गेऽत्र जनयन्तीरघौघकृत् । समवर्तत देवानामसुरेकोऽव्ययो विभुः ॥
[तस्]मै देवाय भवते विधेम हविषा वयम् । य आपो महिनादक्षं पर्यपश्यत्प्रजापतिम् ॥
यज्ञं दधानास्तत्राऽदौ जनयन्तीर्हविः पुमान् ।
योदेवेष्वेकएवासीदधिदेवः परात्परः ॥ २०१ ॥
[तस्]मै देवाय भवते विधेम हविषावयम् । मा नो हिंसीज्जनितायःपृथिव्याअव्ययःपुमान्
[य]ो वा दिवं सत्यधर्मा जजानाव्ययईश्वरः । यश्चन्द्रो बृहतीरपो जजान सकलं जगत् ॥
[तस्]मै देवाय भवते विधेम हविषा वयम् । एतानि विश्वजातानि वभूव परिताप्रभ !
त्वदुत्पन्नप्रजाध्यक्षभविष्यद्भूतमच्युतः ।
यजामस्त्वां च यत्कामास्तन्नो अस्तु समासतः ॥ २०५ ॥
[रयी]णां पतयः स्याम्तवकारुण्यवीक्षणात् । हिरण्याख्यः सपुरुषो हिरण्यश्मश्रुकेशवान्
आप्रणखात्सर्वं हिरण्य सविता तु हिरण्यभाक् ।
असौ सर्वगतो ब्रह्मा यस्त्वादित्ये व्यवस्थितः ॥ २०७ ॥
[य]थाकप्यासम्पुण्डरीकमक्षिणी तस्यनान्यतः । तद्वेदेवस्यसवितुर्वरेण्यंभर्गउत्तमम् ॥
सदा धीमहि ते रूपं धियोयोनःप्रभातिहि ॥ २०८ ॥
[न]मस्ते पुण्डरीकाक्ष श्रीश सर्वेश केशव ! । वेदान्तवेद्य यज्ञेश यज्ञरूप! नमोऽस्तुते ॥
[न]मस्ते वासुदेवाय गोपवेषाय ते नमः । तत्सर्वध्वंसनादेव अपराधं मया कृतम् ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तत्क्षम्यतां जगन्नाथ! घृणाब्धे पुरुषोत्तम !। अल्पेनैव हि कालेन जहि कंसं दुरा...
देवानां हि हितं कृत्वा सुखे स्थापय मेदिनीम् ॥ २११ ॥

महादेव उवाच ।

इतिसंस्तुत्य गोविन्दं सर्वदेवेश्वरो हरिः । सुधामृतेनाभ्यषिञ्चद्दिव्याम्बरविभू...
अर्चयित्वा तु देवेशं जगाम त्रिदिवं पुनः । गोपवृद्धाश्च गोप्यश्च दृष्ट्वा त...
तेन ते पूजिताश्चैव प्रहर्षमतुलं ययुः । रामकृष्णौ महावीर्यौ दिव्याभरणभूषि...
नन्दस्य गोव्रजे रम्ये सुसुखेनैव तस्थतुः । एतस्मिन्नन्तरे देवि ! नारदो मुनिस...
सहसा मथुरां गत्वा कंसस्यान्तिकमाविशत् ।
राज्ञा सम्पूजितस्तत्र समासीनः शुभासने ॥२१६ ॥

सर्वं विज्ञापयामास चेष्टितं शार्ङ्गिणस्तदा । देवतानां समुद्योगं जन्म वै केशवस...
तथा च वसुदेवेन पुत्रनिक्षेपणं व्रजे । निधनं राक्षसानां च सर्पराजविवास...
धारणं गिरिवर्यस्य शतक्रतुसमागमम् । निवेदयित्वा कंसस्य सर्वं निरवशे...
प्रययौ ब्रह्मभवनं पूजितस्तेन रक्षसा । कंसः समुद्विग्नमना मन्त्रिभिः परिवे...
मन्त्रयामास तैः साकमात्मनो निधनं प्रति । तत्र बुद्धिमतांश्रेष्ठमक्रूरं धर्मवत्स...
उवाचाऽऽत्महितं कार्यं दानवेन्द्रो महाबलः ॥ २२१ ॥

कंस उवाच ।

मद्भयात्त्रिदशाः सर्वे शतक्रतुपुरोगमाः । विष्णोः समीपमागत्य भयार्त्ताः शरणं...
स तेषामभयं दत्वा भगवान्भूतभावनः । उत्पन्नो देवकीगर्भे मां हन्तुं मधुसूदनः...
वसुदेवोऽपिदुष्टात्मा वञ्चयित्वातु मां निशि । पुत्रंनिक्षिप्तवान्गेहे नन्दस्य सुहु...
बाल्येनैव दुराधर्षो विजघान महासुरान् । मां हन्तुमपि सन्नद्धो भवेदेव न सं...
स तु हन्तुं न वै शक्तः सेन्द्रैरपि सुरासुरैः । उपायेनैव हन्तव्यः समानीय मया...
मदोत्कटैस्तु मातङ्गैर्मल्लैश्च वरवाजिभिः । येन केनाऽप्युपायेन हन्तुं शक्यमिहै...
तस्मात्त्वं गोव्रजंगत्वा कृष्णं रामंच यादव !। सर्वान्गोपालवृद्धांश्च नन्दगोपपुर...
उपभोक्तुं धनुर्यागमिहाऽऽनय यदूत्तम ! ॥ २२८ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

महादेव उवाच ।

इत्युक्त्वा यदुश्रेष्ठो रथमारुह्य वीर्यवान् । प्रययौ गोकुलं रम्यं कृष्णसन्दर्शनोत्सुकः
महाभागवतश्रेष्ठो गवां मध्ये व्यवस्थितम् । ददर्श कृष्णमक्लिष्टमक्रूरो विनयान्वितः ॥
नीलनीरदसंकाशं सर्वाभरणभूषितम् । पद्मपत्रविशालाक्षं दीर्घबाहुमनामयम् ॥२३१॥
पीतवस्त्रेणसम्वीतं सर्वावयवसुन्दरम् । कौस्तुभोद्भासितोरस्कं रत्नकुण्डलशोभितम्
अरविन्दनलिप्ताङ्गं कस्तूरीतिलकाञ्चितम् । तुलसीवनमालाढ्यं वन्यपुष्पावतंसकम् ॥
गोपकन्यापरिवृतं दृष्ट्वा तत्र जनार्दनम् । पुलकाङ्कितसर्वाङ्गो हर्षाश्रुप्लुतलोचनः ॥
अवरुह्य रथात्तस्मात्प्रणनाम यदूद्वहः । हर्षात्समेत्य गोपालं परिणीय प्रणम्य च ॥
पादारविन्दसदृशे वज्रचक्राङ्कचिह्निते । स्वमूर्ध्निधृत्वा पादाब्जे प्रणनाम पुनःपुनः ॥
कैलासशिखराभासं नीलाम्बरधरं प्रभुम् । शरत्पूर्णेन्दुसदृशं मुक्तादामविभूषितम् ॥
बलरामं ततो दृष्ट्वा प्रणनाम स यादवः । हर्षेणोत्थाप्य तौ वीरौ परिगृह्य यदूत्तमौ ॥
समाजग्मतुर्वीरौ तेनाक्रूरेण वृष्णिना । नन्दगोपस्तु तं दृष्ट्वा यदुश्रेष्ठं समागतम् ॥
अभिगम्य महातेजा निवेश्य परमासने । अर्चयामासविधिवदर्घ्यपाद्यादिभिर्मुदा ॥
वस्त्रैः समर्हणैर्दिव्यैरर्चयामास भक्तितः । अक्रूरो रामकृष्णाभ्यां वस्त्राण्याभरणानिच
ददौ नन्दगोपाय यशोदायै च यादवः । पृष्ट्वा कुशलमव्यग्रमासीनस्तु कुशासने ॥
राजकार्याणि सर्वाणि सम्पृष्टः प्राह बुद्धिमान् ॥ २४२ ॥

अक्रूर उवाच ।

श्रीकृष्णो महातेजास्साक्षान्नारायणोऽव्ययः । देवतानांहितार्थाय साधूनां रक्षणायच
तारकविनाशाय धर्मसंस्थापनाय च । कंसादीनां तु दैत्यानां सर्वेषां निधनाय च ॥
प्रार्थितः सुरगणैर्मुनिभिश्च महात्मभिः । देवकीजठरे जातः प्रावृट्काले महानिशि
भयात्कंसस्य देवेशमानीयानकदुन्दुभिः । तत्र गेहे तदा रात्रौ पुत्रं निक्षिप्तवान्हरिम्
तस्मिन्नेव तु कालेऽपि यशोदातु यशस्विनी । कन्यां मायांशसंभूतांप्रासूततुशुभाननाम्
मया सम्मोहितं सर्वमिदं व्रजकुलं शुभम् । मूर्च्छितायां यशोदायाः शयने यदुपुङ्गवम्
कृष्णं निक्षिप्य तां कन्यामादाय स्वगृहं ययौ ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तां तु निक्षिप्य देवक्याः शयने बहिरागमत् ॥ २४९ ॥

सा रुरोद तदा क्षिप्रं देवकीशयनेस्थिता । तच्छ्रुत्वा सहसा कंसः कन्यामादाय

भ्रामयित्वा शिलापृष्ठे चिक्षेपोत्पत्य वीर्यवान् ।

समुत्थाय च सा कन्या सायुधाऽष्टभुजान्विता ॥

गगनस्था रुषा कंसं प्राह गम्भीरया गिरा ॥ २५१ ॥

कन्योवाच ।

योऽनन्तः सर्वदेवानामीश्वरः पुरुषोत्तमः । जातस्तव वधार्थाय गोत्रजे दानवा

अक्रूर उवाच ।

इत्युक्त्वा सा महामाया हिमवन्तं समाययौ । तदाप्रभृति दुष्टात्मा भयादुद्विग्न

दानवान्प्रेषयामास निधनाय महात्मनः । बालेनैव हताः सर्वे लीलयाऽनेन

अत्यद्भुतानि कर्माणि कृतवान्परमेश्वरः । गोवर्द्धनाद्रिधरणं नागराजविवास

समागमं महेन्द्रस्य निधनं सर्वरक्षसाम् । श्रुत्वा देवर्षिणा ख्यातमतीवभय

इतो नीत्वा महाबाहू रामकृष्णौ दुरासदौ । मदोत्कटैर्महानागैर्मल्लैर्वा हन्तुम

कृष्णस्याऽऽनयनार्थाय प्रेरयामास मामिह । वसुदेवस्य दुष्टात्मा निग्रहं कृ

एतत्सर्वं समाख्यातं चेष्टितं सुदुरात्मनः । उपभोक्तुं धनुर्यागं यूयं सर्वे व्रजौ

दध्याज्यादिगृहीत्वावै श्वोभूतेगन्तुमर्हथ । सहितारामकृष्णाभ्यां गोपाःसर्वे

कृष्णेन निहतः कंसो भविष्यति न संशयः । परित्यज्य भयं तस्माद्गमिष्यध्वं

ईश्वर उवाच ।

इत्युक्त्वास तदा क्रूरस्तूष्णीमासीत्सुबुद्धिमान् । तस्यतद्वचनं श्रुत्वादारुण

नन्दगोपमुखाः सर्वे गोपवृद्धा भयातुराः । जग्मुस्ते च महादुःखसागरं शोक

तानाश्वास्य हरिस्तत्र हृष्टाकमललोचनः । नभीःकार्येति सम्प्राहराक्षसं प्रति

विनाशाय प्रयास्यामिकंसस्यास्य दुरात्मनः । मथुरां सह रामेण भवद्भिः सह

तत्रहत्वा दुरात्मानं कंसंदानवपुङ्गवम् । सर्वांश्च राक्षसान्हत्वा पालयिष्यामि

तस्माच्छोकं परित्यज्य गच्छध्वं मथुरां पुरीम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

एवमुक्तास्तु हरिणा गोपा नन्दपुरोगमाः ॥ २६७ ॥

मुहुः परिष्वज्य मूर्ध्न्याघ्राणं प्रचक्रिरे । अप्रमेयानि कर्माणि विचार्य सुमहात्मनः॥

वचनाच्चैव गोपाःसर्वे गतव्यथाः । दुग्धदध्याज्ययुक्तानि शुचीनि विविधानि च

ानि सुहृद्यानि स्वादूनि मधुराणि च । अक्रूराय ददौ सौम्यं यशोदा भोजनं बहु

तो रामकृष्णाभ्यां नन्दाद्यैर्गोपसत्तमैः । सुहृद्भिर्बालवृद्धैश्च भवने समलङ्कृते ॥

यशोदया सौम्यं भोजनं कलुषापहम् । बुभुजे यादवश्रेष्ठो ह्यन्नं रोगापहं शुभम्॥

उषित्वा यथान्यायं दत्त्वाऽऽचमनमम्भसा । सकर्पूरं सताम्बूलं ददौ तस्मै दृढव्रता

अस्तं याते दिनकरे सन्ध्यामन्वास्य यादवः ।

सहितो रामकृष्णाभ्यां भुक्त्वा क्षीरान्नमुत्तमम् ॥ २७४ ॥

यामेव तदाऽक्रूरः शयनं समुपाविशत् । तस्मिंस्तु भवने श्रेष्ठे रम्ये दीपविराजिते

णेविचित्रपर्यङ्के नानापुष्पविराजिते । तस्मिञ्छेते हरिःकृष्णः शेषे नारायणोयथा

सहसाऽक्रूरो हर्षाश्रुपुलकाङ्कितः । विहाय तामसीं निद्रां सुश्रेयः समुदीक्ष्य वै

पादसम्वाहनं विष्णोश्चक्रे भागवतोत्तमः ।

एतावता मे साफल्यं जीवितंचसुजीवितम् ॥ २७८ ॥

त्रैलोक्यमैश्वर्यमिदं वै सुखमुत्तमम् । इदं राज्यमिदं धर्म्यमिदं मोक्षसुखं परम् ॥

यं मनसा स्मर्तं शिवब्रह्मादिदैवतैः । सनकाद्यैर्मुनीन्द्रैस्तु वसिष्ठाद्यैर्महर्षिभिः ॥

शस्यपदद्वन्द्वं शरदम्बुरुहोज्ज्वलम् । संस्पृष्टमिन्दिराश्लक्ष्णकराभ्यां सुसुखंपरम्

दिष्ट्या लब्धं मया विष्णोः श्रीपादाब्जयुगं शुभम् ।

इत्येवं वदतस्तस्य हरिपादाब्जसङ्गिनः ॥ २८२ ॥

ता साक्षणाद्रात्रिस्तद्ब्रह्मानन्दगौरवात् । ततःप्रभाते विमले दिवि देवगणोत्तमैः

यमानो बुबुधे तस्मात्तु शयनाद्धरिः । उपस्पृश्य यथान्यायं सह रामेण धीमता॥

पादयोर्मातुः प्रयाणं चाभ्यरोचयत् । समुत्थाप्य यशोदा तु दुःखहर्षसमन्विता

पूर्णमुखी पुत्रौ प्रेम्णा सम्परिषस्वजे । आशिषं प्रददौ देवी तनयाभ्यां दृढव्रता ॥

ससर्ज महावीरौ समालिङ्ग्य मुहुर्मुहुः । अक्रूरोऽपि यशोदायै प्रणम्य प्राह साञ्जलिः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अक्रूर उवाच ।

प्रयास्यामि महाभागे प्रसादं कुरुमेऽनघे !। एषकृष्णो महाबाहुः कंसं हत्वा महा...
सर्वस्यजगतो राजा भविष्यति न संशयः । तस्माच्छोकं परित्यज्य सुखीभव...

ईश्वर उवाच ।

इत्युक्त्वा तयाऽक्रूरो विसृष्टो यदुसत्तमः । सहितो रामकृष्णाभ्यामारुह्य रथं...
प्रययौ मथुरां शीघ्रं स्तूयमानोऽप्सरोगणैः । नन्दगोपमुखाः सर्वे गोपवृद्धास्त...
पुनर्गृहीत्वा दध्याज्यं फलानि विविधानि च । तं प्रयान्तं हरिंदृष्ट्वागोकुलाद्गोप...
अनुजग्मुर्विनिष्क्रान्तं रथस्थं मधुसूदनम् ।निवर्त्तयामास हरिस्ताः सर्वागोप...
शोकसन्तप्तहृदया विलेपुः कमलेक्षणम् । हा कृष्णकृष्णकृष्णेति गोविन्देत्य...
अश्रुपूर्णेक्षणादीना रुदन्त्यस्तत्रसंस्थिताः । अथाऽक्रूरोरथंदिव्यं चोदयामास...
सहितो रामकृष्णाभ्यां मथुरांप्रतियादवः । उत्तीर्य यमुनांशीघ्रं कूलेस्थाप्य र...
अवरुह्य रथात्तस्मात्स्नातुं तत्रोपचक्रमे । तथाचाऽऽवश्यकं कर्तुं निमज्ज्याऽ...
तत्राऽघमर्षणं सम्यग्जपन्भागवतोत्तमः । ददर्श तौ जले तत्र रामकृष्णौ पुन...
शरत्कोटीन्दुसङ्काशं नीलाम्बरधरंप्रभुम् । दिव्यचनन्दनदिग्धाङ्गमौक्तिकाभरण...
रक्तारविन्दनयनं पुण्डरीकावतंसकम् । रामं ददर्श कृष्णंच नीलनीरदसन्निभ...
दिव्यपीताम्बरधरं पुण्डरीकायतेक्षणम् । हरिचन्दनलिप्ताङ्गं नानारत्नवि...
दृष्ट्वा तत्र यदुश्रेष्ठो विस्मयं परमं गतः । उत्थाय स्यन्दने तत्र तौ ददर्श म...
पुनरप्यत्र निर्मज्ज्य जपन्मन्त्रद्वयं हरिम् । सुधाब्धौशेषपर्यङ्के रमया सहितं...
सनकाद्यैः स्तूयमानं सर्वैर्देवैरुपासितम् । दृष्ट्वा तस्मिञ्जले देवं विस्मयं पर...
तुष्टावाऽथ यदुश्रेष्ठो हरिं सर्वगमीश्वरम् ॥ २०४ ॥

अक्रूर उवाच ।

कालात्मने नमस्तुभ्यमनादिनिधनाय च । अव्यक्ताय नमस्तुभ्यमविकाराय...
भूतभर्त्रे नमस्तुभ्यं भूतव्याप्ताय ते नमः । नमस्ते सर्वभूतानां नियन्त्रे...
विकारायाविकाराय प्रत्यक्षपुरुषाय च । गुणभर्त्रे नमस्तुभ्यं नियमाय...

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कालादिनिर्भेदरहिताय परात्मने । अनन्ताय नमस्तुभ्यमच्युताय नमोनमः ॥
इन्द्राय नमस्तुभ्यं त्रयीनाथाय शार्ङ्गिणे । नारायणाय विश्वाय वासुदेवाय ते नमः
वे पुरुरूपाय शाश्वताय नमोनमः । पद्मनेत्राय नित्याय शङ्खचक्रधराय च ॥३१०
कोटिरविप्रख्यभूषणाञ्चितवर्चसे । हरये सर्वलोकानामीश्वराय नमोनमः ॥३११॥
वे सर्वजगतां बीजाय परमात्मने । सङ्कर्षणाय कृष्णाय प्रद्युम्नाय नमोनमः ॥
द्धाय धात्रे च विधात्रे विश्वयोनये । सहस्रमूर्त्तये तुभ्यं बहुमूर्द्धाङ्घ्रिबाहवे ॥
त्मने नित्याय पुरुषाय नमोनमः । नमस्ते नागपर्यङ्कशायिने सौम्यरूपिणे ॥
य नमस्तुभ्यं पीतवस्त्रधराय च । लक्ष्मीघनकुचाश्लेषविमर्दोज्ज्वलवक्षसे ॥
श्रीधराय नमस्तुभ्यं श्रीशायाऽनन्तरूपिणे ॥ ३१५ ॥

ईश्वर उवाच ।

काले पठेद्यस्तु देवं ध्यायन्सनातनम् । इमं स्तवं नरो भक्त्या महद्भिर्मुच्यते ह्यघैः
र्थफलं प्राप्य विष्णुसायुज्यमाप्नुयात् । एवमन्तर्जले देवं स्तुत्वा भागवतोत्तमः
यामास सजलैः कुसुमैश्च सुगन्धिभिः । कृतकृत्यस्तदाऽक्रूरो निर्गत्ययमुनाजलात्
रामकृष्णौ तु प्रणनामशुभान्वितः । तं दृष्ट्वा प्राह गोविन्दोविनीतंविस्मितंहरिः

श्रीकृष्ण उवाच ।

किमाश्चर्यं जले तस्मिन्दृष्टवानसि यादव ! ॥ ३२० ॥

ईश्वर उवाच ।

अक्रूरस्तु यदुश्रेष्ठं प्राह कृष्णं सुतेजसम् ॥ ३२१ ॥

अक्रूर उवाच ।

सर्वगतस्येश! महिम्नो जगतः प्रभो !। किमाश्चर्यं हृषीकेश! जगत्सर्वं त्वमेव हि ॥
पस्त्वं नभो वह्निस्त्वं भूमिरनिलस्तथा । चतुर्विधमिदं सर्वं जगत्स्थावरजङ्गमम्
नान्यद्वासुदेवजीमूतादमृतं यथा । त्वं यज्ञस्त्वंवषट्कारस्त्वमोंकारोहविस्तथा
सर्वदेवानामीश्वरः शाश्वतोऽव्ययः । नाकारणात्कारणाद्वा कारणाकारणात्परः
पाय देवेश ! शरीरग्रहणं तव । मत्स्यकूर्मवराहादिवैभवत्वमुपागतः ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पासि सर्वमिमं लोकं त्वमेव त्वन्मयं विभो ! ॥ ३२६ ॥

ईश्वर उवाच ।

इतिसंस्तुत्य गोविन्दं प्रणम्य जगतां पतिम् । आरुरोह रथं दिव्यं ताभ्यां सह...
ततस्तूर्णं समासाद्य मथुरां देवनिर्मिताम् । रामकृष्णौ पुरद्वारि निवेश्याऽन्तःपुरं...
तयोरागमनं तस्य निवेद्य नृपतेस्तदा । राज्ञा सम्पूजितस्तेन ततः स्वगृहमा...
अथ सायाह्नसमये रामकृष्णौ महाबलौ । परस्परं करौ गृह्य मथुरायां सम...
गच्छन्तौ च महावीर्यौ राजमार्गे यदूत्तमौ । ददृशतुर्महात्मानौ रजकं वस्त्र...
दिव्यवस्त्रवृतं राजगेहमायान्तमच्युतः । ययाचे तानि वस्त्राणि सह रामेण...
न दत्तवांस्तदा तस्मै रुषा वै वस्त्ररञ्जकः । बहूनि कटुवाक्यानि प्राह तत्राच्युतं...
ताडयामास तं कृष्णस्तलेनैव महाबलः । तत्रैव निहतो मार्गे वमन्वै रुधिरं...

तानि वस्त्राणि रम्याणि गोपालैः सह बान्धवैः ।
धारयामासतुर्वीरौ यथार्हं रामकेशवौ ॥ ३३५ ॥

मालाकारगृहं प्राप्य तेन दृष्टौ नमस्कृतौ । सुगन्धिभिर्दिव्यपुष्पैःपूज्यमानौ मु...
ददतुस्तौ वरं तस्मै वाञ्छितं यदुपुङ्गवौ । समागतौ पुनर्वीथ्यामायान्तींच शु...
कुब्जां स्त्रियं महाभागौ धृतचन्दनभाजनाम् । वक्राङ्गपृष्ठां वनितां दृष्ट्वागत्य...
प्रहसन्ती तदा ताभ्यां ददौ चन्दनमुत्तमम् । आदाय चन्दनं दिव्यमुपलिप्य...

तस्यैकान्ततरं रूपं दत्त्वाऽध्वनि समागतौ ।
निरीक्ष्यमाणौ योषिद्भिः सुकुमारौ शुभाननौ ॥ ३४० ॥

विविशतुर्महात्मानौ यज्ञशालां सहानुगैः । दृष्ट्वा समर्चितं दिव्यं कार्मुकं तत्र...
लीलयैव गृहीत्वाऽथ बभञ्ज मधुसूदनः । विभज्यमानं तच्चापं श्रुत्वा कंसः सु...
आहूय मल्लान्सूतांस्तु प्रमुखान्दैत्यपुङ्गवान् । विमृश्यमन्त्रिभिःप्राह चाणूरं दै...

कंस उवाच ।

रामकृष्णौ समायातौ सर्वदैत्यविनाशकौ । प्रभाते मल्लयुद्धेन हन्येतामि...
येनकेनाप्युपायेन हन्तव्यौ बलदर्पितौ । मदोत्कटैर्गजैर्वाऽपि मल्लमुख्यैश्च...

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ईश्वर उवाच।

[इत्यादिश्य] ततो राजा सानुजः सचिवैःसह। आरुरोह भयात्तूर्णं दिव्यप्रासादमूर्द्धनि
[द्वारे]षु सर्वमार्गेषु गजान्मत्तानयोजयत्। मल्लान्मदोत्कटान्नागान्स्थापयामास सर्वतः॥

ज्ञात्वा कृष्णोऽपि तत्सर्वं सह रामेण धीमता।
उवास रजनीं तत्र यज्ञगेहे सहानुगैः॥ ३४८॥

[ततो] रजन्यां व्युष्टायां प्रभाते विमलेसति। शयनादुत्थितौ वीरौ रामकृष्णौकृतोदकौ

स्वलङ्कृतौ च तौ भुक्त्वा संग्रामाभिमुखोत्सुकौ।
विनिर्गतौ गृहात्तस्मात्सिंहाविव गुहामुखात्॥ ३५०॥

[रा]जद्वारि स्थितं नागं हिमाद्रिशिखरोपमम्। नाम्ना कुवलयापीडं कंसस्य जयवर्द्धनम्
[स]कुञ्जरदर्पघ्नं महाकायं मदोत्कटम्। दृष्ट्वा तं च महानागं पञ्चास्य इव केशवः॥
[क]रेणैव करं गृह्य सम्यगुत्प्लुत्य लीलया। भ्रामयित्वाऽथ चिक्षेप धरण्यां धरणीधरः
[स] तु चूर्णितसर्वाङ्गो निनदन्भैरवं स्वनम्। पपात सहसा भूमौ ममार च महागजः॥
[हत्]वा दन्तौ समुत्पाट्य गृहीत्वा रामकेशवौ। मल्लैरायोधनं कर्तु रङ्गं विविशतुस्तदा
[त]तस्था दानवा दृष्ट्वा गोविन्दस्य पराक्रमम्। भीताः प्रविद्रुताःसर्वेराज्ञोऽन्तःपुरमाययुः
[क]पाटौ सुदृढौ बद्ध्वा तत्रतस्थुःसहस्रशः। दृढबन्धकपाटांस्तु दृष्ट्वा कृष्णस्तु लीलया

ताडयित्वा पदेनैव पातयामास वीर्यवान्।
तौ भग्नौ पातितौ तत्र सेनानीके व्यवस्थिते॥ ३५८॥

[त]तस्था निहताःसर्वे चूर्णिताङ्गशिरोऽधराः। ततः प्रविश्य भवनं कंसस्यास्य महाबलौ
[भ्रा]मयन्तौ महानागशृङ्गौ पीनौ रणोत्सुकौ। ददृशाते महात्मानौमल्लौ चाणूरमुष्टिकौ
[कं]सोऽपि दृष्ट्वा गोविन्दं रामं च सुमहाबलम्। भयमाविश्य चाणूरं प्राह मल्लवरं तदा

कंस उवाच।

[अ]स्मिन्नवसरे मल्ल! जहि गोपालबालकौ। विभज्य तव राज्यार्द्धमहं दास्याम्ययत्नतः

ईश्वर उवाच।

[त]स्मिन्नवसरे कृष्णो मल्लाभ्यां दृश्यते महान्। मध्ये वने च संग्रामे महामेरुरिवापरः॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कंसस्य दृष्टिविषये सम्वर्त्ताग्निरिवाऽच्युतः । स्त्रीणांचसाक्षान्मदनःपित्रोःशिशुरि
त्रिदशानां हरिरिव गोपालानां सखा यथा । वहुरूपेण ददृशुस्तत्र सर्वगतं हरि
वसुदेवस्तथाऽक्रूरो नन्दगोपो महामतिः । अन्यं प्रासादमारुह्य ददृशुः कदनं मह
स्त्रीभिरन्तःपुरस्थाभिर्देवकी तत्र संस्थिता । मुखं पुत्रस्य ददृशे साश्रुपूर्णेक्षणा
ताभिराश्वासिता देवी भवनान्तरमाविशत् । ततो देवगणाःसर्वे विमानस्था नम
तुष्टुवुर्जयशब्देन पुण्डरीकाक्षमच्युतम् । जहि कंसमितिप्राहुरुच्चैर्देवा मरु
एतस्मिन्नन्तरे तत्र तूर्यघोषनिनादिते । आसेदतुर्महामल्लौ यदुसिंहौ महावलौ ॥
चाणूरेण तु गोविन्दो मुष्टिकेन हलायुधः । युयुधाते महात्मानौ नीलश्वेताद्रिस
मल्लयुद्धविधानेन मुष्टिभिः पादताडनैः । वभूव कदनं घोरं देवानां च भयाव

चाणूरेण चिरं कालं क्रीडित्वाऽथ जनार्दनः ।
निष्पिष्य गात्रं मल्लस्य पातयामास लीलया ॥ ३७३ ॥

स पपात महीपृष्ठे सम्वमन्रुधिरं वहु । ममार च महामल्लो देवदानदुःखदः ॥
मुष्टिकेन तथा रामश्चिरकालमयुध्यत । मुष्टिभिस्ताडयामास तस्य वक्षसि वी
भिन्नास्थिस्नायुवन्धोऽसौ पपात धरणी तले । ततस्तुदुद्रुवुः सर्वे मल्ला दृष्ट्वा परा
कंसो महद्भयं तीव्रमाविशद्वेदनातुरः । एतस्मिन्नन्तरे वीरौ रामकृष्णौ दुरास
आरुह्य तु महात्मानौ चैत्यप्रासादमूर्जितम् । ताडयित्वा तलेनैव कंसं मूर्ध्नि ज
अपातयद्धरापृष्ठे प्रासादशिखराद्धरिः । स तु निर्भिन्नसर्वाङ्गो धरण्यां त्यक्तजीवि
कृष्णेन निहते कंसे रामोऽपि सुमहावलः । तस्याऽनुजं सुनामानं मुष्टिनैव जघान
धरण्यां पातयामास सानुजं धरणीधरः । हत्वा कंसं दुरात्मानं सानुजं रामके
पित्रोः समीपमागम्य भक्त्या चैव प्रणेमतुः । देवकीवसुदेवश्च परिष्वज्य मुहुर्मु
स्नेहेन मूर्ध्न्युपाघ्राणं चक्रतुः पुत्रलालसौ । तयोरुपरि देवक्याः स्तनौ क्षीरं वव
तत आश्वास्य पितरौ रामकृष्णौ वहिर्गतौ । एतस्मिन्नन्तरे देवि! देवदुन्दुभयो दि
विनेदुःपुष्पवर्षाणि ववृषुस्त्रिदशेश्वराः । स्तुत्वा मरुद्गणैर्दिव्यैर्नमस्कृत्य जनार्द
परं हर्षमनुप्राप्य लोकान्स्वान्स्वान्प्रपेदिरे । नन्दगोपं नमस्कृत्य गोपवृद्धांश्च

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

[...]ण सह धर्मात्मा मुदा सम्परिषस्वजे । बहुरत्नधनं तस्मै ददौ प्रीत्या जनार्दनः ॥
सर्वांस्तान्गोपवृद्धांश्च वस्त्रैराभरणादिभिः ।
बहुभिर्धनधान्यैश्च पूजयामास केशवः ॥ ३८८ ॥
[...]ष्टास्तेन कृष्णेन नन्दगोपपुरोगमाः । प्रययुर्गोव्रजं दिव्यं हर्षशोकसमन्विताः ॥
[...]गृहं समासाद्य रामकृष्णौ दुरासदौ । बन्धाच्च मोक्षयित्वाऽथ समाश्वास्य मुहुर्मुहुः
[...]तस्याभिषेकं तु तद्राज्ये मधुसूदनः । अकारयद्द्विजश्रेष्ठैः स कंसस्यौर्ध्वदैहिकम्
[...]प्रमुखान्राज्ये संस्थाप्य यदुपुङ्गवान् । राजानमुग्रसेनं तु कृत्वा धर्मेण मेदिनीम् ॥
पालयामास धर्मात्मा वसुदेवसुतो हरिः ॥ ४९२ ॥
श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे उमामहेश्वर-
[सं]वादे श्रीकृष्णचरिते कंसवधो नाम पञ्चचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४५॥

---

## षट्चत्वारिंशदधिकद्विशततमोऽध्यायः

[श्री]कृष्णचरिते रामकृष्णयोरुपनयनं सान्दीपनेर्गृहे तयोर्विद्याध्ययनं जरासन्धेन-
[यु]द्धं तस्मै जीवनदानं कालयवनेन युद्धं लीलां कुर्वतः कृष्णस्य गुहायाम्प्रवेशः
कालयवनं दृष्ट्वा मुचुकुन्दस्य जागरणं कालयवनमृत्युर्मुचुकुन्दस्य मोक्षणम्

महेश्वर उवाच ।

[उ]पनयनं नाम चकाराऽऽनकदुन्दुभिः । पुत्रयोर्वेदविधिना तस्मिन्वै रामकृष्णयोः
[आ]चार्येण हि गर्गेण संस्कृतौ रामकेशवौ । पण्डितैर्वैष्णवैर्दिव्यैः स्नापनैर्विमलैः शुभैः
[...]संस्कारकर्माणौ रामकृष्णौ महाबलौ । सान्दीपनेर्गृहं गत्वा नमस्कृत्य महात्मनः
[स]त्यवेदशास्त्राणि तस्मात्तौ द्विजपुङ्गवात् । मृतं पुत्रं समानीय ददतुस्तस्य दक्षिणाम्
[...]शो वचनं लब्ध्वा गुरोस्तस्मान्महात्मनः । तस्मै प्रणम्य मथुरां जग्मतुर्यदुपुङ्गवौ

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अथ कृष्णेन निहतं श्रुत्वा कंसं दुरासदम्। श्वशुरस्तस्य नृपतेर्जरासन्धो महा
अक्षौहिणीसहस्रैस्तु सेनानीकैर्महाबलैः। कृष्णं हन्तुं समागत्य रुरोध मथुरां
रामकृष्णौ महावीर्यौ निर्विगत्य पुरोत्तमात्। गजवाजिसमाकीर्णं तद्बलं
सस्मार वासुदेवस्तु पूर्वरूपं सनातनम्। तस्यस्मरणमात्रेण दारुको विष्णुसा
सुग्रीवपुष्पकं नाम समानीय महारथम्। वाजिभिर्दिव्यपुष्पाद्यैरुह्यमानं सना
दिव्यायुधैरुपेतं तं शङ्खचक्रगदादिभिः। वैनतेयपताकेन शोभितं देवदुर्जयम्।
अवनीं प्राप्य गोविन्दं प्रणम्य हरिसारथिः। प्रददौ स्यन्दनं शुभ्रं सायुधाश्वसम
दृष्ट्वा हर्षेण कृष्णोऽपि परिणीय महारथम्। आरुरोहाऽग्रजेनैव स्तूयमानो म
चतुर्भुजवपुर्भूत्वा शङ्खचक्रगदासिभृत्। किरीटी कुण्डली स्रग्वी संग्रामाभिमु
बलदेवोऽपि मुशलं लाङ्गलं गृह्य वीर्यवान्। तत्सैन्यं हन्तुमारेभे महेश्वरइवाप
दारुकश्च रथं शीघ्रं नोदयामास तद्रणे। तृणगुल्मलताक्रान्ते कानने ऽग्निर्
ततोगदाभिःपरिघैःशक्तिभिर्मुद्गरैस्तथा। तद्रथंछादयामासुर्जरासन्धस्य सैनि
चक्रेणैव हरिस्तूर्णं तानि चिच्छेद लीलया। बहूनि तृणकाष्ठानि महावह्निरिवा
ततः शार्ङ्गं समादाय सायकैरक्षयैः शितैः। चिच्छेद तानि सैन्यानि न प्राज्ञाय
चक्रच्छिन्नास्यकमलाः केचित्तत्र महाबलाः। गदयाचूर्णिताः केचित्केचिद
केचिच्चैवासिनाछिन्नास्तथाऽन्ये शरताडिताः। लाङ्गलाग्रहतग्रीवा मुशलाहत
क्षणेन तद्बलं सर्वं निहत्य मधुसूदनः। शङ्खंदध्मौ यदुश्रेष्ठो लयाशनिनिभ

शङ्खरावविनिर्भिन्नहृदयास्ते महाबलाः।
योधाः साश्वाः सनागाश्च पतितास्त्यक्तजीविताः॥ २३॥

अक्षौहिणीसहस्रं तु साश्वं सरथकुञ्जरम्। कृष्णेनैकेन निहतं निःशेषं तद
निहतं वासुदेवेन प्रहरार्द्धेन शार्ङ्गिणा। ततो देव गणाः सर्वे हर्षनिर्भरचेतस
ववृषुः पुष्पवर्षाणि साधुसाध्विति चाऽब्रुवन्। सर्वमप्यवनीभारं विमुच्य
संस्तूयमानस्त्रिदशैर्बभौ संग्राममूर्द्धनि। निहतं स्वबलं दृष्ट्वा जरासन्धोऽतिव
योद्धुमभ्याययौ तूर्णं बलदेवेन दुर्मतिः। तयोर्युद्धमभूद्घोरं संग्रामेष्वनिवर्तिनोः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

रामो लाङ्गलमादाय रथं तस्य ससारथिम् ।
विनिपात्य रणे शूरो गृहीत्वा तं महाबलम् ॥ २९ ॥

तस्य मुशलं तूर्णं तं हन्तुमुपचक्रमे । प्राणसंशयमापन्नं जरासन्धं नृपोत्तमम् ॥३०॥
तं रामेण बलिना सिंहेनेव महागजम् । दृष्ट्वा कृष्णोऽग्रजं प्राह न हन्तव्यइतिप्रभुः ॥
वयामास धर्मात्मा जरासन्धंमहामतिः । विमुच्यकृष्णवाक्येन शत्रुंसंकर्षणोऽव्ययः
नुजो रथमारुह्य मथुरां प्रविवेश ह । विनिर्जितो महावीरो रामेण मगधाधिपः ॥
रां व्रीडामुपागम्य पुरं स्वं न विवेश ह । स कालयवनं प्राप्य महावीर्यं बलान्वितम्
योर्वसुदेवस्य समाचष्ट पराक्रमम् । दानवानां वधं चैव कंसस्य निधनन्तथा ॥३५

अक्षौहिणीनां च वधं तथा स्वस्य पराजयम् ।
सर्वं निवेदयामास कृष्णस्य चरितं महत् ॥ ३६ ॥

तच्छ्रुत्वा यवनः क्रुद्धो महाबलपराक्रमैः । म्लेच्छकोटिसहस्रैस्तु सम्वृतो मदसंयुतैः ॥
मगधाधिपतेस्तस्य सहायार्थं महाबलः । तेनैव सहितस्तूर्णं जगाम मथुरां पुरीम् ॥
बलैराच्छाद्य पृथिवीं नानाजनपदान्विताम् । संनिवेश्य महासैन्यं रुरोध मथुरां पुरीम्

कृष्णोऽपि चिन्तयित्वाऽथ पौराणां कुशलं तदा ।
ययाचे सागरं भूमिं निवासार्थं जलस्य च ॥ ४० ॥

त्रिंशद्योजनविस्तीर्णं ददौ कृष्णस्य सागरः । असृजत्पयसां मध्ये तत्र द्वारवतींपुरीम्
बहुप्रासादसंयुक्तां हेमप्राकारतोरणाम् । नानामणिमयैर्दिव्यैर्गृहपङ्क्तिभिरावृताम् ॥
उद्यानैश्च तथा रम्यैस्तडागैर्बहुभिर्युताम् । असृजत्पुण्डरीकाक्षोयथेन्द्रस्याऽमरावतीम्
सुप्तान्मथुरायां तु पौरांस्तत्र जनार्दनः । उद्धृत्य सहसा रात्रौ द्वारवत्यां न्यवेशयत्
प्रबुद्धास्ते जनाःसर्वे पुत्रदारसमन्विताः । हेमहर्म्यतले विष्टा विस्मयं परमं ययुः ॥
बहुभिर्धनधान्यैश्च दिव्यवस्त्रविभूषणैः । परिपूर्णैर्निरातङ्कैर्गृहमुख्यैः समावृताः ॥४६ ॥

तस्मिन्प्रहृष्टाः सन्तस्थुर्दिवि देवगणा इव ।
यवनेन तदा योद्धुं रामकृष्णौ महाबलौ ॥ ४७ ॥

विनिर्ययतुरात्मेशौ मथुराया बहिस्तदा । रामो लाङ्गलमादाय मुशलं च महारथः ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

जघान समरे क्रुद्धो यवनानां महद्बलम् । कृष्णस्तु शार्ङ्गमासज्य बाणैरग्निशिखोपमैः
निर्ददाह बलं सर्वं म्लेच्छानां देवकीसुतः । निहतं स्वबलं दृष्ट्वा सकालयवनो रुषा
युयुधे वासुदेवेन गदया यवनेश्वरः । कृष्णोऽपि कदनं तेन कृत्वा चिरमनामयः ॥
विमुखःप्राद्रवत्तस्मात्सङ्ग्रामात्कमलेक्षणः । सोऽनुयातोऽतिवेगेनतिष्ठतिष्ठेति चक्र...
वेगात्कृष्णो गिरिगुहां प्रविवेश महामतिः । तत्र प्रसुप्तोराजाऽसौ मुचुकुन्दोमहामुनिः

अदृश्यस्तस्य नृपतेः संस्थितो भगवान्हरिः ।
यवनोऽपि महावीरो गदामुद्यम्य पाणिना ॥ ५४ ॥

कृष्णं हन्तुं समारब्धो गुहां तां प्रविवेश ह । दृष्ट्वा शयानं राजानंमत्वाकृष्णंजनार्दनम्
पादेन ताडयामास मुचुकुन्दं महामुनिम् । ततः प्रबुद्धो भगवान्मुचुकुन्दो महामुनिः
क्रोधात्संरक्तनयनो हुङ्कारं कृतवानसौ । तस्य हुङ्कारशब्देन तथा क्रोधनिरीक्षणात्
निर्दग्धो भस्मतां प्राप यवनस्त्यक्तजीवितः । ततस्तु कृष्णो ददृशे राजर्षेः पुरतः स्थितः
नीलोत्पलदलश्यामः पुण्डरीकनिभेक्षणः । शङ्खचक्रगदापाणिः पीतवासा जनार्दनः
दृष्ट्वा तं सहसोत्थाय राजर्षिरमितौजसम् । अहोभाग्यमहोभाग्यमित्युवाच महामुनिः

पुलकाङ्कितसर्वाङ्गः सानन्दाश्रुजलाकुलः ।
स्तुवन्वै जयशब्देन प्रणनाम मुहुर्मुहुः ॥ ६१ ॥

मुचुकुन्द उवाच ।

धन्योऽस्मि कृतकृत्योऽस्मि दर्शनात्परमेश्वर ! । अद्यमेसफलं जन्म जीवितंसफलं मम
नमस्ते वासुदेवाय जगन्नाथाय शार्ङ्गिणे । दामोदराय देवाय तेजसां निधये नमः
अधोक्षजाय हरये नृसिंहवपुषे नमः । राघवाय नमस्तुभ्यं पुण्डरीकेक्षणाय च ॥
अच्युताय विकाराय तथानन्तायतेनमः । गोविन्दाय नमस्तुभ्यं विष्णवेजिष्णवे नमः
नारायणाय श्रीशाय कृष्णाय परमात्मने । मुकुन्दाय नमस्तुभ्यं चतुर्व्यूहाय ते नमः
नमःपरमकल्याण ! नमस्ते परमात्मने । वासुदेवाय शान्ताय यदूनाम्पतये नमः ॥

महेश्वर उवाच ।

एवं स्तुत्वा तु गोविन्दं प्रणनाम पुनःपुनः । सन्तुष्टो भगवान्प्राह मुचुकुन्दंमहामुनिम्

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

श्रीभगवानुवाच।

वरं वृणीष्व राजर्षे ! यत्ते मनसि वर्त्तते ॥ ६९ ॥

महेश्वर उवाच।

सोऽपि मुक्तिंययाचेऽथपुनरावृत्तिवर्जिताम्। तस्मैददौ तदाकृष्णोदिव्यंलोकंसनातनम्
राजा तु मानुषं रूपं विहायाऽथ महामतिः। समानं रूपमास्थाय देवस्य परमात्मनः॥
वैनतेयं समारुह्य शाश्वतं पदमाविशत् ॥ ७१ ॥

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे उमामहेश्वर-सम्वादे श्रीकृष्णचरिते मुचुकुन्दमोक्षो नाम षट्चत्वारिंश-दधिकद्विशततमोऽध्यायः ॥ २४६ ॥

---

# सप्तचत्वारिंशदधिकद्विशततमोऽध्यायः

सजरासन्धपराजयं द्वारकांगत्वानानाराजकन्याभिःकृष्णस्यविवाहो रुक्मिणी-स्वयम्वरेरुक्मिविरोधेनविदर्भसेनाविध्वंसनम्

रुद्र उवाच।

हत्वाऽथ यवनं तत्र मुचुकुन्देन धीमता। दत्त्वा तस्मै वरं मुक्तिं निष्क्रान्तो यदुनन्दनः
हतं च यवनं श्रुत्वा जरासन्धःसुदुर्मतिः। युयुधे रामकृष्णाभ्यां स्वबलेन समावृतः॥
कृष्णेन निहतं सैन्यं सर्वं तस्य दुरात्मनः। सोऽपि रामेण सङ्ग्रामेद्वन्द्वयुद्धं चकार ह
मुसलेनाहनद्रामो वक्षस्यस्य दुरात्मनः। स पपात महीपृष्ठे मूर्च्छितो मगधाधिपः॥
चिरेण लब्ध्वा सञ्ज्ञां तु विह्वलाङ्गो भयातुरः। न शशाक रणे योद्धुं रामेणमगधेश्वरः
विमुखः प्राद्रवत्तूर्णं हतशेषबलानुगः। अजेयाविति तौ मत्वा रामकृष्णौ महाबलौ॥
तयोर्विरोधं त्यक्त्वाऽथ नगरीं स्वां विवेश ह।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अथ तौ वसुदेवस्य तनयौ सह सेनया ॥ ७ ॥

मथुरां त्यज्य नगरीं प्रविष्टौद्वारिकां पुरीम् । इन्द्रेण प्रेषितोवायुःसभांतत्र दिवौ
कृष्णाय प्रददौ प्रीत्या निर्मितां विश्वकर्मणा । वज्रवैडूर्यरचितां वह्नासनविचि
नानारत्नमयैर्दिव्यैः स्वर्णच्छत्रैर्विराजिताम् । तां प्राप्य रम्यांतु सभामुग्रसेनाद्
मोदन्ते नैगमैः सार्द्धं दिविदेवगणा इव । इक्ष्वाकुवंशसम्भूतो रैवतो नाम
कन्यां दुहितरं स्वस्य सर्वलक्षणसंयुताम् । रामाय प्रददौ प्रीत्या रैवतीं नामना
उपयेमे विधानेन स रामस्तां च रैवतीम् । रमयामास च तया शच्येव तु सुरे

विदर्भराजो धर्मात्मा भीष्मको नाम धार्मिकः ।

बभूवुस्तस्य पुत्रास्तु रुक्मप्रभृतयः शुभाः ॥ १४ ॥

तेषामवरजा कन्या रुक्मिणी वरवर्णिनी । कमलांशेन सम्भूता सर्वलक्षणसं
राघवत्वेऽभवत्सीतारुक्मिणीकृष्णजन्मनि । अन्येष्वेवावतारेषुविष्णोरेषासहा
हिरण्यकहिरण्याक्षौ सम्भूतौ द्वापरे पुनः । शिशुपालो दन्तवक्र इतिनाम सम
चैद्यान्वये समुद्भूतौ महाबलपराक्रमौ । रुक्मिणीं शिशुपालाय दातुमैच्छत
तं तु नैच्छत्पतिं सा तु शिशुपालं शुभानना । बाल्यात्प्रभृति वै विष्णुमनुरक्ता
उद्दिश्य कृष्णम्भर्त्तारं सुराणामर्चनंसदा । चकाररुक्मिणीकन्या दानानिविवि
व्रतचर्यापरा भूत्वा ध्यायन्ती पुरुषोत्तमम् । आत्मेशं स्वस्य भर्त्तारमुवास पितु
कर्त्तुं तां शिशुपालाय विवाहं पार्थिवोत्तमः । चकार यत्नं पुत्रेण रुक्मिणा सह
पुरोहितसुतं विप्रं प्रेषयामास रुक्मिणी । उद्दिश्य कृष्णं भर्त्तारं स तूर्णं द्वारका

समेत्य कृष्णं रामं च ताभ्यां विधिवदर्चितः ।

एकान्ते सर्वमाचष्ट रुक्मिणीभाषितं तयोः ॥ २४ ॥

तच्छ्रुत्वा रामकृष्णौ तु सह विप्रेण धीमता । सर्वशस्त्रास्त्रसम्पूर्णं रथमाका
आरुह्य सूतमुख्येन दारुकेण महात्मना । विदर्भनगरीं तूर्णं जग्मतुः पुरुषोत्तमौ
राजानःसर्वराष्ट्रेभ्यो विवाहं द्रष्टुमागताः । जरासन्धमुखाः सर्वे शिशुपाल
तस्मिन्नुद्वाहसमये रुक्मिणी रुक्मभूषणा । निःसृताऽर्चयितुं दुर्गां सखीभिर्नि

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तस्मिन्नेव काले तु संप्राप्तो देवकीसुतः । रथस्थां तां च जग्राह बलवान्मधुसूदनः ॥
सहसा रथमारोप्य ययौ तूर्णं स्वमालयम् । ततः क्रोधसमाविष्टा जरासन्धमुखान्नृपाः
रुक्मिणा राजपुत्रेण युद्धाय समुपस्थिताः । अनुयाता हरिं क्रुद्धाश्चतुरङ्गबलान्विताः॥
बलभद्रो महाबाहुरवरुह्य रथोत्तमात् । लाङ्गलं मुशलं गृह्य निजघान क्षपादरीन् ॥३२
रथानश्वान्महानागांस्तथा पादचरानपि । लाङ्गलमुशलाभ्यां वै निजघान बलाद्रणे ॥
तस्य लाङ्गलपातेन चूर्णिता रथपङ्क्तयः । नागाश्च पतिता भूमौ वज्रेणेव महीधराः॥
भिन्नमस्तकाः सर्वे वमन्तो रुधिरं बहु । क्षणेनैव हतं सैन्यं बलरामेण वै तदा॥३५
साश्वं सनागं सरथं सपदाति महारणे । समन्तात्समरे तत्र सुस्रुवुः शोणितापगाः ॥
भग्नाः पार्थिवाः सर्वे दुद्रुवुर्भयपीडिताः । कृष्णेन कदनं चक्रे रुक्मी क्रोधवशाद्बली।

धनुरुद्यम्यबाणौघैस्ताडयामास शार्ङ्गिणम् ।
ततः प्रहस्य गोविन्दः शार्ङ्गमादाय लीलया ॥ ३८ ॥

बाणेनैकेन बाणेन रथाश्वांस्तस्य सारथिम् । रथं ध्वजं पताकां च चिच्छेद धरणीधरः
विरथः खड्गमादाय धरण्यां स उपस्थितः । कृष्णस्तु खड्गं चिच्छेदबाणेनैकेन वीर्यवान्
ततः स मुष्टिमुद्यम्य कृष्णं वक्षस्यताडयत् । तं जग्राह रणे वीरं निबध्य निबिडं हरिः
तीक्ष्णं क्षुरप्रमादाय प्रहसन्मधुसूदनः । शिरसोमुण्डनं कृत्वा मुमोच च जनार्दनः ॥
स तु शोकसमाविष्टो निःश्वसन्नुरगो यथा । आविवेशपुरंस्वीयं स तु तत्रैवचाऽवसत्
इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे उमामहेश्वर-
सम्वादे श्रीकृष्णचरिते विदर्भसेनाविध्वंसनं नाम
सप्तचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४७ ॥

---

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# अष्टाचत्वारिंशदधिकद्विशततमोऽध्यायः

## श्रीकृष्णचरिते रुक्मिणीविवाहवर्णनम्

रुद्र उवाच ।

अथ कृष्णस्तु रामेण रुक्मिण्या दारुकेण च ।

दिव्यं स्यन्दनमारुह्य ययौ तूर्णं स्वमालयम् ॥ १ ॥

ततः प्रविश्य नगरीं द्वारकां देवकीसुतः । शुभेऽह्नि शुभलग्ने वै वेदोक्तविधिना
उपयेमे नृपसुतां रुक्मिणीं रुक्मभूषिताम् । तस्मिन्नुद्वाहसमये देवदुन्दुभयो
विनेदुः पुष्पवर्षाणि ववृषुः सुरसत्तमाः । वसुदेवोग्रसेनौ च तथाऽक्रूरो यदू
बलभद्रो महातेजा ये चान्ये यदुपुङ्गवाः । चक्रुः कृष्णस्य रुक्मिण्या विवाहं सु
नन्दगोपोऽथ गोपालैर्गोपवृन्दैः समागतः । स्वलङ्कृताभिर्योषाभिर्यशोदा च
वसुदेवस्त्रियः सर्वा देवकीप्रमुखास्तथा । रैवतीरोहिणी देवी याश्चान्याः पु
सर्वाण्युद्वाहकर्माणि चक्रुर्हर्षसमन्विताः । सुराणामर्चनं प्रीत्या कर्त्तव्यं तत्र
वृद्धाभिर्नृपयोषिद्भिश्चकार विधिना तदा । सर्वमौद्वाहिकं कर्म उत्सवं हि द्वि
ब्राह्मणान्भोजयामास वस्त्रैराभरणैः शुभैः । उग्रसेनादयस्तत्र राजानश्च सु

नन्दगोपादयो गोपा यशोदाद्याश्च योषितः ।

बहुभिः स्वर्णरत्नाद्यैर्वासोभिः सविभूषणैः ॥ ११ ॥

पूजिताः सम्प्रहृष्टास्ते तद्विवाहमहोत्सवे । तौ दम्पती समाश्लिष्य प्रणतौ
वेदविद्भिर्विप्रमुख्यैराशीर्भिरभिनन्दितौ । तस्यां विवाहवेद्यां तु शुशुभाते
ब्राह्मणेभ्योऽथ वृद्धेभ्यो राजन्यःसह भार्यया । ववन्दे देवकीपुत्रो ज्येष्ठस्य
एवमौद्वाहिकं सर्वंनिर्वर्त्य मधुसूदनः । व्यसर्जयन्नृपान्सर्वान्ये च तत्र समाग
प्रस्थिता हरिणा तत्र पूजिता नृपपुङ्गवाः । ब्राह्मणाः सुमहात्मानो निर्ययुः
रुक्मिण्या सह धर्मात्मा देवकीनन्दनोऽव्ययः । उवास सुसुखेनैव दिव्यहर्म्ये

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

...ता वं रमयामास नारायणइव श्रिया। संस्तूयमानो मुनिभिर्दिवि देवगणैरपि ॥१८
...त्यहनि हृष्टात्मा सुखेनैव जनार्दनः। अथोवास सुशोभायां द्वारवत्यां सनातनः ॥
इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे
उमामहेश्वरसम्वादे श्रीकृष्णचरिते रुक्मिणीविवाहकथनं
नामाष्टाचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४८ ॥

---

## एकोनपञ्चाशदधिकद्विशततमोऽध्यायः

...सत्यभामाविवाहपूर्वकंस्यमन्तकमण्युपाख्यानं सत्राजितपुत्रस्यप्रसेनस्यवने-
...सिंहद्वारामृत्युः स्यमन्तकमणिहरणञ्च जाम्ववता सिंहवधोमणिप्रापणञ्च मणि-
...हरणायकृष्णोपरिजनापवादस्तमपाकर्त्तु मण्यनुसन्धित्सोःकृष्णस्यजाम्ववता-
...युद्धं जाम्ववतःपराजयःपूर्वजन्मनिरामकृतांप्रतिज्ञांस्मारंस्मारं जाम्ववताकृष्ण-
...प्रार्थनं जाम्ववतीपरिणयः, मद्रराजसुतानांकृष्णेनविवाहोनरकासुरवधः सत्य-
...भामायाःशचीकृतापमानवर्णनं तत्प्रतिशोधयितुंगरुडोपरिकृष्णद्वाराकल्पवृक्षा-
नयनमिन्द्रद्वाराकृष्णप्रार्थनं शचीकृतंसत्यासम्मानम्

श्रीरुद्र उवाच।

सत्राजितस्य तनया नाम्ना सत्या यशस्विनी।
पृथिव्यंशेन सम्भूता भार्या कृष्णस्य चाऽपरा ॥ १ ॥

...सूर्यस्वतीमहाभागा कालिन्दीनामनामतः। तृतीया तस्य भार्या सानीलांशेनसमुत्थिता
...विन्दानुविन्दस्यसुतां मित्रविन्दां शुचिस्मिताम्। स्वयम्वरस्थितांकन्यामुपयेमेजनार्दनः
...वीर्येणैकेन बद्ध्वा तान्वृषभान्सप्तदुर्मदान्। तां वीर्यशुल्कां जग्राह पद्मपत्रायतेक्षणः ॥
...सत्राजितो महारत्नं स्यमन्तकाख्यं महीपतिः। अनुजाय ददौ सोऽयं प्रसेनाय महात्मने
...ययाचे तं मणिवरं कदाचिन्मधुसूदनः। उवाच वासुदेवं तं प्रसेनः प्रसभं तदा ॥ ६ ॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रसेन उवाच ।

भारानष्टसुवर्णानां नित्यं प्रसवते मणिः । तस्मात्कस्य न दातव्यंस्यमन्तारव्य

महादेव उवाच ।

कृष्णस्तु तदभिप्रायं ज्ञात्वा तूष्णीमुवासह । कदाचिन्मृगयां कर्तुं कृष्णः सर्वै

प्रविवेश महारण्यं प्रसेनाद्यैर्महाबलैः । प्रत्येकं वै मृगान्हन्तुमनुयाताः सहस्र

एकएवमहारण्ये प्रसेनो दूरमागतः । तं सिंहो द्रुतमासाद्य हत्वा रत्नं जहार

तं सिंहं जाम्बवान्हत्वा मणिं गृह्य महाबलः ।

प्रविवेश विलं तूर्णं दिव्यस्त्रीभिर्निषेवितम् ॥ ११ ॥

तस्मिन्नस्तं गते सूर्ये वासुदेवः सहानुगः । चतुर्थ्यामुदितं चन्द्रं दृष्ट्वा स्वं पुर

ततः सर्वे पुरजनाः कृष्णं प्रोचुःपरस्परम् । हत्वा प्रसेनं गोविन्दो मृगव्याजेन

स्यमन्तकं मणिवरमग्रहीदविशङ्कया । तदाकर्ण्य हरिस्तस्मिन्द्वारकाजनमा

अज्ञलोकभयात्सर्वैर्यदुभिर्गहनं ययौ । दर्शयामास तान्सर्वान्सिहेन निहतं वने

लब्धाऽऽत्मशुद्धिस्तत्रैव संस्थाप्य महतीं चमूम् ।

एकः शार्ङ्गगदापाणिर्जगाम गहनं वनम् ॥ १६ ॥

तस्मिन्गुहामुखे सिंहं हतं जाम्बवता तदा । दृष्ट्वा महाविलं कृष्णः प्रविवेशाऽ

तत्र नानामणिवरद्योतिते विमले गृहे । सुतं जाम्बवतो धात्री दोलामारोप्य

दोलामुखे मणिं धृत्वा दोलयन्गायतीमुदा । सिंहःप्रसेनमवधीत्सिहो जाम्ब

सुकुमारकमारोदीस्तव ह्येष स्यमन्तकः । तच्छ्रुत्वावासुदेवोऽथ शङ्खंदध्मौ

तेन नादेन महता निर्जगामाऽत्र जाम्बवान् । तयोर्युद्धमभूद्घोरं दशरात्रं

मुष्टिभिर्वज्रकल्पैश्च सर्वभूतभयावहम् । कृष्णस्य बलवृद्धिं च तथाऽऽत्मबल

अवेक्ष्य पूर्ववचनं बुबुधे परमात्मनः । सोऽयं रामोऽवतीर्णोऽत्र धर्मत्राणाय

सआगतो मम स्वामी दातुं मम मनोरथम् । एवं ज्ञात्वाऽथ ऋक्षेशो निर्वर्त्य

प्राञ्जलिः प्राह गोविन्दं को भवानिति विस्मयात् ।

निर्वर्त्य कदनं शौरिः प्रोचे गम्भीरया गिरा ॥२५ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

श्रीकृष्ण उवाच।

[अ]हं वसुदेवस्य वासुदेव इतीरितः। ममरत्नं स्यमन्ताख्यं हृतवांस्त्वं सुनिर्भयः॥
तद्दीयतां च शीघ्रं मे अन्यथा वधमेष्यसि॥ २६॥

महादेव उवाच।

[श्रु]त्वाजाम्बवान्हृष्टःप्रणनामाऽथदण्डवत्। परिणीय नमस्कृत्य विनयात्प्राहकेशवम्

जाम्बवानुवाच।

[ध]न्योऽस्मि कृतकृत्योऽस्मि तवसन्दर्शनात्प्रभो!। दासोऽहंपूर्वभावेन तव देवकिनन्दन!
[भ]वानसि गोविन्द! कदनं पूर्वकाङ्क्षितम्। मयेदं कदनं मोहाद्यत्कृतं स्वामिना त्वया
तत्क्षम्यतां जगन्नाथ! करुणाकर! शाश्वत!॥ २६॥

महादेव उवाच।

[इ]त्युक्त्वा प्रणतो भूत्वा नमस्कृत्य पुनःपुनः। नानारत्नमये पीठे निवेश्य विनयात्प्रभुम्
[प]दाब्जनिभौ पादौ प्रक्षाल्य शुभवारिणा। मधुपर्कविधानेन पूजयित्वा यदूद्वहम्॥
[व]स्त्राभरणैर्दिव्यैः पूजयित्वा विधानतः। पुत्रींजाम्बवतीं नामकन्यांलावण्यसंयुताम्
[मणि]रत्नं ददौतस्मैभार्यार्थममितौजसे। अन्यैश्च मणिमुख्यैश्चस्यमन्ताख्यंददौमणिम्
[वि]वाह्य तां कन्यां प्रहृष्टः परवीरहा। ददौ तस्मै परां मुक्तिं प्रीत्या जाम्बवते हरिः
[गृ]हीत्वा तनयांतस्यकन्यां जाम्बवतीम्मुदा। विनिर्गत्यबिलात्तस्मात्प्रययौद्वारकांपुरीम्
[सत्रा]जिते ददौ रत्नं स्यमन्ताख्यं यदूत्तमः। दुहित्रे प्रददौ सोऽपिकन्यायैमणिमुत्तमम्
[मा]सि भाद्रपदे शुक्ले चतुर्थ्यांचन्द्रदर्शनम्। मिथ्याभिदूषणंप्राहुस्तस्मात्तत्परिवर्जयेत्
[प्र]ाप्य दर्शनं तत्र चतुर्थ्यां शीतगोर्नरः। स्यमन्तस्यकथांश्रुत्वामिथ्यावादात्प्रमुच्यते
सुलक्षणा नाग्नजिती सुशीला च यशस्विनी।
मद्रराजसुतास्तिस्रः कन्यकास्ताः शुभाननाः॥ ३९॥
[स्व]यम्वरस्थास्ताः कृष्णं वरयामासुरुज्ज्वलाः। एकस्मिन्दिवसे तास्तु उपयेमे यदूद्वहः
अष्टौमहिष्यस्ताः सर्वा रुक्मिण्याद्या महात्मनः।
रुक्मिणी सत्यभामा च कालिन्दी च शुचिस्मिता॥ ४१॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मित्रविन्दाजाम्बवतीनाग्नजित्यः सुलक्षणा। सुशीलानामतन्वङ्गी महिर्षाचार्ग्रमा
भूमिपुत्रो महावीर्यो नरको नाम राक्षसः। जित्वा देवपतिं शक्रं सर्वांश्चैव सुरा
अदित्यादेवमातुश्च कुण्डले च सुवर्चसी। बलाज्जग्राह देवानां रत्नानि विविधा
ऐरावतं महेन्द्रस्य तथैवोच्चैःश्रवो हयम्। माणिक्यादिं धनेशस्य शङ्खपद्मनिधि
स्त्रियश्चाप्सरसश्चैव हृतवान्क्षितिनन्दनः। वज्रादिहेतीस्तेषांच बलाद्धृत्वादिवौक
तैरेव ससुरान्हत्वा सभां मयविनिर्मिताम्। उवास व्योमगे दिव्ये नगरे विम
ततो देवगणाः सर्वे पुरस्कृत्य शचीपतिम्। भयार्ताःशरणं जग्मुःकृष्णमक्लिष्टका
कृष्णोऽपि तदुपश्रुत्य सर्वं नरकचेष्टितम्। देवानामभयं दत्त्वा वैनतेयं व्यचिन्त
तस्मिन्क्षणे हरेस्तस्य वैनतेयो महाबलः। प्राञ्जलिः पुरतस्तस्थौ सर्वदेवनमस्
तमारुह्य द्विजश्रेष्ठं सत्यया सह केशवः। संस्तूयमानो मुनिभिः प्रययौ राक्षस

प्रदीप्यमानमाकाशे यथा सूर्यस्य मण्डलम्।
राक्षसैर्बहुभिर्युक्तं दिव्यैराभरणैर्युतम्॥ ५२॥

ददर्श तत्पुरं कृष्णो दुर्भेद्यं त्रिदशैरपि। तदावरणजालानि वीक्ष्य चक्रेण वीर
चिच्छेद तेजसा दीप्त्या तमांसीव दिवाकरः। ततस्ते राक्षसाःसर्वे शतशोऽथस
उद्यम्य शूलानि तदा युद्धायाऽभिमुखंययुः। ततस्तु तोमरैर्दिव्यैर्भिण्डिपालैः मु
केशवं ताडयामासुः पलालैरिव पावकम्। ततस्तु शार्ङ्गमादाय भगवान्गरुडध्व
दिव्यशस्त्राणि चिच्छेद बाणैरग्निशिखोपमैः। तेषां शिरोधरान्नागानश्वांश्चैवतथ
चक्रेणैव प्रचिच्छेद वीर्यवान्पुरुषोत्तमः। केचिच्चक्रेण संछिन्नास्तथाऽन्येशार्ङ्ग
गदयानिहताः केचिद्राक्षसास्तद्रणाजिरे। एवं ते राक्षसाः सर्वे पातिता धरण
शक्रोत्सृष्टेन वज्रेण निर्भिन्ना इव भूधराः। निहत्य दानवान्सर्वान्पुण्डरीकाक्ष

पाञ्चजन्यं महाशङ्खं प्रदध्मौ पुरुषोत्तमः।
ततः स नरको दैत्यो धनुरादाय वीर्यवान्॥ ६१॥

दिव्यं स्यन्दनमारुह्य ययौ युद्धाय केशवम्। तयोर्युद्धमभूद्घोरं तुमुलं लोमह
बहुभिर्बाणसाहस्रैर्मेघयोरिव वर्षतोः। ततोऽर्द्धचन्द्रबाणेन वासुदेवः सनातन

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

...राक्षसमुख्यस्य धनुश्चिच्छेद वीर्यवान् । ससर्जास्त्रं महादिव्यं नरकस्यमहोरसि
...तेन भिन्नहृदयः पपातोर्व्यां महासुरः । शक्रवज्रेण निर्भिन्नो महाचल इवोन्नदन् ॥
...गम्य ततः कृष्णः समीपं तस्य रक्षसः । भूम्या सम्प्रार्थितःप्राह वरंवृण्वितिराक्षसम्
स चाऽऽह राक्षसः कृष्णं गरुडोपरि संस्थितम् ॥ ६६ ॥

नरक उवाच ।

...कृत्यं वरेणाऽस्ति नरकोऽहं तथापि च । अन्यलोकहितार्थाय वृणेऽहं वरमुत्तमम्
...हनि तु मे कृष्ण सर्वभूतेश्वरेश्वर !। ये नरा मङ्गलस्नानं कुर्वन्ति मधुसूदन ! ॥
न तेषां निरयप्राप्तिर्भवत्वेवं भयापह ! ॥ ६८ ॥

महादेव उवाच ।

...मस्त्विति गोविन्दो ददौ तस्मै वरं प्रभुः । ततःपश्यन्हरेः साक्षाच्छरदम्बुजसन्निभौ
...णौ वज्रवैडूर्यनूपुराभ्यां विराजितौ । अर्चितौ विधिरुद्राद्यैस्त्रिदशैर्मुनिभिस्तथा ॥
...त्वा प्राणान्महीपुत्रः सारूप्यमगमद्धरेः । ततो देवगणाःसर्वे हर्षनिर्भरमानसाः ॥
...पुः पुष्पवर्षाणि तुष्टुवुश्च महर्षयः । प्रविश्य नगरं तस्य कृष्णः कमललोचनः ॥
...त्तेन गृहीतानि रत्नानि त्रिदिवौकसाम् । कुण्डले देवमातुश्च तथैवोच्चैःश्रवोहयम्
...वतं गजश्रेष्ठं प्रदीप्तं मणिपर्वतम् । सर्वमेतद्यदुश्रेष्ठो ददौ शक्राय वज्रिणे ॥ ७४ ॥
...र्यवान्सर्वराष्ट्रेभ्यो जित्वाऽसौनरकोवली । कन्याषोडशसाहस्रं हृतवान्नरकस्तदा॥
...रुद्धास्तु ताः सर्वा नरकान्तःपुरे तदा । दृष्ट्वा कृष्णं महावीर्यं कन्दर्पशतसन्निभम् ॥
...रंवव्रिरे सर्वाः पतिं विश्वस्य सर्वगम् । एतस्मिन्नेवकालेतुगोविन्दोऽनन्तरूपवान्
...सां करग्रहं चक्रे विधिना पुरुषोत्तमः । नरकस्य सुताः सर्वे पुरस्कृत्य महीं तदा ॥
गोविन्दं शरणं जग्मुस्तानरक्षद्घृणानिधिः ।
तद्राज्ये स्थाप्य तान्सर्वान्पृथिव्या वाक्यगौरवात् ॥ ७९ ॥
...द्रं विमानमारोप्य ताश्च सर्वावरस्त्रियः । देवदूतैर्महाभागैर्द्वारवत्यां न्यवेशयत् ॥८०
...नेयं समारुह्य सत्यया सह केशवः । स्वर्लोकं प्रययौ तूर्णं द्रष्टुं तां देवमातरम् ॥
...विश्य नगरीं तत्र देवराजो जनार्दनः । अवरुह्य द्विजश्रेष्ठात्पत्न्या सह महाबलः ॥८२

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ववन्दे मातरं देवीमदितिं त्रिदिवौकसाम् । सम्परिष्वज्य बाहुभ्यामदितिःपुत्र
निवेश्यासनमुख्ये तु पूजयामास भक्तितः । आदित्या वसवो रुद्राः शतक्रतुपुरो
तत्र सम्पूजयामासुर्यथार्हं परमेश्वरम् । शचीगृहं समागम्य सत्यभामायशस्वि

श्या समर्चिता देव्या समासीना सुखासने ।

तस्मिन्काले सुपुष्पाणि पारिजातस्य किङ्कराः ॥ ८६ ॥

शच्यै देव्यै ददुः प्रीत्या सहस्राक्षेणचोदिताः । प्रगृह्यतानि पुष्पाणि शचीदेवी
नीलनिर्मलकेशे च बबन्ध स्वयमूर्धनि । अवमान्य शची तत्र सत्यभामां यश
अनर्हामानुषी चेयं देवार्हं कुसुमं शुभम् । इतिकृत्वा मतिं तस्यै न ददौ कुसुम
विनिष्क्रम्य पुरात्तस्मात्सत्या कोपसमन्विता । समेत्य कृष्णंभर्त्तारमुवाचक

सत्योवाच ।

एषा शची यदुश्रेष्ठ! पारिजातेन गर्विता । अदत्त्वा मम गोविन्द! बबन्ध स्वम

महादेव उवाच ।

सत्याया भाषितं श्रुत्वा वासुदेवो महाबलः । उत्पाट्य पारिजातंतु निवेश्य
आरुह्य सत्यया तूर्णं वैनतेयं महाबलम् । प्रययौ द्वारकां रम्यां नगरीं देव
ततः कोपसमाविष्टो देवराजः शतक्रतुः । रुद्रैर्वसुभिरादित्यैः साध्यैश्च मरु
ऐरावतं समारुह्य ययौ युद्धाय केशवम् । ततो देवगणाः सर्वे परिवार्य ज
ववृषुः शस्त्रवर्षाणिमेघाइव महाचलम् । कृष्णश्चिच्छेद चक्रेणतान्यस्त्राणिदि
वैनतेयस्तु संक्रुद्धः पक्षपातेन वीर्यवान् । पातयामास तान्देवांस्तालानिव म
ततः क्रुद्धः सहस्राक्षो देवानामीश्वरः प्रभुः । मुमोच सहसा दीप्तं वज्रं कृष्ण
जग्राह कृष्णस्तं वज्रं हस्तेनैकेन लीलया । ततो भीतः सहस्राक्षो नागेन्द्र

प्राञ्जलिः पुरतः स्थित्वा नमस्कृत्य जनार्दनम् ।

प्राह गद्गदया वाचा स्तुत्वा स्तुतिभिरेव च ॥ १०० ॥

इन्द्र उवाच ।

देवयोग्यमिदं कृष्ण! पारिजातं त्वयापुरा । दत्तं मम सुराणां च कथं स्थाप

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

महादेव उवाच।

प्रोवाच भगवान्सहस्राक्षमुपस्थितम् । शच्यावमानिता सत्या तव गेहे सुरेश्वर!
दत्त्वा पारिजातानि सत्यायै सा पुलोमजा । स्वयमेव स्वशिरसि धारयामीस ते प्रिया
तस्या निमित्तं देवेन्द्र! पारिजातोद्धृतो मया । अस्यै प्रतिश्रुतं दातुं मया सुरगणेश्वर !
गेहे पारिजातं स्थापयामीति वासव !। तस्मादद्य न दातव्यः पारिजातः सुरेश्वर!
मर्त्यानां हितार्थाय प्रापयिष्यामि भूतले । तावत्तिष्ठतु देवेन्द्र! पारिजातो ममाऽऽलये
मयि स्वर्गगते शक्र! गृहाण त्वं यथेच्छया ॥ १०६ ॥

महादेव उवाच।

इत्युक्त्वा यदुश्रेष्ठस्तस्मै वज्रं ददौ स्वयम् । एवमस्त्विति गोविन्दं नमस्कृत्य स वज्रभृत्
ययौ स्वपुरं दिव्यं सह देवगणैर्वृतः । कृष्णोऽपि सत्यया देव्या गरुडोपरि संस्थितः
स्तूयमानो मुनिभिर्द्वारवत्यां विवेश ह । सत्याया निकटे स्थाप्य पारिजातं सुरद्रुमम्
रमयामास भार्याभिः सर्वाभिः सर्वगो हरिः । निशासु तासां सर्वासां गृहेषु मधुसूदनः
विश्वरूपधरः श्रीमानुवास ससुखप्रदः ॥ ११० ॥

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे उमामहेश्वर-
सम्वादे श्रीकृष्णचरिते श्रीवासुदेवविवाहकथनं नाम
एकोनपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २४९ ॥

---

# पञ्चाशदधिकद्विशततमोऽध्यायः

बाणासुरसङ्ग्रामप्रसङ्गे उषानिरुद्धयोःप्रणयप्रसङ्गे बाणेनाऽनिरुद्धरोधनं नारद-
वचनया कृष्णेनाऽऽक्रमणं तत्रवैष्णवमाहेश्वरास्त्रैर्युद्धं ज्वरोत्पत्तिः कृष्णद्वारा
महादेवमूर्च्छनं पार्वतीप्रार्थनयामूर्च्छाहरणं शङ्करकृताकृष्णस्तुतिः

श्रीरुद्र उवाच।

रुक्मिण्यां कृष्णस्य प्रद्युम्नो मदनांशेन जज्ञे । असौ मदनसम्भूतो महाबलः शम्बर-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

जज्ञिवान्। तस्य रुक्मिणः सुतायामनिरुद्धो जज्ञे। सोऽपि बाणपुत्रीमुषां कन्यामुपयेमे। सा तु स्वप्ने नीलोत्पलदलश्यामं पुण्डरीकनिभेक्षणं महाबाहुं भरणोपेतां षोडशसमवयस्कं रक्तारविन्दवक्त्रं यथावदुपभुज्य प्रबुध्य तं पु दृष्ट्वा मदनेन पीडिता भ्रान्तचित्ता मां तु त्यक्त्वा क्वाऽसि कयासीति बहुधा वि ततस्तस्याः सखी चित्रलेखेति नाम कन्यां तादृशीमवस्थां गतां विलोक्य किं विभ्रान्तचित्ताऽसीति पप्रच्छ। साऽपि स्वप्नलब्धं पतिं यथावदाचष्ट। साऽपि देवमानुषादिश्रेष्ठान्पटे विलिख्य तस्यै दर्शयामास। यदुवंशसम्भूतान्कृष्णसं प्रद्युम्नानिरुद्धादीनपि सम्यङ्निवेदयामास। सा तेषां कृष्णमनुमान्यप्रद्युम्ना ऽनिरुद्धं दृष्ट्वा सऽत्येष इत्यालिलिङ्ग। अथ चित्रलेखा बह्वीभिर्मायावतीभिर्दि भिर्द्वारवतीं गत्वा रात्रावन्तःपुरे सुप्तमनिरुद्धं दृष्ट्वा गृहीत्वा मोहयित्वा माहि बाणस्यान्तःपुरे चैत्यप्रासादादियुक्ते तस्या बाणपुत्र्याः शय्यायां चिक्षेप। स प्रबुद्धोऽतिरम्ये श्लक्ष्णे पर्यङ्के संस्थितामुषां सर्वलक्षणलक्षितां विचित्राभरण गन्धमाल्यालङ्कृतां काञ्चनवर्णां सुकेशीं सुजातस्तनीं दृष्ट्वा गाढमालिङ्ग्य क गन्धहस्तीव तयाऽतिप्रीतिसंयुक्तया यथासुखं रमयामास। एवं मासमात्रं तयाऽनिरुद्धं रममाणं कदाचिदन्तःपुरनिवासिन्यो वृद्धा दैत्यस्त्रियो ज्ञात्वा रा वेदयामासुः। स राजा क्रोधताम्राक्षः परं विस्मयं गत्वा तमिहानयतेति पुरः न्प्रेषयामास। तेऽपि तूर्णं नृपप्रासादमारुह्य राजपुत्र्याः शयने संस्थितमनिरुद्धं माजग्मुः। स तान्समारब्धान्दृष्ट्वा प्रासादस्तम्भमेकं हेलयोत्पाट्य नियुतसङ्ख्या ङ्करान्मुहूर्तमात्रेणैव स्तम्भेन चूर्णितगात्रांश्चकार। अथ दैत्यपतिर्निहितान्कि कौतूहलं गत्वा असौ श्रीकृष्णपौत्रइति देवर्षिणा प्रोक्तो धनुरादाय स्वयमे रुद्धं ग्रहीतुं तत्समीपमाजगाम। अनिरुद्धोऽपि योद्धुमायान्तं सहस्रबाहुं दृष्ट्वा तत्परिघं भ्रामयित्वा बाणस्योपरि चिक्षेप। स तु स्वचापनिर्मुक्तेन बा परिघं चिच्छेद। अनन्तरमुरगास्त्रेणअनिरुद्धं निबिडं बद्ध्वा स्वान्तःपुरे यामास। अथ कृष्णोऽप्येवंविधमेव देवर्षिणा ज्ञात्वा बलदेवप्रद्युम्नसहितः स

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

गरुडमेन्द्रमारुह्य तस्य बाणस्य भुजवनं छेत्तुमाजगाम । बलिपुत्रेण पुरा शङ्करोऽर्चितः ... वरं वृणीष्वेत्युवाच । तमीश्वरं बाणो मम पुरद्वारि रक्षार्थं सर्वदोपविश्य ...गतं परसैन्यं जहीत्येवं वरमयाचत । तं तथेत्युक्त्वा शङ्करोऽपि तस्य पुरद्वारि ...युधः सपुत्रः सगणः समासीनस्तस्मिन्नेव काले रुषा स्वसेनया समागतं वासुदेवं ...वृषमारुह्य सर्वायुधोपेतः स्वपुत्रगणसंवृतो योद्धुं निश्चक्राम । कृष्णोऽपि तं ...पतिं गजचर्मकपालभस्मधरं ज्वलितोरगाकल्पं पिङ्गलं त्रिलोचनं त्रिशूलधरं सर्व-...गणसंहृतिकर्त्तारं सर्वभूतभयावहं संवर्त्ताग्निप्रभं पुत्रद्वयसमन्वितं समस्तगणावृतं ...पुरान्तकं दृष्ट्वा सेनां सुदूरे पृष्ठतो निवेश्य बलभद्रप्रद्युम्नसहितस्तेन रुद्रेण सह प्रह-...विव योद्धुमारेभे ॥

...मं तदभूद्घोरं कृष्णशङ्करयोस्तयोः । पिनाकशार्ङ्गनिर्मुक्तैर्बाणैः सम्वर्त्तकोपमैः ॥१॥ ...मोऽपि गजवक्त्रेण प्रद्युम्नः षण्मुखेन च । युयुधाते महावीर्यौ सिंहाविव बलोत्कटौ ...नायकः स्वदन्ताभ्यां जघानोरसि यादवम् । रामो मुशलमादाय तस्य दन्तमताडयत् ...भिन्नदन्तः सहसा प्रदुद्रावाऽऽखुवाहनः । तदाप्रभृति लोकेऽस्मिन्हतदन्तो गणेश्वरः ...दानवगन्धर्वैरेकदन्त इतीरितः । प्रद्युम्नेन समं युद्धं चकार शिखिवाहनः ॥ ५ ॥

गणान्विद्रावयामास मुशलेन हलायुधः ।
कृष्णेन सुचिरं कालं युद्ध्वाऽसौ नीललोहितः ॥ ६ ॥

...ज्वरं महादीप्तमस्मिन्संयोज्य सायके । कोपान्मुमोच तदसौ भृशं संरक्तलोचनः॥ ...स्त्रं वारयामास कृष्णःशीतज्वरेण तु । ताभ्यांहरिहराभ्यां तु विसृष्टौताविमौज्वरौ ...शतुर्मानुषेलोकेतयोरेवाऽऽज्ञया भृशम् । हरिशङ्करयोर्युद्धं येतुश्रृण्वन्ति मानवाः ॥ सर्वे ज्वरनिर्मुक्ताः प्राप्नुवन्ति निरामयम् । ततःसतु हृषीकेशोमोहनास्त्रं दुरासदम् ...युज्य बाणं भूतेशे मुमोच मधुसूदनः । मुहुर्मुहुर्व्यजृम्भद्वै तेनास्त्रेण विमोहितः॥११ ...पात मूर्च्छितो भूमौ शङ्करस्त्रिदशेश्वरः । पितरं मोहितं दृष्ट्वा शक्तिमुद्यम्य वीर्यवान्॥

योद्धुमभ्याययौ कृष्णं षण्मुखः शिखिवाहनः ।
हुङ्कारेणैव तं कृष्णश्चकाराऽत्र पराङ्मुखम् ॥ १३ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

एवंजित्वा यदुश्रेष्ठः शूलपाणिंत्रिलोचनम् । महास्वनंपाञ्चजन्यं शङ्खंदध्मौप्रता
कृष्णेननिर्जितं श्रुत्वा सात्मजं शङ्करं तदा । बाणः स्यन्दनमास्थाय ययौ युद्धाय
सदृष्ट्वा सहस्राक्षृष्णं गरुडोपरि संस्थितम् । छादयामास गोविन्दं बहुशस्त्रास्त्रैः
गदाभिः परिघैः शूलैः शक्तिभिस्तोमरैरपि । भिण्डिपालैश्च खड्गैश्च चक्रैश्चापैर्नि
तानि सर्वाणि चिच्छेद चक्रेणैव जनार्दनः । ससर्ज तस्य बाहूनां छेदनार्थं सुद
मुक्तं दनुजराजस्य सहस्रारं सुदर्शनम् । तद्बाहुकाननंतूर्णं छिन्नं चक्रे सहस्र
एतस्मिन्नन्तरे देवि पार्वती संशितव्रता । हरेः समीपमागत्य कृताञ्जलिरभाषत ।

पार्वत्युवाच ।

कृष्णकृष्णजगन्नाथ नारायण! दयानिधे !। दास्यस्मि तव देवेश! पूर्वभावे यत्
त्वया दत्तं वरं मह्यं तदा कौशलपर्वते । सौभाग्यं शाश्वतं सौम्य! प्रसन्नेन महा

तव मुख्यं सहस्रस्य नाम्नामन्यतमं विभो ! ।
गौरीसौभाग्यदातेति मुनिभिः परिकीर्तितम् ॥ २३ ॥

तत्सत्यं कुरु गोविन्द! गरुडारूढ!शाश्वत ! । तस्मान्मम पतिं देव! त्वं जीवयितु

रुद्र उवाच ।

एवमुक्तस्ततो देव्या!कृष्णः कमललोचनः । अस्त्रंसंहारयामास येनाऽसौ मोहि
कृष्णास्त्रेण विनिर्मुक्तः सर्वभूतपतिःशिवः । उत्थायप्राञ्जलिर्भूत्वा तुष्टाव जगद

शङ्कर उवाच ।

कृष्णकृष्णजगन्नाथ ! जाने त्वां पुरुषोत्तमम् । परेशं परमात्मानमनादिनिधनं
अवतीर्णं मनुष्येषु शरीरग्रहणात्मिका । लीलेयं सर्वलोकस्य तव चेष्टोपलक्ष
प्रसीद मे नमस्तुभ्यं प्रसीद मम शाश्वत !। प्रसीद मे जगत्स्वामिन्प्रसीदाऽच्युत
त्वमेव जगतां स्रष्टा धाता हर्त्ता जगद्गुरुः । त्वमेव चिदचिद्वस्तु रूपं ब्रह्म सु
त्वमादिस्त्वमनादिस्त्वमीश्वरः शेष एव च । त्वं महत्त्वं परं ब्रह्म प्रत्यगात्मा
समस्तामरवर्यस्त्वममर्त्यस्त्वं सुरेश्वर !। त्वं मर्त्येन समानश्च सौशील्येन तव

तौ शाश्वतौ विषूचीनौ परंजीवौ सनातनौ ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तथा पञ्चाऽपि भूतानि तव वात्सल्यगौरवात् ॥ ३३ ॥
...राक्षरे पारेधाम्निरुचोनित्यं सुराश्रये । अधिविश्वेनिधेषि त्वं दास्यकर्मणि नान्यथा
...त्वां न वेदलोकेऽस्मिन्समूढः सर्वभावनः । परावरैश्वरं धाम विदुर्दास्ये मनीषिणः
... वै समासने युक्तास्तत्पदे त्रिदशैः समम् । समान्यो भजते दूरेगन्तुं नित्यं पदं तव॥
...तुर्जागरूकेऽस्मिन्स्वसारौ युवती इव । मिथुनानि तवाऽध्यक्ष ब्रूवते यदुशाश्वत ! ॥
...नामानि कर्माणि गुणानि शाश्वतानि च । ऐश्वर्याणि गुणातीत ब्रुवते चोत्तमेइमे
...र्मज्ञानमये रूपे इमे पूर्वोत्तरे श्रुते । स्वसारौ युवती प्रोक्ते स्तोतारौ तव केशव! ॥३८
...नं प्रज्ञानं परं ब्रह्म त्वया प्राज्ञेन शाश्वत !। जीवयैतेन प्राज्ञेण परेणैवात्मना त्वया ॥
तस्माच्छरीरादुत्क्रम्य कृपया तव केवलम् ।
आमुष्मिके परे स्वर्गे त्वया दत्तात्मबोधवान् ॥ ४१ ॥
...ज्ञानं चैव विज्ञानं मेधां दृष्टिं तथा धृतिम् । सर्वान्कामानवाप्नोति अमृतं स भवेत्तदा
...तत्संज्ञानमात्मानं यदेतद्धृदि यन्मनः । मनीषा चैव युक्तिश्च स्मृतिः संकल्पएव च ॥
...पश्च क्रतवः कामो वशइत्यादि ते प्रभो !। भवन्ति नामधेयानि प्रज्ञानस्यघृणानिधेः॥
...एष त्वं परमं ब्रह्म एष त्वं वै प्रजापतिः । एष त्वमिन्द्रो रुद्रश्च एष त्वं सर्वदेवताः ॥
...तानि सर्वभूतानि त्वमेव परमेश्वर !। सुतमित्राणिजीवायुस्तथाऽन्यानि सनातन! ॥
जरायुजाण्डजातानि स्वेदजान्युद्भिजानि च ।
अश्वा गावश्च पुरुषा हस्तिनश्चेतराणि च ॥ ४७ ॥
...त्किञ्चित्प्राणिजातं च जङ्गमाश्चैव जन्तवः । स्थावरायेचवैनाथसर्वेत्वत्तोभवन्ति च
...त्वां हि सर्वगतं चेत्थं वदन्ति श्रुतयो हरिम् । त्वयैवप्रेरितालोकाश्चेष्टन्ते साध्वसाधुषु
...तस्मान्मया कृतं यच्च अपराधमिदं प्रभो !। क्षमस्व करुणासिन्धो! गुणैः शुभतमैस्तव
...नमस्ते पुण्डरीकाक्ष! गोविन्दाऽच्युतमाधव !। वासुदेव जगद्वन्द्य नारायण! नमोऽस्तु ते
...नमस्यामि जगत्स्वामिन्नृसिंह करुणाकर !। श्रीशसर्वगतश्रीमन्परमात्मन्नमोऽस्तु ते ॥
...निजावसथवैकुण्ठनित्यमुक्तार्चितप्रभो !। त्रयीनाथ! नमस्तुभ्यं राम राजीवलोचन! ॥
...भूभारकविनाशाय कृष्णानन्दस्वरूपिणे । विष्णवे जिष्णवे तुभ्यं नमस्ते यदुनन्दन !

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

एवं स्तुत्वाऽथ गोविन्दं प्रणिपत्यउमापतिः ।
प्राञ्जलिः प्राह भूतेशो वाक्यं गम्भीरया गिरा ॥ ५९ ॥

रुद्र उवाच ।

मया दत्तवरो ह्येष बाणो बलिसुतः प्रभो ॥ अहं च दत्तवांस्तस्मैपुराऽनेनाऽर्थितो
अमरत्वं यदुश्रेष्ठ सर्वं कर्तुं त्वमर्हसि । तस्मादेनं बलिसुतं त्रातुमर्हसि मे प्रि
तथेत्युक्त्वा च भगवान्बाणं बलिसुतं तदा । प्राणसंशयमापन्नंच्छिन्नबाहुमसृ
संहृत्य चक्रं गोविन्दो मुमोच करुणानिधिः । मोचयित्वाबलिसुतंशंकरः सं
वृषभेन्द्रं समारुह्य पार्वत्या सहितः प्रभुः । ययौ च वसतिस्थानं कैलाशं धरणी

स तु बाणो नमस्कृत्य रामकृष्णौ महाबलौ ।
ताभ्यां वै नगरीं गत्वा मुमोच मदनात्मजम् ॥ ६१ ॥

वस्त्रैराभरणैर्दिव्यैः पूजयित्वा यथार्हतः । उषां सम्प्रददौ तस्मै कृष्णपौत्राय श्री
उद्वाह्य रामकृष्णौ तमनिरुद्धं यथाविधि । बाणेन पूजितौ तत्र प्रद्युम्नसहितौ त
उषया सहितं तत्राऽनिरुद्धं वै जनार्दनः । आरोप्य स्यन्दने दिव्ये ययौ द्वारव
रामप्रद्युम्नसहितस्सेनया सहितो हरिः । प्रविवेश पुरीं रम्यां त्रिदशैर्मघवानिव
अनिरुद्धो बाणपुत्र्या नानारत्नमये गृहे । अनिशं रमयामास नानाभोगैर्मुदान्वि

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे उमामहे
सम्वादे बाणासुरसङ्ग्रामकथनं नाम पञ्चाशदधिकद्विशततमोऽध्यायः ॥२५

---

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

## एकपञ्चाशदधिकद्विशततमोऽध्यायः

### कृष्णचरित्रे काशिराजपौण्ड्रकवासुदेवतत्पुत्रदण्डपाणिकृत्याविध्वंसनवर्णनम्

श्रीरुद्र उवाच ।

थ पौण्ड्रकवासुदेवः काशिराजो वाराणस्यां विविक्ते द्वादशवर्षं महेशमर्चयन्निराहारः
क्षरं जजाप । पौरश्चरणिकान्ते शङ्करं स्वनेत्रकमलेन पूजयामास । ततः शूलपाणि-
मापतिः प्रसन्नो वरं वृणीष्वेति तमाह । असौ पञ्चवक्त्रं सर्वभूतपतिं शिवं प्रसन्नं
द मम वासुदेवसमानरूपं प्रयच्छेत्युवाच । शिवस्तस्मै शङ्खचक्रगदापद्मयुतचतुर्भुजं
ण्डरीकदलनिभलोचनं वासुदेवसमानकिरीटललितकुन्तलं पीतवस्त्रकौस्तुभाभरणा-
चिह्नान्यपि मह्यं देहीति याचितः शिवः सर्वमपि तस्मै प्रददौ । स तु वासुदेवोऽह-
ति सर्वलोकान्मोहयामास । कदाचित्स्वर्गतो मदबलोत्कटं तं काशिपतिं नारदोऽ-
त्य वसुदेवसुतं कृष्णमजित्वा वासुदेवत्वं न विद्यत इत्युवाच । स तु तस्मिन्नेव
णे कृष्णं जेतुं गरुडपताकायुतं रथमारुह्य चतुरङ्गाक्षौहिणीबलेन द्वारकामवाप ।
पुरद्वारि स्वर्णयाने संस्थितो वासुदेवोऽहं युद्धार्थं सम्प्राप्तोऽस्मि मामजित्वा
वासुदेवत्वं नास्तीति दूतं प्रेषयामास । विष्णुरपि तच्छ्रुत्वा वैनतेयमारुह्य
ण्ड्रकेण योद्धुं पुरद्वाराद्विनिष्क्रम्याऽक्षौहिणीबलेन स्यन्दने समासीनं शङ्खचक्र-
दापद्महस्तं पौण्ड्रकं ददर्श । कृष्णोऽथ शार्ङ्गमादाय सम्वर्ताग्निप्रभैर्बाणैस्तस्य रथा-
गजपदातियुक्तं महदक्षौहिणीबलं मुहूर्तमात्रेण निःशेषं ददाह । शरेणैकेन तस्य
स्तावसक्तशङ्खचक्रगदादिहेतीरपि लीलयैव छिच्छेद । पवित्रेण सुदर्शनेन किरीट-
ण्डलयुतं तस्य शिरःकमलं छित्त्वा वाराणस्यामन्तःपुरे निपातयामास । तद्दृष्ट्वा
र्वे काशीनिवासिनः किमेतदित्याशङ्क्य विस्मिता बभूवुः । तस्य पौण्ड्रकस्य सुतो
ण्डपाणिरिति वासुदेवेन भगवता निहतं स्वपितरं श्रुत्वा महता मन्युना समाविष्टः
पुरोहितेनाऽभियुक्तो माहेश्वरेण क्रतुना शङ्करमियाज । स तु प्रसन्नः कृष्णजिघां-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सायां समर्थां माहेश्वरीं कृत्यां तस्मै सम्प्रीत्या च दत्तवान्। स काशिराज माहेश्वरीं ज्वालाकुलोपचितविग्रहां सन्दीप्तसटाकलापां पिङ्गलनेत्रां ज्वलद वदनां त्रिशूलहस्तां भस्माङ्गरागलिप्तां नरमुण्डमालाविभूषितां सर्वदेवभयङ्करीं दत्तां नग्नां कृत्यां समीक्ष्य पुत्रदारबान्धवसहितं कृष्णं जहीति प्रेरयामास। सर्वलोकभयावहा सर्वां पृथ्वीं स्वतेजसा निर्दहन्ती प्रलयाशनिनिर्भरस्वनं द्वारकामवाप। तत्रत्याः सर्वे जनास्तां दृष्ट्वा महाप्रलयोऽयमिति मत्वा हा कुर्वन्तः कृष्णं निवेदयामासुः। कृष्णोऽपि तान्सर्वान्न भेतव्यमित्युक्त्वा तोरणेस्थितां महारौद्रां कृत्यां तथाविधां दृष्ट्वा सकलशस्त्रास्त्रनिवारणसमर्थं सुदर्शनं तस्यां कृत्यायां सहसा मुमोच। सा तु कल्पान्तार्ककोटिसमवर्चसं योजनोद्गतं सकलदीप्तास्त्रयुतं हिरण्मयं प्रभापूर्णं सकलजगत्प्रलयस्थित सहस्रारं सर्वदेवनमस्कृतं जगच्छरणभूतं महासुदर्शनं विलोक्य विनष्टतेजा क्रोशन्ती वाराणसीं प्रति दुद्राव। सुदर्शनोऽपि तां कृत्यां भृशमन्वगात्। भयार्त्ता क्रोशन्ती काशिपतेस्तस्याऽन्तःपुरं प्रविवेश। सुदर्शनोऽपि तां वार पुरीं प्राप्य सभृत्यबलवाहनं पौण्ड्रकसुतं दण्डपाणिं नाम काशिराजं बहु हर्म्यमालिनीं पुरीं माहेश्वरीमपि भस्मावशेषां कृत्वा सकलदेवमहर्षिभिः पू पुनरेव द्वारवत्यां कृष्णहस्तं सुसौम्यं कल्पमिव आविवेश ॥

॥ अत्रच श्लोकागीयन्ते ॥

शस्त्रास्त्रमोक्षमजरं दग्ध्वा तद्बलमोजसा। कृत्या भस्मावशेषां ततो वाराणसीं प्रभूतरथमातङ्गां साश्वां पुंस्त्रीसमन्विताम्। साशेषकोषकोष्ठां ता दुर्निरीक्ष्या द्वारीपलक्षिताशेषगृहप्राकारचत्वराम्। प्रददाह हरेश्चक्रं सकलामेव तां अक्षीणगतिसामर्थ्यमसाध्यकृतसाधनम्। तच्चक्रं प्रस्फुरद्दीप्तं विष्णोरभ्याययौ

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे उमा सम्वादे श्रीकृष्णचरितेपौण्ड्रकपुत्रकृत्याविध्वंसनंनामैक पञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५१ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# द्विपञ्चाशदधिकद्विशततमोऽध्यायः

## कृष्णचरित्रे जरासन्धवधपूर्वकं कृष्णद्वारा सुदाम्नः सतीर्थस्य सादरंसम्मानं तस्मैधनपतित्वदानं महाभारताख्यानञ्च

श्रीरुद्र उवाच।

मगधाधिपः कंसवधानन्तरं द्विषन्नेव यादवान्सदा पीडयामास। ते दुःखिताः
ष्णमूचुः। स च भीमार्जुनावाहूय सम्मन्त्रयामास। कृष्णोऽनेन रुद्रः पूजितस्तत्प्र-
दाच्छस्त्रैरवध्यः परं केनाऽपि प्रकारेण हन्तव्यइति। अथ विचार्य भीममाह,एनं
ति मल्लयुद्धं कुरु तत्तेन प्रतिज्ञातम्। अथ सकलचराचरजगद्वन्द्यो वासुदेवो भीमा-
नसहितो जरासन्धस्य पुरीं गत्वा विप्रवेषेण तस्याऽन्तःपुरमवाप। सोऽपि महा-
र्थान्क्षत्रियान्युद्धे निर्जित्य बलाद्गृहीत्वा स्ववेश्मनि निरुध्य मासि मासि कृष्ण-
तुर्दश्यामेकैकं हत्वा तद्रक्तेनैव बलिं भैरवायाऽकरोत्। एवम्विधं सकलजनपार्थिव-
धं कुर्वतो जरासन्धस्य वधे समुद्यच्छन्भीमार्जुनसहितस्तस्य गृहे विप्रवेषेणैव
वेश। स तु तान्दृष्ट्वा दण्डवत्प्रणतो भूत्वा यथोचितासनेषु निवेश्य मधुपर्कविधा-
न सम्पूज्य धन्योऽस्मि कृतकृत्योऽस्मि किमर्थं भवन्तो मे समीपआगतास्तद्वक्तव्य-
मपि तत्सर्वं भवद्भ्यो दास्यामीत्युवाच। तेषां वासुदेवः प्रहसन्पार्थिवं तमुवाच।
ष्णभीमार्जुना युद्धार्थमागताः स्मोऽस्माकमन्यतमं द्वन्द्वयुद्धार्थं वृणीष्वेत्यवदत्।
ऽपि तथेत्यवदत्ततो द्वन्द्वयुद्धार्थं मारुतिं वरयामास। ततो भीमजरासन्धयोरभि-
भयङ्करं मल्लयुद्धं निरन्तरं पञ्चविंशतिवासरमभूत्। ततः कृष्णेनैव सञ्चोदितो
युपुत्रस्तस्य शरीरं द्विधाकृत्य भूमौ निपातयामास। एवं जरासन्धं पाण्डुपुत्रेण
त्वा ताञ्जरासन्धनिरुद्धान्वासुदेवोऽपि पार्थिवान्मोचयामास॥

॥ अत्र श्लोकौ भवतः॥

हत्य वायुपुत्रेण जरासन्धं यदूद्वहः। तद्गृहे संनिरुद्धांस्तु मोचयामासपार्थिवान्॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ते च तत्र नमस्कृत्य स्तुत्वा च मधुसूदनम् ।
स्वान्स्वाञ्जनपदान्सर्वे जग्मुः कृष्णेन रक्षिताः ॥ २ ॥

अथ ताभ्यामिन्द्रप्रस्थं गत्वा वासुदेवस्तत्र महाक्रतुं राजसूयं युधिष्ठिरं कारया
तत्र समाप्ते क्रतौ अग्रपूजां भीष्मानुमतेन कृष्णाय दत्तवान् । तत्र शिशुपाल
वहून्याक्षेपवाक्यान्युक्तवान् । कृष्णोऽपि सुदर्शनेन तस्य शिरश्चिच्छेद । असौ
त्रयावसाने हरेः सारूप्यमगमत् । अथ शिशुपालं निहतं श्रुत्वा दन्तवक्त्रः
योद्धं मथुरामाजगाम । कृष्णस्तु तच्छ्रुत्वा रथमारुह्य तेन योद्धुं मथुराम
दन्तवक्त्रवासुदेवयोरहोरात्रं मथुरापुरद्वारि यमुनातीरे संग्रामः समवर्त्तत । कृ
गदया तं जघान । स तु चूर्णितसर्वाङ्गो वज्रनिर्भिन्नमहीधर इव गतासु
पपात । सोऽपि हरेःसायुज्यं योगिगम्यं नित्यानन्दसुखं शाश्वतं परमं प
इत्थं जयविजयौ सनकादिशापव्याजेन केवलं भगवतो लीलार्थं संसृत
जन्मत्रयेऽपि तेनैव निहतौ जन्मत्रयावसाने मुक्तिमवाप्तौ । कृष्णोऽपि तंहत्वा
मुत्तीर्य नन्दव्रजं गत्वा प्राक्तनौ पितरावभिवाद्य आश्वास्य ताभ्यां साश्रुकण्ठ
ङ्गितः सकलगोपवृद्धान्प्रणम्याऽऽश्वास्य रत्नाभरणादिभिस्तत्रस्थान्संतर्पया
कालिन्द्याः पुलिने रम्ये पुण्यवृक्षसमावृते । गोपनारीभिरनिशं क्रीडयामास
रम्यकेलिसुखेनैव गोपवेशधरो हरिः । बद्धप्रेमरसेनाऽत्र मासद्वयमुवास
अथ तत्रस्था नन्दगोपादयः सर्वे जनाः पुत्रदारसहिताः पशुपक्षिमृगादयश्च
प्रसादेन दिव्यरूपधरा विमानमारूढाः परमं वैकुण्ठलोकमवापुः । कृ
गोपव्रजौकसां सर्वेषां परमं निरामयं स्वपदं दत्त्वा दिवि देवगणैः संस्तूयमा
वतीं श्रीमतीं विवेश । तत्र वसुदेवोग्रसेनसंकर्षणप्रद्युम्नानिरुद्धाक्रूरादिभिः
सम्पूजितः षोडशसहस्रभार्याभिरष्टाभिर्दिव्यमहिषीभिश्च विश्वरूपधरो दिव्य
नागृहान्तरेषु सुरतरुकुसुमाञ्चितश्लक्ष्णतरपर्यङ्केषु रमयामास । अथ राम
श्यों विप्रो वालसखा सदाऽत्यन्तदारिद्र्यपीडितः कुचेलो मुष्टिमात्रान्याचना
जीर्णवाससिनिवध्य वासुदेवं द्रष्टुं श्रीमतीं द्वारकानगरीमाजगाम । स तु

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तःपुरद्वारि क्षणं तूष्णीं तस्थौ । कृष्णोऽपि समागतं ब्राह्मणं ज्ञात्वा प्रत्युद्गम्य सत्कृत्य करं गृहीत्वा गृहान्तरे स्वासने निवेश्य भयाद्वेपमानं तं रुक्मिणीहस्तसुवर्णकलशजलेन पादौ प्रक्षाल्य मधुपर्केण पूजयामास । सुधामृतोपमैरन्नपानातर्पयित्वा तस्य जीर्णवस्त्रान्तरे यान्त्रनाप्तपृथुकान्स्वयमेव हस्तेन गृहीत्वा प्रहसन्नत्र । कृष्णेन पृथुके भक्षिते तस्मिन्नेव क्षणे तस्य बहुधनधान्ययुतंवस्त्राभरणसम्भृतं ऐश्वर्यमभूत् । स तु कृष्णेन विसृष्टो मम किञ्चिद्वस्त्रं वा धनं वा कृष्णेन न दत्तमिति मन्यमानः स्वपुरं विवेश । अथ बहुधनधान्ययुतं स्वगृहं दृष्ट्वा तत्प्रसादादिदं मिति वदन्प्रहृष्टेनाऽन्तरात्मना दिव्यवस्त्राभरणादिना भार्यया सह सर्वान्काभुक्त्वा हरिसन्तुष्ट्यै बहुयज्ञानिष्ट्वा तत्प्रसादेन परमं नित्यं स्वर्गसुखमवाप । अथ राष्ट्रतनयो दुर्योधनः पाण्डुतनयान्कपटद्यूतव्याजेन राज्यमपहृत्य स्वराष्ट्राद्विसयामास । ते तु युधिष्ठिरभीमार्जुननकुलसहदेवाः स्वपत्न्या द्रौपद्या सह महारण्यं तत्र द्वादशाब्दान्स्थित्वा सम्वत्सरपर्यन्तमज्ञाताः सर्वे मत्स्यदेशाधिपतेर्विराटनिवेशने स्थित्वा वासुदेवेन सहायेन धार्तराष्ट्रान्योद्धुमाजग्मुः । तेषां धार्तपाण्डुपुत्राणां नानादेशाधिपनृपैः कुरुक्षेत्रे महापुण्ये देवानामपि भयङ्करो महासङ्ग्रामोऽभवत् । अथ श्रीकृष्णोऽप्यर्जुनसारथ्यं कुर्वन्नर्जुने स्वशक्तिमावेश्य तेन धनभीष्मद्रोणप्रमुखान्सर्वान्पार्थिवानेकादशाक्षौहिणीबलसहितान्कुरुक्षेत्रे हत्वा इन्द्राज्ये स्थापयित्वा निःशेषेण सर्वभूभारमपास्य स्वां पुरीं प्रविवेश । कस्यचित्तथ कालस्य कतिपयाहनि वैदिको ब्राह्मणो मृतं पञ्चवार्षिकं बालमादाय राजरि निधाय बहुशो विलपन्बहून्याक्रोशवाक्यानि कृष्णं जगाद । कृष्णस्तमाक्रोशंत्वा तूष्णीमुवास । स तु ममपञ्चपुत्राः पूर्वं हता अयं तु षष्ठः एनं कृष्णो न जीवयति तर्हि राजद्वारि मरिष्यामीत्युवाच । तस्मिन्काले अर्जुनः कृष्णं द्रष्टुमागतथाविधं तं पुत्रशोकेन विलपन्तं ददर्श । अर्जुनोऽपि कालधर्ममुपागतं पञ्चवार्षिकं कं दृष्ट्वा कृपयाविष्टस्तव पुत्रमहं जीवयिष्यामीति । ब्राह्मणायाऽभयं दत्त्वा प्रतिज्ञान् । ब्राह्मणस्तु तेनाऽऽश्वासितो हृष्टवान् । अथैतं ब्राह्मणशिशुं बहुभिः सञ्जीव-



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नास्त्रैरभिमन्त्र्य अलब्धजीवितं दृष्ट्वा वृथाप्रतिज्ञामवाप्य बहुशोकसमन्वितः
प्राणांस्त्यक्तुमैच्छत् । कृष्णस्तु तत्सर्वं ज्ञात्वाऽन्तःपुराद्विनिष्क्रम्य तं वैदि
तव पुत्रान्सर्वानहं दास्यामीत्युक्त्वाऽऽश्वास्य वैनतेयमारुह्याऽर्जुनसहितो
लोकमाजगाम । तत्र दिव्यमणिसण्डपोद्देशे देव्या सह समासीनं नाराय
कृष्णार्जुनौ नमश्चक्रतुः । स तौ बाहुभ्यां परिष्वज्य किमर्थमागताविति
कृष्णश्च भगवन्वैदिकस्य तनयान्मम देहीत्युवाच । स तु नारायणस्तान्
संस्थितान्ब्राह्मणपुत्रान्कृष्णाय सन्ददौ । श्रीकृष्णोऽपि तान्वैनतेयस्कन्धे स
हर्षसमन्वितोऽर्जुनसहितः स्वयमप्यारुह्य दिवि देवगणैः संस्तूयमानो द्वार
विवेश । तस्मै ब्राह्मणाय पञ्चवर्षवयःस्थान्षट्पुत्रान्ददौ । सोऽप्यत्यन्तहर्ष
कृष्णं वर्द्धस्वेत्याशिषं प्रायच्छत् । अर्जुनस्तु सफलां प्रतिज्ञामवाप्य कृष्णं
युधिष्ठिरपालितां स्वां पुरीमाजगाम । कृष्णस्य षोडशसहस्रभार्यास्वयुतसा
जज्ञिरे तेषां पुत्रपौत्रसङ्ख्यां वक्तुं न शक्यते ॥

॥ अत्राऽपिश्लोकः ॥

अष्टौ शतानि पुत्राणां सहस्राण्ययुतं तथा ।
प्रद्युम्नः प्रथमस्तेषां सर्वेषां रुक्मिणीसुतः ॥ ५ ॥

असङ्ख्यैस्तैर्यादवैरियं पृथिवी सम्भृताऽभवत् । पुनरप्यवनीभारशङ्कया
तान्ऋषिशापव्याजेन संहर्तुमैच्छत् । कदाचित्सर्वे कुमारा नर्मदायां विहर्तुमा
तत्र तपन्तं कण्वं महर्षिं दृष्ट्वा जाम्बवत्याः पुत्रं योषिद्वेषं कृत्वा तस्योदरे
सं मुसलं बद्ध्वा ऋषेः समीपमागत्य सर्वे नमस्कृत्य पत्नीरूपं साम्बं कुमार
पुरतो निधाय अस्या गर्भे स्त्री वा पुरुषो वा भविष्यतीति ब्रूहीत्यूचुः । स तु
तद्विज्ञाय तानमर्षमाणः सर्वाननेन मुसलेन यूयं सर्वे निहता भवतेत्युवाच
समुद्विग्नमनसः कृष्णं समेत्य महर्षिणोक्तं तत्कर्म निवेदयामासुः । कृष्णोऽपि
यसं मुसलं चूर्णीभूतं ह्रदे निपातयामास । तदयश्चूर्णीभूतबीजसमुद्भूता
महाकाशाः संबभूवुः । तत्र तं मुसलावशिष्टं कनिष्ठाङ्गुलिमात्रं मत्स्यो

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

...यं निषादो गृहीत्वा तदुदरस्थं मुशलखण्डमादाय बाणाग्रे फलकमकरोत् । ...वितसर्वे यादवा रामकृष्णप्रद्युम्नादयो महाबलास्तिस्रः कोट्यो महोत्सवयात्रां ...तन्महाह्रदसमीपं जग्मुः । तत्र च बहुमद्यमांसानि भुक्त्वा सर्वे मत्ताः क्रीडार्थं ...महाह्रदसमुद्भूतान्महाकाशानुत्पाट्य तैर्वज्रधारासन्निभैः परस्परं जघ्नुः । तेन सर्वे ...आदयो यादवा निश्शेषं त्यक्तजीविता बभूवुः । ते सर्वे स्वान्स्वांस्त्रिदशान्प्रतिपे-...। एवं मुशलेन संहृत्य सर्वं स्वयमेको देवो बहुगुल्मसमाकीर्णमहाद्रुमच्छायायां ...चतुर्विधव्यूहगतं वासुदेवात्मकमात्मानं चिन्तयञ्जानूपरि पदं निधायाऽऽत्मनो-...पं वपुस्त्यक्तुमनुनिषसाद । एतस्मिन्नन्तरे मृगयाजीविको हरिः स तदा काल-...वेण चक्रवज्रध्वजांकुशादिचिह्नितमतिरक्ततमं हरेः पादकमलं दृष्ट्वा तन्मृगपोतं ...वा सकलयदुवंशहरमुसलशकलनिर्मितसायकेन जघान । तदनन्तरं श्रीकृष्णं ज्ञात्वा ...महाभयार्त्तः प्रवेपमानः कृताञ्जलिपुटो महापराधो मया कृत इतिवदंस्तं प्रणनाम । ...कृष्णस्तथाभूतं दृष्ट्वा सुधामयकराभ्यां तमुत्थाप्य भवता नाऽपराधः कृत इति-...महाभयपीडितमाश्वासयन्नुवाच । ततो योगिगम्यमपुनरावृत्तिशाश्वतं सर्वोप-...मयं वैष्णवं लोकं प्रददौ । असौ तस्मिन्नेव मुहूर्त्ते मानुषं रूपं विहाय पञ्चोप-...मयं सकलपुत्रदारसहितो दीप्तिमयं वैष्णवं लोकं दिव्यं विमानमास्थाय ...अर्कद्युतिसदृशं दिव्याप्सरोगणाकीर्णं हिरण्मयं वासुदेवलोकं जगाम । तस्मि-...ले दारुको रथमारुह्य विष्णोः समीपं विवेश । कृष्णोऽपि मत्स्वरूपमर्जुनं पूर्व-...नयस्वेति प्रेषयामास । स तु मनोजवस्यन्दनमारुह्याऽर्जुनसमीपमाजगाम ! एतस्मि-...न्तरे देव्यर्जुनस्तदारुह्य परिणीय नमस्कृत्य किंकरोमीति पुटाञ्जलिरुवाच । कृष्णस्तु ...ह पार्थ! अहं स्वलोकं यास्यामि त्वं तु द्वारवतीं गत्वा तत्रस्था रुक्मिण्याद्यष्टभार्या ...नीय मम शरीरे प्रेषय । स दारुकेण सहितो नगरीमाजगाम । एतस्मिन्नन्तरे देवा ...मानस्था नभसि संस्थिताःस्वर्लोकं यियासन्तं कृष्णं दृष्ट्वा ऋषिभिः सार्द्धं स्तुत्वा ...पुष्पवर्षाणि ववृषुः । कृष्णोऽपि मानुषदेहं संन्यस्य सकलजगत्स्थितिसंहारहेतुभूतं ...क्षेत्रज्ञान्तर्यामियोगिध्येयमनामयं वासुदेवात्मकं देहं धृत्वा वैनतेयमारुह्य

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

महर्षिभिः स्तूयमानो जगाम। अर्जुनो वसुदेवोग्रसेनाभ्यां रुक्मिण्यादिमहिषी-त्सर्वं कथयामास। तच्छ्रुत्वा सर्वे पौरजनाः स्त्रियश्च द्वारवतीमुत्सृज्यान्य-द्बहिर्निष्क्रम्य सर्वास्ताः कृष्णवल्लभा वसुदेवोग्रसेनसहिताः शीघ्रमेव हरेः जग्मुः। ते सर्वे वसुदेवोग्रसेनाक्रूरादयो यदुवृद्धास्तान्निहतान्रामकृष्णप्र-रुद्धादीन्सर्वान्यादवान्दृष्ट्वा महता शोकेन सन्तप्ताःस्वदारसहिता महान्तमग्नि तस्मिन्प्रविश्य निर्दग्धास्त्यक्तजीविता बभूवुः। तत्सुरतरुचन्दनागरुका-कारयित्वा तस्मिन्वैदिकाग्नि प्रज्वाल्य तस्मिन्कृष्णस्य शरीरं निक्षिप्य वेदोक्त संस्कारमर्जुनश्चकार। कृष्णपत्न्यो रुक्मिणीसत्यभामाकालिन्दीमित्रविन्दाजा-नाग्नजित्सुशीलासुलक्षणा एताः सर्वामहिष्यस्तमग्निं प्रविश्य च भर्तृशरीरं प-तेनाग्निनानिर्दग्धाः स्वान्स्वानंशान्समेत्य दिव्यविमानाधिरूढाः सकलदेवगण-माना दिव्याऽप्सरोगणसंकुला वासुदेवलोकमाजग्मुः। रेवती च बल-परिष्वज्याऽग्निं प्रविश्य तस्मिन्देहं त्यक्त्वा दिव्यं देहं प्राप्य दिव्यविमाना-स्थानं संकर्षलोकं दिव्यमवाप। तथैव प्रद्युम्नेन सह रुक्मिपुत्री तथाऽनिरुद्धे सर्वाश्च यादवस्त्रियः स्वस्वभर्त्तुः शरीराणि परिष्वज्याऽग्निप्रवेशं चक्रुः। तेषां पामर्जुनऔर्द्ध्वदैहिकं कृतवान्। तस्मिन्काले दिव्यवाजिसमायुक्तं सुग्री-सर्वरत्नोपेतं दिव्यं स्यन्दनमारुह्य दारुकोऽपि वैष्णवं लोकं जगाम। पारिजात-सभासुधर्मा च त्रिदशेन्द्रलोकमयाताम्। तस्मिन्समये द्वारवतीपुरी म-निमग्नाऽभूत्। ततः सर्वाः षोडशसहस्रस्त्रियः कृष्णभार्या अर्जुनो गृहीत्वा स्वां मगच्छत्। तस्मिन्नध्वनि एकेनाऽर्जुनेन समानीतं स्त्रीधनं दस्यवो दृष्ट्वा त-सत्वरमाययुः। तान्समारब्धान्म्लेच्छान्दृष्ट्वाऽर्जुनोऽपि तैर्योद्धुं धनुरादाय रोपितुमपि शक्तो नाऽभूत्। धनुर्ग्रहणेऽप्यशक्तमर्जुनं दस्यवो दृष्ट्वा सर्वा योषितो ताः पूर्वं देवगन्धर्वयोषितो ह्यष्टावक्रं महामुनिं दृष्ट्वा जहसुस्ततस्तेन शप्ता भविष्यथेति ततस्ताभिः प्रसादितः पूजितश्च तत्प्रसादात्सर्वलोकैश्च नमस्कृतं भर्तारमवाप्याऽपि तेनैव दस्युहस्तंगता अभवन्। अर्जुनोऽपि दस्युभिर्निर्जित

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

…विष्टो मम भुजबलं सवीर्यं कृष्णेनैव सह सर्वमैश्वर्यं निर्यातमिति मत्वा अद्य मम …यक्षय इतिवदन्सायं सन्ध्यारविरिव निःशेषविनष्टतेजाः स्वां पुरीं समाजगाम। …हितार्थाय सर्वदेवानां समस्तभूभारविनाशाय च यदुवंशेऽवतीर्य सकलराक्षस-…नाशं कृत्वा महान्तमपि चोर्वीभारं नाशयित्वा नन्दव्रजद्वारकामथुरानिवासिनः …न्स्थावरजङ्गमान्कालभवबन्धैर्मोचयित्वा परमैश्वर्ये शाश्वते योगिगम्ये हिरण्मये …सात्त्विके संस्थाप्य नित्यं दिव्यमहिष्यादिसंसेव्यमानो वासुदेवउवास॥

अत्र श्लोकाः।

…सर्वेऽवताराःस्युः कृष्णस्य चरितं महत्। भूभारकविनाशाय प्रादुर्भूतो रमापतिः …कृष्णस्य चरितं दुष्टानां नाशहेतवे। श्रीकृष्णः करुणासिन्धुर्वैकुण्ठे मोदते सदा॥ …त्यद्भुतमिदं देवि! कृष्णस्य चरितं शुभम्। संग्रहेण मयैवोक्तं तव सर्वफलप्रदम्॥८॥ …सुदेवस्य चरितं यः पठेद्धरिसंनिधौ। स्मरेद्वा श्रृणुयाद्भक्त्या स याति परमं पदम्॥ …हापातकयुक्तो वा तथोपपातकसंयुतः। बालकृष्णस्य चरितं श्रुत्वा पापैः प्रमुच्यते …रवत्यां समासीनं रुक्मिणीसहितं हरिम्। स्मरन्वै महदैश्वर्यमनेनाऽऽप्नोत्यसंशयम् …ग्रामे सङ्कटे दुर्गे शत्रुभिः परिवेष्टिते। नेतारं सर्वदेवानां ध्यात्वा सुविजयी भवेत्

यः स्मरेद्गोपकन्याभिः क्रीडन्तं गोव्रजे शुभे।
सर्वकामानवाप्नोति सौभाग्यं चैव विन्दति॥ १३॥

…ोपसर्गरोगाद्यैर्युक्तो यस्तु सनातनम्। जेतारं च महारौद्रीं कृत्यां काशीपुरे स्थिताम् …मत्र बहुनोक्तेन सर्वकालेषु चाप्युमे!। कृष्णाय नमइत्येवं मन्त्रमुच्चारयेद्बुधः॥ …ष्णाय वासुदेवाय हरये परमात्मने। प्रणतक्लेशनाशाय गोविन्दाय नमोनमः॥१६॥ …मन्त्रं जपन्देवि! भक्त्या प्रतिदिनं नरः। सर्वपापविनिर्मुक्तो विष्णुलोकमवाप्नुयात् …षामेव देवानामीश्वरोऽसौ जनार्दनः। रक्षणाय च लोकानामवस्थान्तरमेति वै॥ …पुरं हन्तुकामेन मया सम्पूजितो हरिः। बुद्धरूपधरः श्रीमान्मोहयामास तद्रिपून्॥ …मोहितास्तेन शास्त्रेण सर्वधर्मविवर्जिताः। नारायणास्त्रेण मया निहता देवशत्रवः॥ …वतीर्य कलावन्तं ब्राह्मणस्य निवेशने। हनिष्यति तथा रौद्रान्म्लेच्छान्सर्वाञ्जनार्दनः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तैस्तैर्भवैर्मयाऽवस्थाः सर्वाः प्रोक्ता जगत्पतेः ।
किमन्यच्छ्रोतुकामाऽसि तद्ब्रवीमि शुभानने ! ॥ २२ ॥

इति श्रीपाद्मे महापुराणे पञ्चपञ्चाशत्साहस्र्यां संहितायां उत्तरे खण्डे उमामहे-
सम्वादे श्रीकृष्णचरिते श्रीकृष्णस्वधामगमननिरूपणं नाम
द्विपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५२ ॥

---

# त्रिपञ्चाशदधिकद्विशततमोऽध्यायः

## उमामहेश्वरसम्वादे सविष्णुपूजाविधानं वैष्णवाचारकथनम्

श्रीपार्वत्युवाच ।

भगवन्सर्वमाख्यातं वैभवावस्थितं हरेः । एतस्मिन्रामकृष्णाभ्यां चरित्रमतिवि-
अहो रामस्य चरितं कृष्णस्य च महात्मनः । शृण्वन्त्या मम देवेश! कल्पान्त-
तृप्तिं नैवैति भूतेश ! चेतो हरिकथामृतम् ।
अधुना श्रोतुमिच्छामि विष्णोर्माहात्म्यमुत्तमम् ॥
तत्पूजनविधिं देव ! श्रोतुमिच्छाम्यहं तथा ॥ ३ ॥

श्रीरुद्र उवाच ।

शृणु देवि! प्रवक्ष्यामि हरेश्च सुमहात्मनः । स्थापनं च स्वयंव्यक्तं द्विविधं तत्
शिलामृद्दारुलोहाद्यैः कृत्वा प्रतिकृतिं हरेः । श्रौतस्मार्तागमप्रोक्तक्रियासंस्थाप-
तत्स्थापनमिति प्रोक्तं स्वयं व्यक्तं हि मे शृणु ।
यस्मिन्संनिहितो विष्णुः स्वयमेव नृणां भुवि ॥ ६ ॥

पाषाणदार्वोरात्मेशः स्वयं व्यक्तं हि तत्स्मृतम् । स्वयं व्यक्तं स्थापितं वा पूजयेत्
देवतानां महर्षीणामर्चनार्थं सनातनः । स्वयमेव जगन्नाथः सान्निध्यं याति

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

...यद्विग्रहे भोग्यं तद्देवाऽऽविरभूद्भुवि । तद्देव पूजयेन्नित्यं तस्मिन्नेव रमेत्सदा ॥९॥
...रङ्गशायी देवेशो विधिनाऽर्च्यः सुरोत्तमः । सएवेक्ष्वाकुनाथानां तपसाऽऽविरभूद्भुवि
...ऽपि काश्यां सम्पूज्यो माधवःकलुषापहः । यत्रयत्र गृहे रम्ये स्वयं व्यक्तः सनातनः
...तत्र समागम्य रमेऽहंसम्यग्त्र स्थितः । नाऽष्टाङ्गयोगे यज्ञेशस्त्वर्चायांनिन्दते नृणाम्
...पोविषयं प्राप्य ददाति वरमीप्सितम् । सर्वावस्थासु सौलभ्यमर्चायां लभ्यते जनैः
...नामपि सान्निध्यं सर्वदा पृथिवीतले । जम्बूद्वीपे महापुण्ये वर्षे वै भारते शुभे ॥
...यां सन्निधौ विष्णुर्नेतरेषु कदाचन । तत्तस्माद्भारते वर्षे मुनिभिस्त्रिदशैरपि ॥१२
...तः सततं देवि तपोयज्ञक्रियादिभिः । भारतेऽस्मिन्महावर्षे नित्यं सन्निहितो हरिः
...द्युम्ने तथा कौर्मे सिंहाद्रौ करवीरके । काश्यां प्रयागे सौम्ये च शालग्रामाचले तथा
...वत्यां नैमिषे च तथा बदरिकाश्रमे । कृतशौचे हरेत्पापं पौण्डरीके च दण्डके ॥
...रे वेङ्कटाद्रौ च श्वेताद्रौ गरुडाचले । काञ्च्यामानन्तशयने श्रीरङ्गे वासवाचले ॥
...रायणाचले सौम्ये वाराहे वामनाश्रमे । एवमाद्याःस्वयं व्यक्ताः सर्वकामफलप्रदाः

स्वयमेव हि सान्निध्यं यस्मिन्याति जनार्दनः ।
तस्मिन्नेव स्वयं व्यक्तं वदन्ति मुनयः शुभाः ॥ २१ ॥

...हाभागवतश्रेष्ठो विधिनास्थाप्यकेशवम् । मन्त्रेणकुर्यात्सांनिध्यं स्थापनंतद्धिशिष्यते
...स्मिन्सम्पूजयेद्देवं ग्रामेषु च गृहेषु च । शालग्रामशिलायां तु गृहार्चा सद्भिरिष्यते ॥
...र्चनं मन्त्रपठनं यागयोगो महात्मनः । नामसङ्कीर्तनं सेवा तच्चिह्नैरङ्कनं यथा ॥२४॥
...दीयाराधनं च स्यान्नवधा भिद्यते शुभे । नवकर्मविधानेज्या विप्रस्य सततं स्मृता ॥
...हाभागवतश्रेष्ठो ब्राह्मणो वै गुरुर्नृणाम् । सर्वेषामेव लोकानामसौ पूज्यो यथा हरिः
...तापादिपञ्चसंस्कारी नवेज्याकर्मकारकः । अर्थपञ्चकविद्विप्रो महाभागवतः स्मृतः ॥
...कर्मविधानेज्या क्षत्रियस्य विधीयते । तच्चिह्नैरङ्कनं सेवा तदीयानां च पूजनम् ॥
...न्त्रवर्णस्य जपनं नामसङ्कीर्तनं हरेः । वन्दनं च विशां प्रोक्तं षट्कर्मेज्या विधानतः
...नामसङ्कीर्तनं सेवा पूजनं वन्दनं तथा । अर्चनं च तदीयानां पञ्चेज्या शूद्रजन्मनः ॥३०
...साधारणेन सर्वेषां मानसेज्यान्नृणांप्रिये ॥ स्वाधिकारानुरूपं च कार्या चेज्या जगत्पतेः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अनन्यदेवताभक्तैरनन्यफलसाधकैः । वेदविद्ब्रह्मतत्त्वज्ञैर्वीतरागैर्मुमुक्षुभिः ॥
गुरुभक्तिसमायुक्तैः सुप्रसन्नैः सुसाधुभिः । ब्राह्मणैरितरैश्चाऽपि पूजनीयो हरिः
यथोचिता च वर्णस्य कार्या इज्या हरेर्नृणाम् ।
वर्णाश्रमानुरूपं च कर्त्तव्यं वैष्णवैः शुभैः ॥ ३४ ॥
श्रुतिस्मृत्युदितं सम्यङ्नित्यमत्र समाचरेत् । श्रुतिस्मृत्युक्तकर्माणि नातिक्रामेत
श्रुतिस्मृत्युक्तमाचारं यो न सेवेत वैष्णवः । स च पाखण्डमापन्नो रौरवे नरके
तस्माद्वर्णानुरूपां वै कुर्यादिज्यां जगत्पतेः । तस्मात्स्मृत्युक्तमाचारं कुर्याद्वै
साधारणं हि सर्वेषां मानसेज्या शुभे नृणाम् । स्वाधिकारं निरीक्ष्यैव कर्म कुर्या
शमो दमस्तपः शौचं सत्यमामिषवर्जनम् । अस्तेयमेवाऽहिंसा च सर्वेषां धर्म
तस्माद्वर्णानुरूपेण पूजयेन्मधुसूदनम् । रात्रावन्ते समुत्थाय उपस्पृश्य यथा
नमस्कृत्य गुरून्स्वस्य संस्मरेदच्युतं हृदि । सहस्रनामभिर्भक्त्या कीर्तयेद्वा
बहिर्ग्रामात्समुत्सृज्य मलमूत्रं यथाविधि । शौचं कृत्वा यथान्यायमाचम्य प्रयत
दन्तधावनपूर्वं तु स्नानं कुर्याद्यथाविधि । आदाय तुलसीमूलमृदं तत्पत्रसंयुता
मूलमन्त्रेणाऽभिमन्त्र्य गायत्र्या च शुभानने ! ।
मन्त्रेणैवाऽनुलिप्ताङ्गः स्नायात्कृत्वाऽघमर्षणम् ॥ ४५ ॥
हरिपादोद्भवां गङ्गां तत्राऽऽवाह्य सुनिर्मले । निमज्ज्याऽऽशु जपेत्सूक्तमघमर्षणं
आचम्य मार्जनं कुर्यात्पौरुषोक्तक्रमादथ । पश्चादप्सु निमज्ज्याऽथ मूलमन्त्रं
अष्टाविंशतिवारं वा शतमष्टोत्तरं च वा । प्रार्थयेदभिमन्त्र्याऽथ जलं मन्त्रेण
आचम्य तर्पयेद्देवानृषींश्चैव पितॄंस्तथा । निपीड्य वस्त्रमान्यत् धौतवस्त्रेण
विमलां मृत्तिकां रम्यामादाय द्विजसत्तमः ।
मन्त्रेणैवाऽभिमन्त्र्याऽथ ललाटादिषु वैष्णवः ॥ ४६ ॥
धारयेदूर्ध्वपुण्ड्राणि यथासङ्ख्यमतन्द्रितः । उपास्य विधिवत्सन्ध्यां सावित्रीं च
संयतात्मा गृहं गत्वा पादौ प्रक्षाल्य वाग्यतः । आचम्यैकाग्रमनसा पूजामण्डप
रम्ये शुभ्रतरे पीठे पुष्पोपचयशोभिते । तस्मिन्निवेश्य देवं तं लक्ष्मीनारायणं

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

